# रामायणम्।

## सुन्दरकाण्डम्।

म ह र्षि वा ल्मी कि प्र णी त म्।

रामानुज-कृत-टीका-समेतम्।

श्रीयुक्तद्वारकानाथभञ्जमहानुभावस्याभ्यनुज्ञया

श्रीहेमचन्द्रभट्टाचार्य्येण

संशोधितं, प्रकाशितञ्च।

कलिकाता राजधान्यां

वाल्मीकि यन्त्रे

श्रीकालीकिङ्करचक्रवर्त्तिना

मुद्रितम्।

शकाब्दा १७९९।

# सुन्दरकाण्डम् ।



## प्रथमः सर्गः ।



ततो रावणनीतायाः सीतायाः शत्रुकर्षणः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १ ॥
दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन् कर्म वानरः ।
समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ॥ २ ॥
अथ वैदूर्य्यवर्णेषु शाद्वलेषु महाबलः ।
धीरः सलिलकल्पेषु विचचार यथासुखम् ॥ ३ ॥

अथ समुद्रकूर्दनमिच्छति स्म । तत इति । ततः शत्रुकर्षणो हनुमान् रावणनीतायाः रावणाहृतायाः सीतायाः । पदमवस्थितिस्थानम् अन्वेष्टुं चारणदेवजातिविशेषैराचरिते क्रियमाणसञ्चारे पथि आकाशमार्गे गमनाय इयेष ॥ १ ॥

निष्प्रतिद्वन्द्वं सहायान्तररहितं प्रतिबन्धरहितं च । अन्यैर्दुष्करं कर्म लङ्घनपूर्वं सीतान्वेषणकर्म समुदग्रमुन्नतं शिरो ग्रीवा च यस्य सः । अतएव गवां पतिर्वृष इव बभौ ॥ २ ॥

द्विजान् वित्रासयन् धीमान् उरसा पादपान् हरन्।
मृगांश्च सुबहून् निघ्नन् प्रवृद्ध इव केसरी ॥ ४ ॥
नीललोहितमाञ्जिष्ठपद्मवर्णैः सितासितैः।
स्वभावसिद्धैर्विमलैर्धातुभिः समलङ्कृतम् ॥ ५ ॥
कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः।
यक्षकिन्नरगन्धर्व्वैर्द्देवकल्पैः सपन्नगैः ॥ ६ ॥
स तस्य गिरिवर्य्यस्य तले नागवरायुते।
तिष्ठन् कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७ ॥
स सूर्य्याय महेन्द्राय पवनाय स्वयम्भुवे।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥ ८ ॥

वैदूर्य्यवर्णशाद्वलप्रदेशस्य समुद्रजलवत् श्यामत्वमृदुत्वाभ्यामुरसा प्लवनसदृशक्रियाकारिकोरःपेषणेन प्रवृद्धः केसरीव विचचार ॥ ३ ॥ ४ ॥

नीललोहितो रक्तश्यामः। माञ्जिष्ठः कृष्णपाण्डुर इति कतकः। माञ्जिष्ठः पाटल इत्यन्ये। पद्मवर्णः प्रसिद्धः। सितासितैः कल्माषैः कृष्ण-पाण्डुरैरिति यावत्। स्वभावसिद्धैः शैलस्वभावसिद्धैरुक्तरूपैर्धातुभिः समलङ्कृतम्। कामरूपित्वादिविशेषणवद्भिर्यक्षादिभिरभीक्ष्णमाविष्टं यत्तस्य गिरिवर्य्यस्य तलं तत्र नागवरैरासमन्तायुते तिष्ठन् स कपिः ह्रदे नाग इव बभौ। गिरौ ह्रदसाम्यं श्यामलत्वेन ॥ ५ ॥ ६ ॥ ७ ॥

स्वयम्भुवे पवनाय पूयते येन स्वज्ञानेन योगिवृन्दं स पवनो भग-वान् प्रत्यक्तत्त्वभूतो रामः एतेन सकलविघ्ननिवारणायेष्टदेवताप्रार्थना-पूर्वं यात्राकर्त्तव्येति सदाचारो बोधितः ॥ ८ ॥

अञ्जलिं प्राङ्मुखं कुर्व्वन् पवनायात्मयोनये ।
ततो हि ववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९ ॥
प्लवगप्रवरैर्दृष्टः प्लवने कृतनिश्चयः ।
ववृधे रामवृद्ध्यर्थं समुद्र इव पर्व्वसु ॥ १० ॥
निष्प्रमाणशरीरः सन् लिलङ्घयिषुरर्णवम् ।
बाहुभ्यां पीड़यामास चरणाभ्याञ्च पर्व्वतम् ॥ ११ ॥
स चचालाचलश्चाशु मुहूर्त्तं कपिपीड़ितः ।
तरूणां पुष्पिताग्राणां सर्व्वं पुष्पमशातयत् ॥ १२ ॥
तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना ।
सर्व्वतः संवृतः शैलो बभौ पुष्पमयो यथा ॥ १३ ॥
तेन चोत्तमवीर्य्येण पीड्यमानः स पर्व्वतः ।
सलिलं सम्प्रसुस्राव मदमत्त इव द्विपः ॥ १४ ॥

आत्मयोनये पवनाय स्वजनकवायवे इत्यर्थः । दक्षिणः कुशलः ॥ ९ ॥
रामवृद्ध्यर्थं रामाभ्युदयाय ॥ १० ॥
निष्प्रमाणशरीरः परिच्छेदातिक्रान्तदेहः । पीड़यामास । लिलङ्घयिषासन्नाहवशतः ॥ ११ ॥
एकेन पीड़नव्यापारेण मुहूर्त्तपर्य्यन्तं चलनम् । अशातयत् पर्वतः कर्त्ता चलनं करणम् ॥ १२ ॥
पुष्पमयो यथा । पुष्पप्रचुरः स्वयमिवेत्यर्थः ॥ १३ ॥
उत्तमवीर्य्येण तेन पीड्यमानः स पर्वतः सलिलं प्रसुस्राव ॥ १४ ॥

पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्व्वतः।
रीतीर्निवर्त्तयामास काञ्चनाञ्जनराजतीः॥ १५॥
मुमोच च शिलाः शैलो विशालाः समनःशिलाः।
मध्यमेनार्चिषा जुष्टो धूमराजिरिवानलः॥ १६॥
हरिणा पीड्यमानेन पीड्यमानानि सर्व्वतः।
गुहाविष्टानि सत्त्वानि विनेदुर्विकृतैः स्वरैः॥ १७॥
स महान् सत्त्वसन्नादः शैलपीडानिमित्तजः।
पृथिवीं पूरयामास दिशश्चोपवनानि च॥ १८॥
शिरोभिः पृथुभिर्नागा व्यक्तस्वस्तिकलक्षणैः।
वमन्तः पावकं घोरं ददंशुर्दशनैः शिलाः॥ १९॥

उक्तार्थस्यैव विवरणं पीड्यमान इति। काञ्चनाञ्जनराजतीस्तदाभा रीतीः स्रोतः प्रकारान्निवर्त्तयामास तदाभत्वमुपाधिकृतम्॥ १५॥

किञ्च स शैलः। समनःशिला विशालाः शिला मुमोच निपीडनात्। अतएव मध्यमेन मध्यभागेनार्चिषा ज्वालया जुष्टो योऽनलस्तस्य धूमराजिरिव बभासित्यर्थः। यस्येत्यध्याहारः। धूमराजिरिवेति कतकपाठः। तीर्थस्तु मध्यमेनार्चिषा मध्यमास्ययाऽग्निजिह्वया जुष्टः विशिष्टोऽग्निधूमराजीरिव धूमनिर्य्यासानिवेत्यर्थः धूमराजीरिवेति च पाठ इत्याह॥ १६॥

हरिणा हनुमता पीड्यमानेन पर्वतेन पीड्यमानानि सत्वानि॥ १७॥

स महासत्वेति पाठे महासत्वा महाजन्तवस्तेषां सन्नाद इति तीर्थः। स महान् सत्वसन्नाद इति पाठान्तरम्॥ १८॥

तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः ।
जज्वलुः पावकोद्दीप्ताः विभिदुश्च सहस्रधा ॥ २० ॥
यानि त्वौषधजालानि तस्मिन् जातानि पर्व्वते ।
विषघ्नान्यपि नागानां न शेकुः शमितुं विषम् ॥ २१ ॥
भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः ।
त्रस्ता विद्याधरास्तस्मादुत्पेतुः स्त्रीगणैः सह ॥ २२ ॥
पानभूमिगतं हित्वा हैममासनभाजनम् ।
पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥ २३ ॥
लेह्यानुच्चावचान् भक्ष्यान् मांसानि विविधानि च ।
आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून् ॥ २४ ॥
कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः ।
रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥ २५ ॥

स्वस्तिकः फणास्थनीलरेखा तच्चिह्नैः शिरोभिरुपलक्षिताः ददंशुः पीड़ाजनितक्रोधवशात् ॥ १९ ॥

सविषैस्तैः सर्पैर्दष्टास्त्यः पावकोद्दीप्ता इव जज्वलुः बिभिदुर्भिन्ना बभूवुश्च ॥ २० ॥

शमितुं शमयितुम् ॥ २१ ॥

भूतैर्ब्रह्मरक्षःप्रभृतिमहाभूतैः ॥ २२ ॥

हित्वेत्यत्र विद्याधराः कर्त्तारः ॥ २३ ॥

आर्षभाणि ऋषभचर्मनिर्मितानि चर्माणि फलकानि त्सरुः खड्गमुष्टिः ॥ २४ ॥

हारनूपुरकेयूरपारिहार्य्यधरास्त्रियः।
विस्मिताः सस्मितास्तस्थुराकाशे रमणैः सह ॥ २६ ॥
दर्शयन्तो महाविद्यां विद्याधरमहर्षयः।
सहितास्तस्थुराकाशे वीचांचक्रुश्च पर्व्वतम् ॥ २७ ॥
शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम्।
चारणानाञ्च सिद्धानां स्थितानां विमलेऽम्बरे ॥ २८ ॥
एष पर्व्वतसङ्काशो हनुमान् मारुतात्मजः।
तितीर्षति महावेगः समुद्रं वरुणालयम् ॥ २९ ॥
रामार्थं वानरार्थञ्च चिकीर्षन् कर्म्मदुष्करम्।
समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥ ३० ॥
इति विद्याधरा वाचः श्रुत्वा तेषां तपस्विनाम्।
तमप्रमेयं ददृशुः पर्व्वते वानरर्षभम् ॥ ३१ ॥
दुधुवे च स रोमाणि चकम्पे चानलोपमः।

हताः कण्ठेषु गुणाः स्रजो येषां ते क्षीबा मत्ताः। पुष्करं पद्मम् ॥ २५ ॥

परिहारशब्दः श्रेष्ठवाचीति कतकः। पारिहार्य्या वलय इति तीर्थः ॥ २६ ॥

एतदग्रे श्लोकद्वयं प्रक्षिप्तं क्वचिदिति कतकः। तेषां तपस्विनाम् आकाशचारितपस्विनां वाचः एष पर्वतसङ्काश इत्यादिश्लोकत्रयरूपाः श्रुत्वा विद्याधरास्तमप्रमेयं ददृशुः। तदाकर्णनात्पूर्वन्तु भूतैरयं गिरिर्भिद्यत इति ज्ञातवन्तः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

ननाद च महानादं सुमहानिव तोयदः ॥ ३२ ॥
आनुपूर्व्वाच्च वृत्तं तल्लाङ्गूलं लोमभिश्चितम् ।
उत्पतिष्यन् विचिक्षेप पक्षिराज इवोरगम् ॥ ३३ ॥
तस्य लाङ्गूलमाविद्धमतिवेगस्य पृष्ठतः ।
ददृशे गरुड़ेनेव ह्रियमाणो महोरगः ॥ ३४ ॥
बाहू संस्तम्भयामास महापरिघसन्निभौ ।
आससाद कपिः कथ्यांश्चरणौ सञ्चुकोच च ॥ ३५ ॥
संहृत्य च भुजौ श्रीमांस्तथैव च शिरोधराम् ।
तेजः सत्त्वं तथा वीर्य्यमाविवेश स वीर्य्यवान् ॥ ३६ ॥
मार्गमालोकयन् दूरादूर्द्धप्रणिहितेक्षणः ।
रुरोध हृदये प्राणानाकाशमवलोकयन् ॥ ३७ ॥

दुधुवे च स हनूमान् ॥ ३२ ॥
आनुपूर्व्यात् वृत्तं त्रिवलयं लाङ्गूलं विचिक्षेपेत्यन्वयः ॥ ३३ ॥
आविद्धम् आस्फालितं भुग्नञ्च ॥ ३४ ॥
बाहूसंस्तम्भयामासेति उत्प्लवनसन्नाहाभिनयः बाह्वोः संस्तम्भनं नाम पर्वतोपरिदृढ़प्रतिष्ठापनम् । कपिः कथ्यां कटिप्रदेशे आससाद कायप्रसारणात् क्षणोटभूत् । उरः शिरसोरूर्द्धप्रसारणे सपृष्ठचरण-भागस्याधःसङ्कोचने तथात्वं कटिदेशस्येति बोध्यम् ॥ ३५ ॥
भुजौ संहृत्य अंसप्रदेशे सङ्कुच्य शिरोधरां ग्रीवां कण्ठदेशे सङ्कुच्य। तेजः पराभिभवसामर्थ्यम् । सत्त्वं बलं शारीरम् । वीर्य्य-मान्तरं बलम् ॥ ३६ ॥

यङ्घ्रीं दृढमवस्थानं कृत्वा स कपिकुञ्जरः।
निकुच्य कर्णौ हनुमान् उत्पतिष्यन् महाबलः॥ ३८॥
वानरान् वानरश्रेष्ठ इदं वचनमब्रवीत्।
यथा राघवनिर्म्मुक्तः शरः श्वसनविक्रमः॥ ३९॥
गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम्।
न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम्॥ ४०॥
अनेनैव हि वेगेन गमिष्यामि सुरालयम्।
यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः॥ ४१॥
बद्धा राक्षसराजानमानयिष्यामि रावणम्।
सर्व्वथा कृतकार्य्योऽहमेष्यामि सह सीतया॥ ४२॥
आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम्।

दूरान्मार्गमालोकयन्। अतएवोर्द्धप्रणिहितेक्षणः हृदये प्राण-प्रतिष्ठास्थाने॥ ३७॥

कर्णौ निकुच्य सङ्कुच्य उत्पतनसन्नाहवशाद्धि कर्णसङ्कोचो भवति॥ ३८॥

श्वसनस्य वायोरिव विक्रमो वेगो यस्य सः॥ ३९॥

तद्वद्गमिष्यामि। अनेन तद्वदेव गत्वा कृतकार्य्यं आगमिष्यामीति सूचितम्। तस्यैव प्रपञ्चो नहीत्यादि॥ ४०॥

अनेनैव एवंविधेनैव॥ ४१॥

आनयिष्यामि आनेष्यामि। सीतया सह मिलित्वेति शेषः॥ ४२॥

एवमुक्त्वा तु हनुमान् वानरो वानरोत्तमः ॥ ४३ ॥
उत्पपाताथ वेगेन वेगवानविचारयन् ।
सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥ ४४ ॥
समुत्पतति वेगात्तु वेगात्ते नगरोहिणः ।
संहृत्य विटपान् सर्व्वान् समुत्पेतुः समन्ततः ॥ ४५ ॥
स मत्तकोयष्टिभकान् पादपान् पुष्पशालिनः ।
उद्वहन्नुरुवेगेन जगाम विमलेऽम्बरे ॥ ४६ ॥
उरुवेगोत्थिता वृक्षा मुहूर्त्तं कपिमन्वयुः ।
प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥ ४७ ॥
तमूरुवेगोन्मथिताः सालाश्चान्ये नगोत्तमाः ।
अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥ ४८ ॥
सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः ।

समुत्पात्येति । ओषधिपर्वतोत्पाटनवदिति भावः ॥ ४३ ॥

अविचारयन् लङ्घनक्लेशमप्यगणयन् । तस्यैव प्रपञ्चनं सुपर्ण-मित्यादि ॥ ४४ ॥

वेगाद्धनूमति समुत्पतति सति ते नगरोहिणः पर्वतस्थवृक्षाः सर्वान् विटपान् सर्व्वाः शाखाः संहृत्य संक्षिप्य वेगात् समुत्पेतुः ॥ ४५ ॥

मत्ताः कोयष्टिभा येषु तान् । कोयष्टिको यष्टिभौ पर्य्यायौ ॥ ४६ ॥ ४७ ॥

सालाः सर्ज्जवृक्षाः । सैन्यशब्दोऽर्द्धर्चादिः ॥ ४८ ॥

हनूमान् पर्व्वताकारो बभूवाद्भुतदर्शनः ॥ ४९ ॥
सारवन्तोऽथ ये वृक्षा न्यमज्जन् लवणाम्भसि ।
भयादिव महेन्द्रस्य पर्व्वता वरुणालये ॥ ५० ॥
स नानाकुसुमैः कीर्णः कपिः साङ्कुरकोरकैः ।
शुशुभे मेघसङ्काशः खद्योतैरिव पर्व्वतः ॥ ५१ ॥
विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः ।
व्यवशीर्य्यन्त सलिले निवृत्ताः सुहृदो यथा ॥ ५२ ॥
लघुत्वेनोपपन्नं तद्विचित्रं सागरेऽपतत् ।
द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥ ५३ ॥

पर्वताकारः। तत्त्वं महत्त्वेन पुष्पितवृक्षवत्त्वेन च ॥ ४९ ॥

सारवन्तो गुरुत्वातिशययुक्ताः खदिरादयस्ते गुरुत्वाल्लवणाम्भसि न्यमज्जन्। अर्थादन्ये लघवः सहैव गता इति बोध्यम्। महेन्द्रस्य भयात् पक्षच्छेदभयात् पर्वता इव न्यमज्जन् ॥ ५० ॥

नानाकुसुमैः स्वानुयायिद्रुमीयैः साङ्कुरकोरकैः कानिचित् कुसुमानि अङ्कुरितानि कानिचित् कोरकरूपाणि कानिचित् विकसितानीत्यर्थः ॥ ५१ ॥

तस्य हनूमतो वेगेन विमुक्तास्ततो विभक्तास्ते वृक्षाः सलिले व्यवशीर्य्यन्त आर्षोऽडभावः। सुहृदो यथा बन्धुप्रस्थापनार्थं गताः सुहृदो तान् प्रस्थाप्य निवर्त्तन्ते तद्वत् ॥ ५२ ॥

अपतदिति च्छेदः। यदपतत्तल्लघुत्वेनोपपन्नम् उपपत्तिमत् ॥ ५३ ॥

पुष्पौघेण सुगन्धेन नानावर्णेन वानरः।
बभौ मेघ इवोद्यन् वै विद्युद्गणविभूषितः॥ ५४॥
तस्य वेगसमुद्भूतैः पुष्पैस्तोयमदृश्यत।
ताराभिरिव रामाभिरुदिताभिरिवाम्बरम्॥ ५५॥
तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ।
पर्व्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ॥ ५६॥
पिबन्निव बभौ चापि सोर्मिजालं महार्णवम्।
पिपासुरिव चाकाशं ददृशे स महाकपिः॥ ५७॥
तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः।
नयने विप्रकाशेते पर्व्वतस्थाविवानलौ॥ ५८॥
पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले।
चक्षुषी सम्प्रकाशेते चन्द्रसूर्य्याविव स्थितौ॥ ५९॥

सर्ववर्णानां विद्युत्सु सत्त्वात् नानावर्णपुष्पोद्यानबद्धस्य सविद्युद्गण-मेघोपमा॥ ५४॥

रामाभिः रमणीयाभिः॥ ५५॥ ५६॥

निवृत्तवक्त्रत्वात् पिबन्निवेति। अधोवक्त्रत्वे इयमुत्प्रेक्षा। ऊर्द्ध-वक्त्रत्वे आकाशं पिपासुरिवेति॥ ५७॥

विप्रकाशेते विशेषेण प्रकाशेते स्म। अनलौ दावानलौ॥ ५८॥

पिङ्गे पिङ्गलवर्णे। परिमण्डले परितो बद्धप्रभामण्डले स्थितौ चन्द्र-सूर्याविव एकगिरौ उदये पिङ्गलमण्डलतयाऽवस्थितौ चन्द्रसूर्य्या-विवेत्यर्थः॥ ५९॥

मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ।
सन्ध्यया समभिस्पृष्टं यथा स्यात् सूर्य्यमण्डलम्॥ ६०॥
लाङ्गूलञ्च समाविद्धं प्लवमानस्य शोभते।
अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितम्॥ ६१॥
लाङ्गूलचक्रो हनुमान् शुक्लदंष्ट्रोऽनिलात्मजः।
व्यरोचत महाप्राज्ञः परिवेषीव भास्करः॥ ६२॥
स्फिग्देशेनाभिताम्रेण रराज स महाकपिः।
महता दारितेनेव गिरिर्गैरिकधातुना॥ ६३॥
तस्य वानरसिंहस्य प्लवमानस्य सागरम्।
कक्षान्तरगतो वायुर्जीमूत इव गर्जति॥ ६४॥
खे यथा निपतत्युल्का उत्तरान्ताद्विनिःसृता।
दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः॥ ६५॥

नासिकया युक्तमिति शेषः। सन्ध्याकालिकं सूर्य्यमण्डलं यथा तथा बभावित्यर्थः॥ ६०॥ ६१॥

शुक्लदंष्ट्रत्वं स्वरूपकथनमात्रं न तु परिवेषिभास्करो परमोपयोगि॥ ६२॥

स्फिग्देशेन कटिप्रदेशेन तन्मात्रस्यातिताम्रत्ववशात् अन्यत्राल्पताम्रत्वम् अतएव दारितगैरिकधातुयुक्तगिर्युपमा॥ ६३॥

जीमूते इति सप्तम्यन्त इति कतकः गर्जति जगर्ज॥ ६४॥

उत्तरान्तादुत्तरोर्द्धदिग्भागात्। सानुबन्धा सूक्ष्मोल्कान्तरानुबद्धा इदं विशेषणं पुच्छसाहित्यात्॥ ६५॥

पतत्पतङ्गसङ्काशो व्यायतः शुशुभे कपिः।
प्रवृद्ध इव मातङ्गः कच्यया बध्यमानया॥ ६६॥
उपरिष्टाच्छरीरेण छायया चावगाढया।
सागरे मारुताविष्टा नौरिवासीत्तदा कपिः॥ ६७॥
यं यं देशं समुद्रस्य जगाम स महाकपिः।
स तु तस्याङ्गवेगेन सोन्माद इव लक्ष्यते॥ ६८॥
सागरस्योर्मिजालानामुरसा शैलवर्ष्मणा।
अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः॥ ६९॥
कपिवातश्च बलवान् मेघवातश्च निर्गतः।

पतत्पतङ्गसङ्काशः गच्छत्सूर्य्यसङ्काशः व्यायतो दीर्घः कपिः वस्त्रेण बध्यमानया कच्यया गजमध्यबन्धनरज्ज्वा युक्तः प्रवृद्धो मातङ्ग इव बभौ। कच्याप्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने इति॥ ६६॥

उपरिष्टात् खे गच्छता स्वशरीरेणाधःसागरेवगाढया स्वस्य छायया प्रतिबिम्बेन लक्षितः सः सागरे मारुताविष्टा नौरिवासीत्। नौश्चोपरि विद्यमानपदार्थेन सह सागरे वायुवशाद्वेगेन चञ्चला गच्छतीति तदुपमा॥ ६७॥

सोन्माद इव सापस्मार इव। घूर्णनफेनवमनविक्रोशनादिविकार-साम्यात्॥ ६८॥

ऊर्मिजालानामभिघ्नन् कर्मणः शेषत्वविवक्षया षष्ठी। तान्यभिघ्नन्निति यावत्। शैलसदृशेन। अनेन सागरोर्मीणामत्युन्नतत्वं सूचितम्॥ ६९॥

सागरं भीमनिर्ह्रादं कम्पयामास दुर्धरम्॥ ७० ॥
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि।
पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी॥ ७१ ॥
मेरुमन्दरसङ्काशानुद्गतान् सुमहार्णवे।
अत्यक्रामन् महावेगस्तरङ्गान् गणयन्निव॥ ७२ ॥
तस्य वेगसमुद्घुष्टं जलं सजलदं तदा।
अम्बरस्थं विबभ्राजे शरदभ्रमिवाततम्॥ ७३ ॥
तिमिनक्रझषाः कूर्मा दृश्यन्ते विवृतास्तदा।
वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम्॥ ७४ ॥
क्रममाणं समीक्ष्याथ भुजगाः सागरङ्गमाः।
व्योम्नि तं कपिशार्दूलं सुपर्णमिव मेनिरे॥ ७५ ॥
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता।

कपिवातः कपिनोत्थापितः वातः मेघवातः मेघमण्डलगो वातः॥ ७० ॥
रोदसी द्यावापृथिव्यौ विकिरन्निव पृथक् क्षिपन्निव॥ ७१ ॥
अतीत्यातीत्यगमनाद्गिणयन्निवेत्युत्प्रेक्षा॥ ७२ ॥
तस्य वेगेन समुद्घुष्टम् ऊर्द्धक्षिप्तम् अतएव सजलदं जलदसहचरं मेघमण्डलपर्य्यन्तमूर्द्धं गतम् अम्बरस्थं जलमाततं विततं शरदभ्रमिव शरन्मेघ इव बभौ शुक्लत्वादिति भावः॥ ७३ ॥
विवृताः वेगाज्जलोत्सारणेन व्यक्तदेहाः वस्त्रापकर्षणेन वस्त्रापहारेण शरीराणि अवयवाः॥ ७४ ॥ ७५ ॥

छाया वानरसिंहस्य जवे चारुतराऽभवत् ॥ ७६ ॥
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ।
तस्य सा शुशुभे छाया पतिता लवणाम्भसि ॥ ७७ ॥
शुशुभे स महातेजा महाकायो महाकपिः ।
वायुमार्गे निरालम्बे पक्षवानिव पर्व्वतः ॥ ७८ ॥
येनासौ याति बलवान् वेगेन कपिकुञ्जरः ।
तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ॥ ७९ ॥
आपाते पक्षिसङ्घानां पक्षिराज इव व्रजन् ।
हनूमान् मेघजालानि प्रकर्षन् मारुतो यथा ॥ ८० ॥
पाण्डुरारुणवर्णानि नीलमञ्जिष्ठकानि च ।
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥ ८१ ॥
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।

छायाप्रमाणवर्णनेन तच्छरीरप्रमाणमपि वर्णितप्रायम्। इयं माध्याह्निकी छाया ॥ ७६ ॥

श्वेताभ्रघनराजीव श्वेताभ्रयुक्तमेघपङ्क्तिवत्तस्य छायया शुशुभे शुक्ल-दंष्ट्रादिना नानावर्णत्वादुक्तोपमानिर्वाहः ॥ ७७ ॥ ७८ ॥

द्रोणी हर्म्यादौ जलनिर्गमकाष्ठयन्त्रं तज्जलधारायुक्त इव कृतो द्रोणीकृतः मेघेषु तदाघातेन तेभ्यो जलस्रवणादिति भावः ॥ ७९ ॥

आपतन्त्यस्मिन्नित्यापातो मार्गः पाण्डुरत्वादिगुणकानि मेघजालानि प्रकर्षन्मारुतो यथा तथा बभूवेति शेषः ॥ ८० ॥

प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव दृश्यते ॥ ८२ ॥
प्लवमानन्तु तं दृष्ट्वा प्लवगं त्वरितं तदा ।
ववृषुस्तत्र पुष्पाणि देवगन्धर्व्वदानवाः ॥ ८३ ॥
ततापं नहि तं सूर्य्यः प्लवन्तं वानरेश्वरम् ।
सिषेवे च तदा वायू रामकार्य्यार्थसिद्धये ॥ ८४ ॥
ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा ।
जगुश्च देवगन्धर्व्वाः प्रशंसन्तो वनौकसम् ॥ ८५ ॥
नागाश्च तुष्टुवुर्यक्षा रक्षांसि विविधानि च ।
प्रेक्ष्य सर्व्वे कपिवरं सहसा विगतक्लमम् ॥ ८६ ॥
तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति ।
इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ॥ ८७ ॥
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः ।
करिष्यामि भविष्यामि सर्व्ववाच्यो विवक्षताम् ॥ ८८ ॥

कपिना कृष्यमाणानि महाभ्राणि चकाशिरे । मारुतेन कृष्यमाणानीवेति शेषः ॥ ८१ ॥ ८२ ॥

तत्र प्लवगे ॥ ८३ ॥

तं न हि ततापेत्यन्वयः । वायुः सिषेवे श्रमापनयनायेति भावः ॥ ८४ ॥ ८५ ॥

कपिवरं विगतक्लमं वीक्ष्य नागादयस्तुष्टुवुः ॥ ८६ ॥

इक्ष्वाकुकुलस्य स्वोत्पादकस्य मानं सत्कारमर्थयते तथाभूतः ॥ ८७ ॥

अहमिक्ष्वाकुनाथेन सागरेण विवर्द्धितः।
इक्ष्वाकुसचिवश्चायं तन्नार्हत्यवसादितुम् ॥ ८९ ॥
तथा मया विधातव्यं विश्रमेत यथा कपिः।
शेषञ्च मयि विश्रान्तः सुखेने सोऽतितरिष्यति ॥ ९० ॥
इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि।
हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ९१ ॥
त्वमिहासुरसङ्घानां देव! राज्ञा महात्मना।
पातालनिलयानां हि परिघः सन्निवेशितः ॥ ९२ ॥
त्वमेषां ज्ञातवीर्य्याणां पुनरेवोत्पतिष्यताम्।
पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥ ९३ ॥

विवच्यतां वागिन्द्रियवत्प्राणिनां सर्ववाच्यः सर्वं वाच्यं निन्दा यस्मिन् तादृशो भविष्यामि सर्वनिन्दास्पदं भविष्यामीत्यर्थः ॥ ८८ ॥

उक्तमेव विवृणोति। अहमिति। तत्तस्मादेष अवसादितुम् अवसतुं श्रमं गन्तुं नार्हति। सागरेण विवर्धित इत्युक्त्या कश्चिद्देशः सगरखातस्याप्येतत्सम्बन्ध इति ज्ञायते ॥ ८९ ॥

शेषं मार्गशेषम् ॥ ९० ॥

अम्भसि स्वाम्भसि छन्नं हिरण्यनाभं हिरण्यप्रधानं तन्मयमिति यावत्। नाभिः प्रधानेकस्तूर्य्यामिति ॥ ९१ ॥

परिघ इति। पक्षच्छेदभयात् समुद्रप्रवेशानन्तरं पातालस्थराक्षसनिरोधार्थं द्वारनिरोधकपरिघवन्मैनाकः स्थापित इत्यर्थः ॥ ९२ ॥

ज्ञातवीर्य्याणां देवराजेनेति शेषः। एषामसुराणाम् ॥ ९३ ॥

तिर्य्यगूर्द्ध्मधश्चैव शक्तिस्ते शैल ! वर्द्धितुम्।
तस्मात् सञ्चोदयामि त्वामुत्तिष्ठ गिरिसत्तम ! ॥ ९४ ॥
स एष कपिशार्दूलस्त्वामुपर्य्येति वीर्य्यवान्।
हनूमान् रामकार्य्यार्थी भीमकर्म्मा खमाप्लुतः।
श्रमञ्च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥ ९५ ॥
हिरण्यगर्भो मैनाको निशम्य लवणाम्भसः।
उत्पपात जलात्तूर्णं महाद्रुमलतावृतः ॥ ९६ ॥
स सागरजलं भित्वा बभूवात्युच्छ्रितस्तदा।
यथा जलधरं भित्वा दीप्तरश्मिर्दिवाकरः ॥ ९७ ॥
स महात्मा मुहूर्त्तेन पर्व्वतः सलिलावृतः।
दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥ ९८ ॥

शक्तिस्ते चास्तीति शेषः। तस्मात् पिहितपातालमुख एव सन् वृद्धिशक्तया वर्द्धमानः सन्नूर्द्धमुत्तिष्ठ ॥ ९४ ॥

उपर्य्येति तवोपरिप्रदेशं प्राप्नोति। तस्माद्विश्रामय त्वमुत्तिष्ठेति पूर्व्वेणान्वयः। एतदुत्तरं हनूमान् रामकार्य्यार्थी भीमकर्म्मा खमाप्लुतः। श्रमञ्च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसीति प्राचीनः पाठः पाठः। अत्र खमाप्लुत इत्यनन्तरं केचित् श्लोकाः प्रक्षिप्ताः परैरिति कतकः। यतो रामकार्य्यार्थी यतस्त श्राम्यति ततस्तस्य श्रमं समीक्ष्योत्थातुमर्हसि ॥ ९५ ॥

लवणाम्भसो वचो निशम्येत्यर्थः ॥ ९६ ॥ ९७ ॥ ९८ ॥

शातकुम्भमयैः शृङ्गैः सकिन्नरमहोरगैः।
आदित्योदयसङ्काशैरालिखद्भिरिवाम्बरम् ॥ ९९ ॥
तस्य जाम्बूनदैः शृङ्गैः पर्व्वतस्य समुत्थितैः।
आकाशं शस्त्रसङ्काशमभवत् काञ्चनप्रभम् ॥ १०० ॥
जातरूपमयैः शृङ्गैर्भ्राजमानैर्महाप्रभैः।
आदित्यशतसङ्काशः सोऽभवद्गिरिसत्तमः ॥ १०१ ॥
समुत्थितमसङ्गेन हनूमानग्रतः स्थितम्।
मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥ १०२ ॥
स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः।
उरसा पातयामास जीमूतमिव मारुतः ॥ १०३ ॥
स तदा सादितस्तेन कपिना पर्व्वतोत्तमः।
बुद्ध्वा तस्य हरेर्वेगं जहर्ष च ननाद च ॥ १०४ ॥

एतदुत्तरं शातकुम्भमयैरित्यादि अत्रापि द्विच श्लोकप्रक्षेपः। परेषां। हिरण्यनाभत्वविवरणं शातकुम्भमयैरिति। आदित्योदय-सङ्काशैरिति उपलक्षित इति शेषः ॥ ९९ ॥

शस्त्रसङ्काशं शस्त्रवत् श्याममाकाशं काञ्चनप्रभमभवत् ॥ १०० ॥

॥ १०१ ॥

असङ्गेन अविलम्बेन ॥ १०२ ॥

पातयामास। तमत्यर्थमुच्छ्रितं दृष्ट्वा तच्छृङ्गं पातयामासेत्यर्थः ॥ १०३ ॥

सादितोऽवसादितोऽधःकृत इति यावत्। जहर्ष च ननाद चेति

तमाकाशगतं वीरमाकाशे समुपस्थितः ।
प्रीतो हृष्टमना वाक्यमब्रवीत् पर्व्वतः कपिम् ॥ १०५ ॥
मानुषं धारयन् रूपमात्मनः शिखरे स्थितः ।
दुष्करं कृतवान् कर्म्म त्वमिदं वानरोत्तम ! ॥ १०६ ॥
निपत्य मम शृङ्गेषु सुखं विश्रम्य गम्यताम् ।
राघवस्य कुले जातैरुदधिः परिवर्द्धितः ॥ १०७ ॥
स त्वां रामहिते युक्तं प्रत्यर्च्चयति सागरः ।
कृते च प्रतिकर्त्तव्यमेष धर्म्मः सनातनः ॥ १०८ ॥
सोऽयं तत्प्रतिकारार्थी त्वत्तः सम्मानमर्हति ।
त्वन्निमित्तमनेनाहं बहुमानात् प्रचोदितः ॥ १०९ ॥
योजनानां शतञ्चापि कपिरेष खमाप्लुतः ।
तव सानुषु विश्रान्तः शेषं प्रक्रमतामिति ॥ ११० ॥

प्राचीनः पाठः । बलवैभवं दृष्ट्वा अपूर्वं खोत्थानप्रयोजनाविदमाय ममाद्य पूर्व्वं कृतवान् ननन्देतित्वाधुनिककल्पितः पाठः ॥ १०४ ॥

तदेव विवृणोति तमिति ॥ १०५ ॥ १०६ ॥

राघवस्य कुले जातैः सगरपुत्रैः ॥ १०७ ॥

कृतमुपकारः ॥ १०८ ॥

सोऽयं राघवकुलजः सागरः तत्प्रतिकारार्थी तत्कृतप्रत्युपकारार्थी त्वत्तः सत्क्रियमाणाद्द्वारभूतात् सम्मानं राघवकुलपूजामर्हति त्वन्निमित्तं त्वत्सत्कारार्थं प्रचोदितः प्रेरितः ॥ १०९ ॥

तिष्ठ त्वं हरिशार्दूल ! मयि विश्रम्य गम्यताम् ।
तदिदं गन्धवत् स्वादु कन्दमूलफलं बहु ॥ १११ ॥
तदास्वाद्य हरिश्रेष्ठ ! विश्रान्तोऽथ गमिष्यसि ।
अस्माकमपि सम्बन्धः कपिमुख्य ! त्वयाऽस्ति वै ।
प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥ ११२ ॥
वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज ! ।
तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर ! ॥ ११३ ॥
अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता ।
धर्म्मं जिज्ञासमानेन किं पुनर्यादृशो भवान् ॥ ११४ ॥
त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ।
पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ! ॥ ११५ ॥

प्रेरणाप्रकारो योजमानामिति । योजनानां शतमपि प्रक्रमितुं खमाप्लुतः एषः कपिः शेषं प्रक्रान्तावशेषं तव सानुषु विश्रान्तः सन् प्रक्रमतामिति यतः प्रेरितोऽस्मि अतो मयि तिष्ठ स्थित्वा विश्रम्य पश्चाद्गम्यतामिति योजना अत्र तिष्ठ त्वमित्यर्धं प्रक्षिप्तमिति केचित् ॥११०॥

तत्स्वाद्यदिदं कन्दादि मयि बहु दृश्यते तदास्वाद्येत्यन्वयः ॥ १११ ॥

अस्माकमपि सम्बन्धः त्वत्साहाय्यकरणप्रयोजक इति शेषः । तं सम्बन्धं वक्तुमाह,—प्रख्यात इति । भवान् महागुणपरिग्रहः । बहुव्रीहिरयम् अतस्त्रिषु लोकेषु प्रख्यातः ॥ ११२ ॥

तादृशं त्वां ये वेगवन्तः प्लवगाः सन्ति तेषां मुख्यतमं मन्ये ॥ ११३ ॥

भवान् यादृशस्तादृशः पूज्य इति किं पुनरिति योजना ॥ ११४ ॥

पूजिते त्वयि धर्म्मज्ञे पूजां प्राप्नोति मारुतः।
तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ॥ ११६ ॥
पूर्व्व कृतयुगे तात! पर्व्वताः पक्षिणोऽभवन्।
तेऽपि जग्मुर्दिशः सर्व्वा गरुडा इव वेगिनः ॥ ११७ ॥
ततस्तेषु प्रयातेषु देवसङ्घाः सहर्षिभिः।
भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥ ११८ ॥
ततः क्रुद्धः सहस्राक्षः पर्व्वतानां शतक्रतुः।
पक्षांश्चिच्छेद वज्रेण ततः शतसहस्रशः ॥ ११९ ॥
स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट्।
ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥ १२० ॥
अस्मिन् लवणतोये च प्रक्षिप्तः प्लवगोत्तम!।
गुप्तपक्षः समग्रश्च तव पित्राभिरक्षितः ॥ १२१ ॥
ततोऽहं मानयामि त्वां मान्योऽसि मम मारुते!।
त्वया ममैष सम्बन्धः कपिमुख्य! महागुणः ॥ १२२ ॥

विवक्षितं प्राशस्त्यमेवाह,—त्वं हीति ॥ ११५ ॥

हनूमद्भारकमारुतपूजायां कारणान्तरमप्याह,—शृणु चापीति ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥

क्षिप्तः आकाशमुत्क्षिप्तः ॥ १२० ॥ १२१ ॥

ततः उक्तकारणादेषसम्बन्धः पूजाप्रयोजकः सख्यकपुत्रत्वरूपः ॥ १२२ ॥

अस्मिन्नेवं गते कार्य्ये सागरस्य ममैव च।
प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महामते!॥ १२३॥
श्रमं मोक्षय पूजाञ्च गृहाण हरिसत्तम!।
प्रीतिञ्च मम मान्यस्य प्रीतोऽस्मि तव दर्शनात्॥ १२४॥
एवमुक्तः कपिश्रेष्ठस्तन्नगोत्तममब्रवीत्।
प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम्॥ १२५॥
त्वरते कार्य्यकालो मे अहश्चाप्यतिवर्त्तते।
प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरा॥ १२६॥
इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः।
जगामाकाशमाविश्य वीर्य्यवान् प्रहसन्निव॥ १२७॥
स पर्व्वतसमुद्राभ्यां बहुमानादवेक्षितः।
पूजितश्चोपपन्नाभिराशीर्भिरभिनन्दितः॥ १२८॥

अस्मिन् कार्य्ये प्रत्युपकाररूपे एवं गते सति चिरात् प्राप्ते सति मया समुद्रेण चेति शेषः। त्वं पूजास्वीकारेण तयोः प्रीतिं कर्त्तुमर्हसि॥ १२३॥

मान्यस्य वायुसम्बन्धात्तव पूज्यस्य मम प्रीतिं कुरु इति शेषः॥१२४॥

मन्युः पूजानङ्गीकारजं दैन्यम्॥ १२५॥ १२६॥

शैलमालभ्य स्पृष्ट्वा। *प्रहसन्निवेति एतावत् श्रवनेऽपि श्रममारोप्य स्थायं प्रयास एतयोरिति प्रहासः॥ १२७॥

उपपन्नाभिः तत्काले युक्ताभिः॥ १२८॥

अथोर्द्धं दूरमाप्लुत्य हित्वा शैलमहार्णवौ।
पितुः पन्थानमासाद्य जगाम विमलेऽम्बरे ॥ १२९ ॥
भूयश्चोर्द्धगतिं प्राप्य गिरिं तमवलोकयन्।
वायुसूनुर्निरालम्बो जगाम कपिकुञ्जरः ॥ १३० ॥
तद्द्वितीयं हनुमतो दृष्ट्वा कर्म्म सुदुष्करम्।
प्रशशंसुः सुराः सर्व्वे सिद्धाश्च परमर्षयः ॥ १३१ ॥
देवताश्चाभवन् हृष्टास्तत्रस्थास्तस्य कर्म्मणा।
काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः ॥ १३२ ॥
उवाच वचनं धीमान् परितोषात् सगद्गदम्।
सुनाभं पर्व्वतश्रेष्ठं स्वयमेव शचीपतिः ॥ १३३ ॥
हिरण्यनाभ! शैलेन्द्र! परितुष्टोऽस्मि ते भृशम्।
अभयं ते प्रयच्छामि गच्छ सौम्य! यथासुखम् ॥ १३४ ॥

अथ ऊर्द्धं यत्र देशे स्थितस्ततोऽपि बहूर्द्धं पितुः पन्थानं वायुमार्गम् ॥ १२९ ॥

भूय ऊर्द्धं ततोऽपि बहु ऊर्द्धं तं गिरिमधःप्रदेशवर्त्तिनमवलोकयन् ॥ १३० ॥

तद्द्वितीयं कर्म अविश्रम्यैव पुनरत्यूर्द्धपतनरूपं कर्म ॥ १३१ ॥

तत्रस्थाः मैनाकस्थाः गगनस्था वा तस्य काञ्चनस्य काञ्चनमयस्य सुनाभस्य शोभनमध्यस्य मैनाकस्य कर्मणा जलादुत्थानरूपेण देवता इन्द्रश्च तुष्टः ॥ १३२ ॥ १३३ ॥

अभयं सञ्जातपक्षच्छेदशङ्काजनितभयाभावम् ॥ १३४ ॥

साह्यं कृतं ते सुमहद्विक्रान्तस्य हनूमतः।
क्रमतो योजनशतं निर्भयस्य भये सति॥ १३५॥
रामस्यैष हितार्थेव याति दाशरथेः कपिः।
सत्क्रियां कुर्व्वता शक्त्या तोषितोऽस्मि दृढं त्वया॥ १३६॥
स तत् प्रहर्षमलभद्विपुलं पर्व्वतोत्तमः।
देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम्॥ १३७॥
स वै दत्तवरः शैलो बभूवावस्थितस्तदा।
हनूमांश्च मुहूर्त्तेन व्यतिचक्राम सागरम्॥ १३८॥
ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः।
अब्रुवन् सूर्य्यसङ्काशां सुरसां नागमातरम्॥ १३९॥
अयं वातात्मजः श्रीमान् प्लवते सागरोपरि।
हनूमान्नाम तस्य त्वं मुहूर्त्तं विघ्नमाचर॥ १४०॥
राक्षसं रूपमास्थाय सुघोरं पर्व्वतोपमम्।
दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभःस्पृशम्॥ १४१॥

निर्भयस्यापि भये सतीवोपकारार्थं साह्यं कृतं यतोऽतः परितुष्ट इत्यन्वयः॥ १३५॥ १३६। १३७॥

अवस्थितः अवान्तरमग्न इत्यर्थः। सागरं मैनाकाधिष्ठितसागरप्रदेशम्॥ १३८॥

अथ देवैर्ब्रह्मां प्रविष्टस्य हनूमतः कार्य्यक्षमबलपरीक्षार्थं सुरसाप्रवर्त्तनम्। तत इत्यादि॥ १३९॥ १४०॥

बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम्।
त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ॥ १४२ ॥
एवमुक्ता तु सा देवी दैवतैरभिसत्कृता।
समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ॥ १४३ ॥
विकृतञ्च विरूपञ्च सर्व्वस्य च भयावहम्।
प्लवमानं हनूमन्तमावृत्येदमुवाच ह ॥ १४४ ॥
मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ!।
अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ॥ १४५ ॥
वर एष पुरा दत्तो मम धात्रेति सत्वरा।
व्यादाय वक्त्रं विपुलं स्थिता सा मारुतेः पुरः ॥ १४६ ॥
एवमुक्तः सुरसया प्रहृष्टवदनोऽब्रवीत्।
रामो दाशरथिर्नाम प्रविष्टो दण्डकावनम् ॥ १४७ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्य्यया ॥ १४८ ॥

नभस्पृशमिति पुंस्त्वमार्षम्। वक्त्रशब्दोऽर्द्धर्चादिर्वा ॥ १४१ ॥
बलं ज्ञानबलम् उपायबलञ्च पराक्रमञ्च ज्ञातुमिच्छामहे। तदेव विवृणोति। त्वामिति ॥ १४२ ॥ १४३ ॥
भयस्य च भयावहमिति पाठे सर्वलोकभयस्यापीत्यर्थः ॥ १४४ ॥
ईश्वरैर्देवैः ॥ १४५ ॥
एष वरः पुर आगतस्य वदनप्रवेशरूपः इत्युक्तेति शेषः। सत्वरा त्वरासहिता सा सुरसा ॥ १४६ ॥

अस्य कार्य्यविषक्तस्य बद्धवैरस्य राक्षसैः।
तस्य सीता हृता भार्य्या रावणेन यशस्विनी ॥ १४९ ॥
तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात्।
कर्त्तुमर्हसि रामस्य साह्यं विषयवासिनी ॥ १५० ॥
अथवा मैथिलीं दृष्ट्वा रामञ्चाक्लिष्टकारिणम्।
आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ॥ १५१ ॥
एवमुक्ता हनुमता सुरसा कामरूपिणी।
अब्रवीन्नातिवर्त्तेन्मां कश्चिदेष वरो मम ॥ १५२ ॥
तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत्।
बलं जिज्ञासमाना सा नागमाता हनूमतः ॥ १५३ ॥

प्रहृष्टवदनः दत्तभक्ष्यवराया अपि सकाशान्निस्तारोपायज्ञानजो हर्षः ॥ १४७ ॥ १४८ ॥

कार्य्यविषक्तस्य मायामृगवधे प्रसक्तस्य बद्धवैरस्य शूर्पणखाविरूपकरणादिकर्मणेति शेषः ॥ १४९ ॥

रामसाह्यकरणे हेतुः रामस्य विषयवासिनीति तस्य सर्वाधिपतित्वात् ॥ १५० ॥

रामञ्चेति दृष्ट्वा वृत्तान्तञ्च विज्ञाप्येति शेषः ॥ १५१ ॥

कश्चिदपि मां नातिवर्त्तेत् अभक्षितो न गच्छेदित्यर्थः। परस्मैपदमार्षम् ॥ १५२ ॥

तं प्रयान्तं पुनरागच्छामीत्युक्त्या वरदानं श्रुत्वापि प्रयाणोन्मुखम्। हनूमतस्तस्य बलं जिज्ञासमाना सुरसा वाक्यमब्रवीत् ॥ १५३ ॥

निविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम !।
वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥ १५४ ॥
व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः ।
एवमुक्तः सुरसया क्रुद्धो वानरपुङ्गवः ॥ १५५ ॥
अब्रवीत् कुरु वै वक्त्रं येन मां विषहिष्यसि ।
इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायताम् ॥ १५६ ॥
दशयोजनविस्तारो हनूमानभवत्तदा ।
चकार सुरसाप्यास्यं विंशद्योजनमायतम् ॥ १५७ ॥
तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः स बुद्धिमान् ।
दीर्घजिह्वं सुरसया सुभीमं नरकोपमम् ॥ १५८ ॥
तद्दृष्ट्वा मेघसङ्काशं विंशद्योजनमायतम् ।
हनूमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ।
चकार सुरसा वक्त्रं चत्वारिंशत्तथोच्छ्रितम् ।
बभूव हनुमान् वीरः पञ्चाशद्योजनोच्छ्रितः ।

निविश्येति प्रविश्यैव गन्तव्यं यदि प्रक्तिरस्तीत्यर्थः। इत्यब्रवीदित्यन्वयः ॥ १५४ ॥ १५५ ॥

दशयोजनमायताम् आयतवक्त्रामित्यर्थः ॥ १५६ ॥

चकार सुरसाप्यास्यं विंशद्योजनमायतमित्यनन्तरम् तद्दृष्ट्वा व्यादितं त्वास्यमिति प्राचीनः पाठः। तद्दृष्ट्वा मेघसङ्काशमित्यादित्रिंशद्योजनमायतमित्यन्तश्लोकास्तु प्रक्षिप्ता इति कतकः ॥ १५७ ॥

चकार सुरसा वक्त्रं षष्टियोजनमुच्छ्रितम् ।
तदैव हनुमान् वीरः सप्ततिं योजनोच्छ्रितः ।
चकार सुरसा वक्त्रमशीतिं योजनोच्छ्रितम् ।
हनूमाननलप्रख्यो नवतिं योजनोच्छ्रितः ।
चकार सुरसा वक्त्रं शतयोजनमायतम् ।
स सङ्क्षिप्यात्मनः कायं जीमूत इव मारुतिः ।
तस्मिन् मुहूर्त्ते हनुमान् बभूवाङ्गुष्ठमात्रकः ॥ १५९ ॥
सोऽभिपद्याथ तद्वक्त्रं निष्पत्य च महाबलः ।
अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥ १६० ॥
प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि ! नमोऽस्तु ते ।
गमिष्ये यत्र वैदेही सत्यश्चासीद्वरस्तव ॥ १६१ ॥
तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ।
अब्रवीत् सुरसा देवी स्वेन रूपेण वानरम् ॥ १६२ ॥
अर्थसिद्ध्यै हरिश्रेष्ठ ! गच्छ सौम्य ! यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ॥ १६३ ॥

व्यादितं व्यात्तं दीर्घजिह्वत्वादिगुणविशिष्टं व्याप्तन्तस्या आस्यं दृष्ट्वेत्यन्वयः ॥ १५८ ॥ १५९ ॥ १६० ॥

इदं वचनमितीदं शब्दार्थः प्रविष्ट इति । दाक्षायणि दक्षप्रजापतिसन्ताने अतएव नतिः । सत्य आसीत् सत्यो जात इत्यर्थः । वदनप्रवेशरूपत्वात्तस्य ॥ १६१ ॥ १६२ ॥

तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम्।
साधु साध्विति भूतानि प्रशशंसुस्तदा हरिम्॥ १६४॥
स सागरमनाधृष्यमभ्येत्य वरुणालयम्।
जगामाकाशमाविश्य वेगेन गरुडोपमः॥ १६५॥
सेविते वारिधाराभिः पतगैश्च निषेविते।
चरिते कैशिकाचार्य्यैरैरावतनिषेविते॥ १६६॥
सिंहकुञ्जरशार्दूलपतगोरगवाहनैः।
विमानैः सम्पतद्भिश्च विमलैः समलङ्कृते॥ १६७॥
वज्राशनिसमस्पर्शैः पावकैरिव शोभिते।
कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरधिष्ठिते॥ १६८॥

अथ साऽनुजानाति। अर्थसिद्धौ इति। राघवेण त्वद्विज्ञापितवृत्तान्तेन समानय सङ्गमय॥ १६३॥

तत्तृतीयं सुरसा वक्त्रान्निष्क्रमणरूपम्॥ १६४॥ १६५॥

वारिधारासेवितत्वादिविशेषणके चन्द्रसूर्य्यपथे जगामेत्यन्वयः एकोनसप्ततितमेन। पतगैः पक्षिभिः कैशिकं गानन्तद्विद्या तदाचार्य्यैस्तुम्बुरुप्रभृतिगन्धर्वैश्चरिते सेविते। ऐरावतम् ऋजुदीर्घमिन्द्रधनुरिति तीर्थः। गजविशेष इत्यन्ये॥ १६६॥

पतगोरगाः पक्षिसर्पाः॥ १६७॥

वज्राशनिसमस्पर्शैस्तद्वत्प्राकाशकैः पावकैः यज्ञाग्निभिरिव स्वर्गजिद्भिरधिष्ठिते समाघातैरिति पाठे ताभ्यां तुल्य आघातोऽभिघातो येषां तैरित्यर्थः॥ १६८॥

वहता हव्यमत्यन्तं सेविते चित्रभानुना।
ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते ॥ १६९ ॥
महर्षिगणगन्धर्व्वनागयक्षसमाकुले।
विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ १७० ॥
देवराजगजाक्रान्ते चन्द्रसूर्य्यपथे शिवे।
विताने जीवलोकस्य विमले ब्रह्मनिर्म्मिते ॥ १७१ ॥
बहुशः सेविते वीरैर्विद्याधरगणैर्वृते।
जगाम वायुमार्गे च गरुत्मानिव मारुतिः ॥ १७२ ॥
हनूमान् मेघजालानि प्राकर्षन् मारुतो यथा।
कालागुरुसवर्णानि रक्तपीतसितानि च ॥ १७३ ॥
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे।
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥ १७४ ॥
प्रावृषीन्दुरिवाभाति निष्पतन् प्रविशंस्तथा।
प्रदृश्यमानः सर्व्वत्र हनूमान् मारुतात्मजः ॥ १७५ ॥
भेजेऽम्बरं निरालम्बं पक्षयुक्त इवाद्रिराट्।
प्लवमानन्तु तं दृष्ट्वा सिंहिका नाम राक्षसी ॥ १७६ ॥

चित्रभानुना पञ्चाग्निभिन्नोऽयमग्निश्चित्रभानुः ॥ १६९ ॥
विश्वे विश्वाश्रये विश्वावसुर्गन्धर्वराजः ॥ १७० ॥
देवराजानां गजाः पुण्डरीकादयः विताने अवकाशावरणवस्त्रे
चान्द्रवा इति प्रसिद्धे ॥ १७१ ॥ १७२ ॥ १७३ ॥ १७४ ॥ १७५ ॥ १७६ ॥

मनसा चिन्तयामास प्रवृद्धा कामरूपिणी।
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ॥ १७७ ॥
इदं मम महासत्त्वं चिरस्य वशमागतम्।
इति सञ्चिन्त्य मनसा छायामस्य समाक्षिपत् ॥ १७८ ॥
छायायां गृह्यमाणायां चिन्तयामास वानरः।
समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः ॥ १७९ ॥
प्रतिलोमेन वातेन महानौरिव सागरे।
तिर्य्यगूर्द्ध्वमधश्चैव वीक्षमाणस्तदा कपिः ॥ १८० ॥
ददर्श स महासत्त्वमुत्थितं लवणाम्भसि।
तद्दृष्ट्वा चिन्तयामास मारुतिर्विकृताननाम् ॥ १८१ ॥
कपिराज्ञा यथा ख्यातं सत्त्वमद्भुतदर्शनम्।
छायाग्राहि महावीर्य्यं तदिदं नात्र संशयः ॥ १८२ ॥

आशिता कृतभोजना ॥ १७७ ॥

समाक्षिपज्जग्राह,—छायाग्रहणेन तद्वस्तुनिरोधशक्तिस्तस्या ब्रह्म-दत्ता ॥ १७८ ॥

पङ्गूकृतः स्तब्धगतिः पराक्रमो यस्य ॥ १७९ ॥

महानौर्यथा पङ्गूकृतपराक्रमा स्तब्धगतिः प्रतिलोमेन वातेन क्रियते गम्यदेशगतिनिरोध एवात्र स्तब्धगतित्वं यद्वा तेन यथा विपरीतगति-वारणाय यन्त्रैः स्तब्धगतिः कार्य्यते तथाहं केनचित् स्तब्धगतिः कृतः ॥ १८० ॥

महासत्त्वं स्त्रीरूपं प्राणिनम् ॥ १८१ ॥ १८२ ॥

स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान् कपिः ।
व्यवर्द्धत महाकायः प्रावृषीव बलाहकः ॥ १८३ ॥
तस्य सा कायमुद्वीक्ष्य वर्द्धमानं महाकपेः ।
वक्त्रं प्रसारयामास पातालाम्बरसन्निभम् ॥ १८४ ॥
घनराजीव गर्जन्ती वानरं समभिद्रवत् ।
स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् ॥ १८५ ॥
कायमात्रञ्च मेधावी मर्म्माणि च महाकपिः ।
स तस्या विवृते वक्त्रे वज्रसंहननः कपिः ॥ १८६ ॥
संक्षिप्य मुहुरात्मानं निपपात महाकपिः ।
आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ॥ १८७ ॥
ग्रस्यमानं यथा चन्द्रं पूर्णं पर्व्वणि राहुणा ।
ततस्तस्या नखैस्तीक्ष्णैर्मर्म्माण्युत्कृत्य वानरः ॥ १८८ ॥

अर्थतत्त्वेन छायाग्रहणरूपार्थक्रियया ॥ १८३ ॥

पातालाम्बरसन्निभं पातालाकाशमध्यभागसदृशम् ॥ १८४ ॥ १८५ ॥

कायमात्रं स्वशरीरकवलनपर्य्याप्तं शरीरप्रमाणमित्यर्थ इति तीर्थः । मात्रशब्दोऽल्पवाचीति कतकः । मर्म्माणि च भेदनार्थं ददर्शेत्यन्वयः तस्या वक्त्रे ॥ १८६ ॥

आत्मानं मुहुः संक्षिप्य अधिकं सङ्कुच्य निपपातेत्यन्वयः ॥ १८७ ॥

॥ १८८ ॥

उत्पपाताथ वेगेन मनःसम्पातविक्रमः ।
तान्तु दिष्ट्या च धृत्या च दाक्षिण्येन निपात्य सः ॥ १८९ ॥
कपिप्रवीरो वेगेन ववृधे पुनरात्मवान् ।
कृत्तकृत्ता हनुमता पपात विधुराऽम्भसि ।
स्वयम्भुवैव हनुमान् सृष्टस्तस्या निपातने ॥ १९० ॥
तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ।
भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ॥ १९१ ॥
भीममद्य कृतं कर्म्म महत्सत्त्वं त्वया हतम् ।

मनःसम्पातविक्रमः मनोवेगतुल्यवेगः । दिष्ट्या दैवानुग्रहेण दृष्ट्वेति पाठे सूक्ष्मदर्शनेनेत्यर्थः । धृत्या सहजधैर्य्येण दाक्षिण्येन कालोचितकृत्यचातुर्य्येण च तां निपात्य निहत्य वेगेनोत्पपात ॥ १८९ ॥

ननु प्रथमप्रवृत्तवेगस्य सुरसादिभिः कुण्ठीभावे सति कथं पुनराकाशगमनं तत्राह,—आत्मवान् वायोरिव स्वाधीन एव तद्गमनविषयो यत्नः । प्रथमन्तु आकाशमार्गप्राप्तिमात्राय महेन्द्रपर्वतालम्बनमितरजनप्रतारणाय वेत्याहुः । कृत्तकृत्ता छिन्नहृदयलक्षणप्राणस्थाना अतएव विधुरा प्राणशून्या अम्भसि पपात । अत्र कश्चित्तन्त्रे च तस्याश्छायाग्रहणमात्रेण भक्षणादिशक्तिमत्त्वाः । सिंहिकाया निपातने निपातनिमित्तं रावणनाशाय स्वात्मरूपरामवत् स्वस्वरूपो हनुमान् सृष्टः ॥ १९० ॥ १९१ ॥

साधयार्थमभिप्रेतमरिष्टं प्लवतां वर ! ॥ १८२ ॥
यस्य त्वेतानि चत्वारि वानरेन्द्र ! यथा तव ।
धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्म्मसु न सीदति ॥ १८३ ॥
स तैः सम्पूजितः पूज्यः प्रतिपन्नप्रयोजनैः ।
जगामाकाशमाविश्य पन्नगाशनवत् कपिः ॥ १८४ ॥
प्राप्तभूयिष्ठपारस्तु सर्व्वतः परिलोकयन् ।
योजनानां शतस्यान्ते वनराजीं ददर्श सः ॥ १८५ ॥
ददर्श च पतन्नेव विविधद्रुमभूषितम् ।
द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥ १८६ ॥
सागरं सागरानूपान् सागरानूपजान् द्रुमान् ।
सागरस्य च पत्नीनां मुखान्यपि विलोकयत् ॥ १८७ ॥

महत्सत्वं महाबला राक्षसी शवगावदशक्यसंहारा त्वया संहृतेत्यर्थः । अरिष्टं वाधारहितम् । रिषहिंसायाम् ॥ १८२ ॥

निर्बाधं कर्मसाधनहेतुमाह,—यस्य त्विति ॥ १८३ ॥

स तैः सम्पूजितः तैः पूर्वोक्तभूतैः प्रतिपन्नप्रयोजनैः अभिमतं साधयेत्यनुमत्याऽनुगृहीतकार्य्यः ॥ १८४ ॥

प्राप्तभूयिष्ठः प्राप्तकल्पः पारो येन सः ॥ १८५ ॥

पतन्नेव गच्छन्नेव मलयोपवनानि । अनेनोत्तरतीर इव दक्षिणतीरेऽपि मलयाख्यः पर्वतोऽस्तीति गम्यते ॥ १८६ ॥

सागरं दक्षिणतीरसमीपवर्त्तिसागरम् । अनूपः कच्छदेशः । सागरस्य

स महामेघसङ्काशं समीच्यात्मानमात्मवान्।
निरुन्धन्तमिवाकाशं चकार मतिमान् मतिम्॥ १९८॥
कायवृद्धिं प्रवेगञ्च मम दृष्ट्वैव राक्षसाः।
मयि कौतूहलं कुर्य्युरिति मेने महामतिः॥ १९९॥
ततः शरीरं संचिप्य तन्महीधरसन्निभम्।
पुनः प्रकृतिमापेदे वीतमोह इवात्मवान्॥ २००॥
तद्रूपमतिसंचिप्य हनूमान् प्रकृतौ स्थितः।
चीन् क्रमानिव विक्रम्य बलिवीर्य्यहरो हरिः॥ २०१॥
स चारुनानाविधरूपधारी
परं समासाद्य समुद्रतीरम्।

पत्नीनां लङ्काद्वीपादागत्य सागरं प्रविशन्तीनां नदीनां मुखानि सङ्गमस्थानानि विलोकयत्। व्यलोकयत्॥ १९७॥

आत्मानं स्वशरीरं महत्त्वादाकाशं निरुन्धन्तमिव। मतिं कर्त्तव्यनिश्चयम्॥ १९८॥

कौतूहलमाश्चर्य्यधिया दिदृक्षामित्यर्थः॥ १९९॥

प्रकृतिं निजमाकारं वीतमोहः वीतो नष्टो वासनावशादागतः कामादिमोहो यस्य सः। आत्मवान् जीवन्मुक्तयोगीप्रकृतिं भगवदनन्यतत्त्वतालक्षणस्वभावमित्यर्थः॥ २००॥

अतिसंचिप्य अतिसङ्कोच्य चीन् क्रमान् पदानि विक्रम्य प्रक्षिप्य बलेः वीर्य्यस्य हरो हरिरिव प्रकृतौ स्थितः॥ २०१॥

परैरशक्यः प्रतिपन्नरूपः
समीक्षितात्मा समवेक्षितार्थः ॥ २०२ ॥
ततः स लम्बस्य गिरेः समृद्धे
विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनारिकेले
महाभ्रकूटप्रतिमो महात्मा ॥ २०३ ॥
ततस्तु सम्प्राप्य समुद्रतीरं
समीक्ष्य लङ्कां गिरिवर्य्यमूर्ध्नि ।
कपिस्तु तस्मिन्निपपात पर्व्वते
विधूय रूपं व्यथयन् मृगद्विजान् ॥ २०४ ॥
स सागरं दानवपन्नगायुतं
बलेन विक्रम्य महोर्म्मिमालिनम् ।

चार नानाविधरूपधारी नानावर्णाकृतिरूपधारी तत्र तत् स्थानेषु स्वरूपम्। परैरशक्यं समुद्रतीरमासाद्येत्यन्वयः। समीक्षितात्मा समालोकितातिप्रमाणस्वशरीरः। समवेक्षितार्थः आलोचितानन्तर-कार्य्यः प्रतिपन्नरूपः अङ्गीकृतस्वल्पदेहो भूदिति शेषः ॥ २०२ ॥

लम्बस्य लम्बाख्यस्य। विचित्राणि कूटानि अवान्तरशिखराणि यस्य तादृशे कूटे प्रधानशिखरे। उद्दालकः श्लेष्मातकः ॥ २०३ ॥

गिरिवर्य्यमूर्ध्नि स्थितामिति शेषः। उपसंहरति। कपिस्त्विति। स कपिरुच्यमानविशेषणं सागरमतिक्रम्य तस्मिन् लम्बाख्यपर्वते

निपत्य तीरे च महोदधेस्तदा
दद‍र्श लङ्कामभरावतीमिव ॥ २०५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
प्रथमः सर्गः ॥ १ ॥

मृगादीन् व्यथयन् पीडयन्निपपात निपत्य च ततः प्राचीनं रूपं विधूय महोदधेस्तीरेऽमरावतीमिव स्थितां लङ्कां ददर्श ॥ २०४ ॥ २०५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके सुन्दर-
काण्डे प्रथमः सर्गः ॥ १ ॥

---

# द्वितीयः सर्गः ।



स सागरमनाधृष्यमतिक्रम्य महाबलः ।
त्रिकूटस्य तटे लङ्कां स्थितः स्वस्थो ददर्श ह ॥ १ ॥
ततः पादपमुक्तेन पुष्पवर्षेण वीर्य्यवान् ।
अभिवृष्टस्तत्र तत्र बभौ पुष्पमयो हरिः ॥ २ ॥
योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः ।
अनिःश्वसन् कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३ ॥
शतान्यहं योजनानां क्रमेयं सुबहून्यपि ।
किं पुनः सागरस्यान्तं संख्यातं शतयोजनम् ॥ ४ ॥

त्रिकूटस्य लम्बापरपर्य्यायस्य पर्वतस्य तटे स्थितः स्वस्थो भूत्वा लङ्का ददर्श ॥ १ ॥

पुष्पमयः पुष्पमयवानर इव ॥ २ ॥

अनिःश्वसन् श्रमजश्वासरहितः । तदेवाह,—न ग्लानिमिति कविवाक्यमेतत् ॥ ३ ॥

अहं योजनानां बहूनि शतान्यपि क्रमेयं क्रामेयं क्रमितुं शक्तः । शतयोजनमिति संख्यातं सागरस्यान्तं परं पारं क्रामेयमिति का गणना ममेति मन्यते स्मेति शेषः । हनुमदभिप्रायानुवादः कवेः ॥ ४ ॥

स तु वीर्य्यवतां श्रेष्ठः प्लवतामपि चोत्तमः।
जगाम वेगवान् लङ्कां लङ्घयित्वा महोदधिम् ॥ ५ ॥
शाद्वलानि च नीलानि गन्धवन्ति वनानि च।
मधुमन्ति च मध्येन जगाम नगवन्ति च ॥ ६ ॥
शैलांश्च तरुसंच्छन्नान् वनराजीश्च पुष्पिताः।
अभिचक्राम तेजस्वी हनूमान् प्लवगर्षभः ॥ ७ ॥
स तस्मिन्नचले तिष्ठन् वनान्युपवनानि च।
स नगाग्रे स्थितां लङ्कां ददर्श पवनात्मजः ॥ ८ ॥
सरलान् कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान्।
प्रियालान् मुचुलिन्दांश्च कुटजान् केतकान्यपि ॥ ९ ॥
प्रियङ्गून् गन्धपूर्णांश्च नीपान् सप्तच्छदांस्तथा।
असनान् कोविदारांश्च करवीरांश्च पुष्पितान् ॥ १० ॥
पुष्पभारनिबद्धांश्च तथा मुकुलितानपि।

जगाम लङ्कां पर्वतशिखरादवरुह्येति शेषः ॥ ५ ॥

मध्येन जगाम। मध्यमार्गेण वनादीन् पश्यन् जगाम नगवन्ति वृक्षवन्ति। प्राशस्त्ये मतुप् ॥ ६ ॥

शैलान् लम्बगिरिपादरूपान् ॥ ७ ॥

स तस्मिन् लम्बपर्वते तिष्ठन् लङ्कायाश्वनान्युपवनानि च ददर्श। अपि च स पवनात्मजः तां लङ्कां नगाग्रे पर्वताग्रे स्थितां ददर्श ॥ ८ ॥

अस्यैव प्रपञ्चः सरलानित्यादि। मुचुलिन्दा जम्बीरा इत्याहुः ॥ ९ ॥

पादपान् विहगाकीर्णान् पवनाधूतमस्तकान् ॥ ११ ॥
हंसकारण्डवाकीर्णा वापीः पद्मोत्पलावृताः।
आक्रीड़ान् विविधान् रम्यान् विविधांश्च जलाशयान् ॥ १२ ॥
सन्ततान् विविधैर्वृक्षैः सर्व्वर्त्तुफलपुष्पितैः।
उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३ ॥
समासाद्य च लक्ष्मीवान् लङ्कां रावणपालिताम्।
परिखाभिः सपद्माभिः सोत्पलाभिरलङ्कृताम् ॥ १४ ॥
सीतापहारणार्त्तेन रावणेन सुरक्षिताम्।
समन्ताद्विचरद्भिश्च राक्षसैरुग्रधन्वभिः ॥ १५ ॥
काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम्।
गृहैश्च गिरिसङ्काशैः शारदाम्बुदसन्निभैः ॥ १६ ॥

गन्धपूर्णान् गन्धाढ्यान् ॥ १० ॥ ११ ॥

रावणतपोबलात्तस्यां सर्वे वृक्षाः सर्वदा पुष्पिता इति न कश्चिद्विरोधः। आक्रीड़ाः क्रीड़ापर्वता इति कतकः। साधारणोद्याना-न्याक्रीड़ा इत्यन्ये। राज्ञामसाधारणान्युद्यानान्याक्रीड़ा इति तीर्थः ॥ १२ ॥ १३ ॥.

समासाद्य लङ्कां लङ्कासमीपं प्राप्य वक्ष्यमाणविशेषणां लङ्कां ददर्शे-त्यन्वयः ॥ १४ ॥

सीतापहारणात् सीतां लङ्कायामपहृत्य स्थापनाद्धेतोरित्यर्थः। राक्षसाश्च रक्षणे कारणभूताः ॥ १५ ॥ १६ ॥

पाण्डुराभिः प्रतोलीभिरुच्चाभिरभिसंवृताम्।
अट्टालकशताकीर्णां पताकाध्वजशोभिताम् ॥ १७ ॥
तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविराजितैः।
ददर्श हनुमान् लङ्कां देवो देवपुरीमिव ॥ १८ ॥
गिरिमूर्ध्नि स्थितां लङ्कां पाण्डुरैर्भवनैः शुभैः।
ददर्श स कपिः श्रीमान् पुरीमाकाशगामिव ॥ १९ ॥
पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा।
प्लवमानामिवाकाशे ददर्श हनुमान् कपिः ॥ २० ॥
वप्रप्राकारजघनां विपुलाम्बुवनाम्बराम्।
शतघ्नीशूलकेशान्तामट्टालकावतंसकाम् ॥ २१ ॥

प्रतोल्यः रथ्याः तासां पाण्डुरत्वमुच्चत्वञ्च तत्तत्सौधसम्बन्धकृतम्। अट्टालकाः प्राकारशिरांसि पताका ध्वजपटः तद्युक्तध्वजशोभिताम् ॥ १७ ॥

लतापङ्क्तिः तदाकारचित्रविशेषाः तया विराजितैः शोभमानैः तोरणैर्युक्तां देव इन्द्रः देवपुरीम् अमरावतीमिव अनेन परनगरादिकृतक्षोभाभावः सूचित इति बोध्यम् ॥ १८ ॥

गिरिमूर्द्धस्थत्वादाकाशगपुरोपमेयता लङ्कायाः ॥ १९ ॥

गिरिमूर्द्धस्थत्वादेवाकाशे प्लवमानामिव लङ्कां ददर्श हनूमत इव तद्दर्शनप्रसक्तस्य कवेरपि आश्चर्य्यमग्नतया ददर्शेति पुनरुक्तिर्न दोषाय विस्मयेन पुनः पुनः ददर्शेति वा तात्पर्य्यम् ॥ २० ॥

लङ्कां स्त्रीत्वेन वर्णयति। वप्रेति। वप्रः प्राकाराभ्यन्तरवेदिका

मनसेव कृतां लङ्कां निर्मितां विश्वकर्मणा।
द्वारमुत्तरमासाद्य चिन्तयामास वानरः ॥ २२ ॥
कैलासनिलयप्रख्यमालिखन्तमिवाम्बरम्।
ध्रियमाणमिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥ २३ ॥
सम्पूर्णां राक्षसैर्घोरैर्गुहामाशीविषैरिव।
तस्याश्च महतीं गुप्तिं सागरञ्च निरीक्ष्य सः।
रावणञ्च रिपुं घोरं चिन्तयामास वानरः ॥ २४ ॥
आगत्यापीह हरयो भविष्यन्ति निरर्थकाः।
न हि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ॥ २५ ॥

तद्युक्तप्राकारजघनां विपुलाम्बुः समुद्रः वनानि चाम्बरं वासो यस्यास्ताम्। अत्राम्बुशब्देन परिखान्तर्जलमिति तीर्थः ॥ २१ ॥

विश्वकर्मणा निर्मितां तेनापि मनसा कृतामिव स्थिताम्। द्वारमुत्तरमासाद्य समुद्रदक्षिणतटे प्लवनेन तस्यैव प्रथमं प्राप्तेः चिन्ता वक्ष्यमाणप्रकारा ॥ २२ ॥

कैलासो निलयस्थानं यस्यालकाद्दारस्य तत्प्रख्यमुत्तरद्वारम् उच्छ्रितैर्भवनोत्तमैरम्बरमालिखन्तमिव, आकाशं ध्रियमाणमिव आकाशधारणं कुर्वदिव ॥ २३ ॥

एतदग्रे सम्पूर्णां राक्षसैर्घोरैर्गुहामाशीविषैरिवेति पाठः। इतस्त्वर्धच्छिन्नमिति कतकः। राक्षसैः सम्पूर्णां नगरीं महतीं गुप्तिं रिपुं रावणञ्च सागरञ्च निरीक्ष्य चिन्तयामास। सादरं चिन्तयामासेत्यर्थः ॥ २४ ॥

इमान्त्वविषमां लङ्कां दुर्गां रावणपालिताम्।
प्राप्यापि सुमहाबाहुः किं करिष्यति राघवः॥ २६॥
अवकाशो न सान्त्वस्य राक्षसेष्वभिगम्यते।
न दानस्य न भेदस्य नैव युद्धस्य दृश्यते॥ २७॥
चतुर्णामेव हि गतिर्वानराणां तरस्विनाम्।
वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः॥ २८॥
यावज्जानामि वैदेहीं यदि जीवति वा न वा।
तत्रैव चिन्तयिष्यामि दृष्ट्वा तां जनकात्मजाम्॥ २९॥

चिन्ताप्रकारः। आगत्यापीति। अपिना आगमनस्यैवाशक्यता सूचिता। एषैव सागरमिरीक्षणेन सूचिता सुरैरपि जेतुमशक्या इदतः॥ २५॥

इमान्त्विति। अविषमाम् न विद्यते विषमो यस्यास्तां प्राप्यापी-त्यपिना पदातित्वादागमनमेवाशक्यमिति सूच्यते। किं करिष्यति राघवः प्रायो राघवस्यापि दुःसाध्येत्यर्थः॥ २६॥

अवकाशो नेति। उपचितार्थत्वाद्दर्पपराक्रमसम्पन्नत्वात् सुस्नि-ग्धदृढप्रकृतित्वाच्च न सामादीनामवकाश इति भावः॥ २७॥

पूर्वमागत्यापीह इरय इत्युक्तमिदानीं सर्ववानरागमनासम्भव एवे-त्याह,—चतुर्णामेवेति॥ २८॥

ननु जानकी जीवनज्ञाने तन्मोक्षणाय, प्रत्यवायादिचिन्तातस्त-द्दर्शनचिन्तैव प्रथमं युक्तेत्याह,—यावज्जानामीति। यावत् पुरेति लट्। आस्ये इत्यर्थः। तत्रैव जानकीदर्शनविषये एव प्रयत्नमिति

ततः सञ्चिन्तयामास मुहूर्त्तं कपिकुञ्जरः ।
गिरेः शृङ्गे स्थितस्तस्मिन् रामस्याभ्युदयं ततः ॥ ३० ॥
अनेन रूपेण मया न शक्या रक्षसां पुरी ।
प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥ ३१ ॥
महौजसो महावीर्य्या बलवन्तश्च राक्षसाः ।
वञ्चनीया मया सर्वे जानकीं परिमार्गता ॥ ३२ ॥
लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्का पुरी मया ।
प्राप्तकालं प्रवेष्टुं मे कृत्यं साधयितुं महत् ॥ ३३ ॥
तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः ।
हनूमांश्चिन्तयामास विनिःश्वस्य मुहुर्मुहुः ॥ ३४ ॥
केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् ।
अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥ ३५ ॥

शेषः । प्रथमं तां दृष्ट्वा पश्चाद्यच्चिन्त्यं तत्तदानीमेव चिन्तयामीति शेषः ॥ २९ ॥

रामस्याभ्युदयं तदभ्युदयरूपसीतान्वेषणोपायम् ॥ ३० ॥

चिन्ताप्रकारोऽनेनेति ॥ ३१ ॥ ३२ ॥

लक्ष्यं कार्य्यप्रत्यक्षानुमेयम् । तच्च तदलक्ष्यञ्चेन्द्रियागोचरमित्यर्थः महत्कृत्यं सीतान्वेषणरूपं साधयितुं तेन रूपेण लङ्कापुरीं प्रवेष्टुं प्राप्तकालम् उचितम् ॥ ३३ ॥

तेन रूपेणाप्यन्वेषणं कथं घटेतेति पुनश्चिन्तयति । तां पुरीमिति ॥ ३४ ॥ ३५ ॥

न विनश्येत् कथं कार्य्यं रामस्य विदितात्मनः।
एकामेकस्तु पश्येयं रहिते जनकात्मजाम्॥ ३६॥
भूतार्थ्वार्या विनश्यन्ति देशकालविरोधिताः।
विक्लवं दूतमासाद्य तमः सूर्य्योदये यथा॥ ३७॥
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते।
घातयन्तीह कार्य्याणि दूताः पण्डितमानिनः॥ ३८॥
न विनश्येत् कथं कार्य्यं वैक्लव्यं न कथं भवेत्।
लङ्घनञ्च समुद्रस्य कथं नु न भवेत् वृथा॥ ३९॥

नेति। रहिते एकान्ते कथं पश्येयमित्यन्वयः॥ ३६॥

ननु सीतादर्शने किमर्थमेकान्तापेक्षा तत्राह,—भूतार्थाः सिद्धप्रायकार्य्याणि। विक्लवं कातरम् अविमृश्यकारिणं दूतमासाद्य देशकालाभ्याम् उचितप्रवृत्तिहीनाभ्यां विरोधिताः सन्तः सूर्य्योदये तम इव विनश्यन्ति। अतोऽसहायेन मयैतादृशे देशकाले कार्य्ये च गुप्तमेव प्रवर्त्तितव्यमिति भावः॥ ३७॥

न केवलं कार्य्यहानिः किन्तु अन्यदपि स्यादित्याह,—अर्थानर्थान्तरे इति। अर्थानर्थान्तरे कार्य्याकार्य्यविषये। निश्चितापि स्वामिना सचिवैः सह निश्चितापि बुद्धिः न शोभते विक्लवं दूतमासाद्येति शेषः। तदेव द्रढ़यति। घातयन्तीति। एवं सति लोको मत्स्वामिनं बुद्धिशून्यं मयि जानीयादित्याशयः॥ ३८॥

यदेवमतः कार्य्यं राजकार्य्यं न विनश्येत् वैक्लव्यं बुद्धिहीनता तत्र सिद्धः स्यात् सस्वामिनश्च॥ ३९॥

मयि दृष्टे तु रक्षोभीरामस्य विदितात्मनः ।
भवेत् व्यर्थमिदं कार्य्यं रावणानर्थमिच्छतः ॥ ४० ॥
न हि शक्यं क्वचित् स्थातुमविज्ञातेन राघवैः ।
अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४१ ॥
वायुरप्यत्र नाज्ञातश्चरेदिति मतिर्मम ।
न ह्यत्राविदितं किञ्चिद्रक्षसां भीमकर्मणाम् ॥ ४२ ॥
इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ।
विनाशमुपयास्यामि भर्त्तुरर्थश्च हास्यति ॥ ४३ ॥
तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः ।
लङ्कामभिपतिष्यामि राघवस्यार्थसिद्धये ॥ ४४ ॥

रावणानर्थं रावणवधम् ॥ ४० ॥

अदर्शनेन सञ्चारस्य सर्वथाऽशक्य इत्याह,—नहीति ॥ ४१ ॥

रक्षसामविदितं रक्षोभिरविदितं न किञ्चिदस्ति कृत्रिमरूपमिति शेषः । अतः प्राकृतसहजकपिरूपेणैव स्थातव्यमिति भावः ॥ ४२ ॥

किञ्च यावदस्तमयं स्वगोपनमेवोचितमित्याह,—इहेति । स्वेन रूपेण संवृतः सन् युतः सन् इहाद्रि देशे च यदि तिष्ठामि तदा स्पष्टं परैरवगम्यमानत्वात् विनाशमुपयास्यामि । भर्त्तुरर्थहानिश्च । तस्मादास्तमयमत्रैव क्वचिद्दुर्गगुहायां निःशङ्कं स्थित्वा रजन्यामपि स्वेन रूपेणैव परन्तु ह्रस्वतां गतो भूत्वा लङ्कामभिपतिष्यामीत्यन्वयः ॥ ४३ ॥ ४४ ॥

रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम्।
प्रविश्य भवनं सर्वं द्रक्ष्यामि जनकात्मजाम्॥ ४५॥
इति निश्चित्य हनुमान् सूर्य्यस्यास्तमयं कपिः।
आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः॥ ४६॥
सूर्य्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः।
वृषदंशकमात्रोऽथ बभूवाद्भुतदर्शनः॥ ४७॥
प्रदोषकाले हनुमांस्तूर्णमुत्पत्य वीर्य्यवान्।
प्रविवेश पुरीं रम्यां प्रविभक्तमहापथाम्॥ ४८॥
प्रासादमालावितताां स्तम्भैः काञ्चनसन्निभैः।
शातकुम्भनिभैर्जालैर्गन्धर्वनगरोपमाम्॥ ४९॥
सप्तभौमाष्टभौमैश्च स ददर्श महापुरीम्।
स्थलैः स्फटिकसङ्कीर्णैः कार्त्तस्वरविभूषितैः।
तैस्तैः शुशुभिरे तानि भवनान्यत्र रक्षसाम्॥ ५०॥

प्रथमतः पुरीं प्रविश्य ततः सर्वं भवनं रावणगृहं प्रविश्य ॥ ४५ ॥ ४६ ॥

वृषान् मूषकान् दशतीति वृषदंशको मार्ज्जारस्तन्मात्रस्तत्प्रमाणः ॥ ४७ ॥

प्रविवेश पुरीमिति। प्रवेशपूर्वकान्वेषणसंक्षेपोक्तिः॥ ४८॥

तृतीयान्तेषूपलक्षितामिति शेषः॥ ४९॥

सप्तेति। भूमीनां समूहैः सप्तसंख्यावयवगृहैरुपलक्षितां, स्फटिक-

काञ्चनानि विचित्राणि तोरणानि च रक्षसाम् ।
लङ्कामुद्योतयामासुः सर्वतः समलङ्कृताम् ॥ ५१ ॥
अचिन्त्यामद्भुताकारां दृष्ट्वा लङ्कां महाकपिः ।
आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥ ५२ ॥

स पाण्डुराविद्धविमानमालिनीं
महार्हजाम्बूनदजालतोरणाम् ।
यशस्विनीं रावणबाहुपालितां
क्षपाचरैर्भीमबलैः सुपालिताम् ॥ ५३ ॥
चन्द्रोऽपि साचिव्यमिवास्य कुर्वं-
स्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोका-
नुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥ ५४ ॥

सङ्कीर्णैः स्फटिकरत्नखचितैः स्वर्णैरित्यर्थः स्वयम्भूः । तलैरिति पाठेऽपि स एवार्थः । तैस्तैः प्रासादैरिति शेषः ॥ ५० ॥

रक्षसां तोरणानि गृहोपरिष्टद्वारस्थतोरणानि ॥ ५१ ॥

अचिन्त्यामगम्यामन्वेषणाचिन्त्याम् अयं विषादहेतुः । अद्भुताकारामिति हर्षहेतुः ॥ ५२ ॥

पाण्डुरा सुधाधवला आविद्धा परस्परसंविद्धा विमानानां सप्तभूमिकप्रासादानां माला अस्यामस्ति तां प्रविवेशेति शेषः ॥ ५३ ॥

मध्यगतः खमध्यगतः अनेकसहस्रत्वमनेन पूर्णत्वम् । अनेकत्वस्यैव सहस्रत्वेन विवरणम् । उत्तिष्ठते आर्षत्वात् । ज्योत्स्नावितानेन

शङ्खप्रभं क्षीरमृणालवर्ण-
मुद्गच्छमानं व्यवभासमानम्।
ददर्श चन्द्रं स कपिप्रवीरः
पोप्लूयमानं सरसीव हंसम्॥ ५५॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
द्वितीयः सर्गः॥ २॥

लोकान् वितत्य आवार्य्य सम्यदवलोकनसाधनतया अस्य हनुमतः साचिव्यं साहाय्यं कुर्वन्निव। ननु खमध्यगतस्य प्रदोषे उदयोऽस्मिन् न तदा पूर्णत्वं पूर्णस्य तु न खमध्यगतस्योदय इति चेन्न। शुक्लैकादश्यां खमध्यसमीपगतत्वेन मध्यगतत्वोपचारात् पूर्णत्वञ्च पूर्णकल्पत्वेन व्यवहृतम्। यद्वा अनेकन्यूनाः सहस्रं रश्मयो यस्येति मध्यमपदलोपि तत्पुरुषगर्भो बहुव्रीहिः। अतएव रात्रिशेषे हनुमत्यशोकवनिकांस्थे सीतासविधे रावणस्यागमनकाले दीपिकावर्णनं कृतं तेन हि तदा चन्द्रास्तानुमानम्। सा चेयं मार्गशीर्षस्य। फाल्गुणे लङ्कां प्रविष्टायाः सीतायाः वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गमेति हनुमन्तं प्रतिवचनात्। इत्यादिने एव च सीताया लङ्काप्रवेशनं रामभयादिति स्पष्टमेव॥ ५४॥

पोप्लूयमानं भृशं प्लवमानम्॥ ५५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके सुन्दरकाण्डे द्वितीयः सर्गः॥ २॥

---

# तृतीयः सर्गः ।



स लम्बशिखरे लम्बे लम्बतोयदसन्निभे ।
सत्वमास्थाय मेधावी हनूमान् मारुतात्मजः ॥ १ ॥
निशि लङ्कां महासत्वो विवेश कपिकुञ्जरः ।
रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २ ॥
शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम् ।
सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३ ॥
सुपुष्टबलसम्पुष्टां यथैव विटपावतीम् ।
चारुतोरणनिर्यूहां पाण्डुरद्वारतोरणाम् ॥ ४ ॥
भुजगाचरितां गुप्तां शुभां भोगवतीमिव ।

लम्बशिखरे उन्नतशिखरे । लम्बे लम्बाख्यपर्वते । अतएव लम्बतोयदसन्निभे । सत्वं सत्वगुणमङ्गोचितबलञ्च । रजस्तमः प्रधानरक्षोजयाय सत्वगुणाश्रयणम् । मेधावी कालोचितविचारज्ञः ॥ १ ॥ २ ॥

सागरोपमनिर्घोषां सागरशब्दसदृशरक्षःशब्दवतीम् ॥ ३ ॥

विटपावती अलकापुरी । निर्यूहा मत्तवारणाः चारुतोरणस्थनिर्यूहा यस्यास्ताम् । पाण्डुरे सुधाधवले द्वारे तोरणं यस्यास्ताम् ॥ ४ ॥

तां सविद्युद्घनाकीर्णां ज्योतिर्गणनिषेविताम् ॥ ५ ॥
चण्डमारुतनिर्ह्रादां यथा चाप्यमरावतीम् ।
शातकुम्भेन महता प्राकारेणाभिसंवृताम् ॥ ६ ॥
किङ्किणीजालघोषाभिः पताकाभिरलङ्कृताम् ।
आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान् ॥ ७ ॥
विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः ।
जाम्बूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः ॥ ८ ॥
मणिस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः ।
तप्तहाटकनिर्यूहै राजतामलपाण्डुरैः ॥ ९ ॥

भुजगैराचरितां कृतसञ्चारां भोगवतीं सर्पनगरीं सविद्युद्भि-र्घनैर्व्याप्तां ज्योतिषां ग्रहनक्षत्रादीनां गणैर्निषेवितामित्युत्तरान्वयि ॥ ५ ॥

चण्डमारुतानां प्रचण्डवाताहीनां शब्दो यस्यां तादृशाममरावतीमिव स्थिताम् । अत्रामराः सन्त्यस्यामित्यमरावती द्यौः स्वसंज्ञायामपि मतौ बहु च इत्यार्षो दीर्घः । न त्विहेन्द्रपुरी अमरावती । उक्तलक्षणा-भावात् । लङ्काया उक्तपुसादृश्यस्य सालङ्कारराक्षसवत्त्वात् । बलव-द्राघवाऽऽकृत्याचेति कतकः । शातकुम्भेन स्वर्णमयेन ॥ ६ ॥

किङ्किणीजालैः क्षुद्रघण्टिकासमूहैः शब्दो यासां ताभिः ॥ ७ ॥

वैदूर्यमणिभिः कृता वेदिका स्थलरा येषु तादृशैर्द्वारैः ॥ ८ ॥

मणिस्फटिकमुक्ताभिश्च कृतवेदिकैर्द्वारैः सर्वत उपलक्षितां कुट्टिमा निबद्धाभूः निर्यूहा मत्तवारणाः राजतामलपाण्डुरैः रजतमयामल-पाण्डुरैः परिष्कृतैः एवंभूतैः द्वारैः विशिष्टाम् ॥ ९ ॥

वैदूर्य्यकृतसोपानैः स्फाटिकान्तरपांसुभिः।
चारुसञ्जवनोपेतैः खमिवोत्पतितैः शुभैः ॥ १० ॥
क्रौञ्चबर्हिणसङ्घुष्टै राजहंसनिषेवितैः।
तूर्य्याभरणनिर्घोषैः सर्वतः परिनादिताम् ॥ ११ ॥
वस्वोकसारप्रतिमां समीक्ष्य नगरीं ततः।
खमिवोत्पतितां लङ्कां जहर्ष हनुमान् कपिः ॥ १२ ॥
तां समीक्ष्य पुरीं लङ्कां राक्षसाधिपतेः शुभाम्।
अनुत्तमामृद्धिमतीं चिन्तयामास वीर्य्यवान् ॥ १३ ॥
नेयमन्येन नगरी शक्या धर्षयितुं बलात्।
रक्षिता रावणबलैरुद्यतायुधपाणिभिः ॥ १४ ॥
कुमुदाङ्गदयोर्वापि सुषेणस्य महाकपेः।
प्रसिद्धेयं भवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५ ॥

वैदूर्य्यमणिभिः कृतानि सोपानानि येषु तैः स्फाटिकाः स्फटिकरचिता अन्तर्मध्यप्रदेशा अपांसवश्च येषु तैर्द्वारैः चारुसंजवनैः सभाभिरुपेतैर्द्वारैः खमुत्पतितैरिव शुभैरट्टैरुपलक्षितैर्द्वारैः ॥ १० ॥

सङ्घुष्टैः कृतघोषैर्द्वारैः ॥ ११ ॥

वस्वोकसारा अलका तत्सदृशीं कस्य आर्षः। जाम्बूनदमयद्वारत्वादिना साद्दश्यम्। खमिवोत्पतितां गिरिमूर्ध्निप्रतिष्ठितत्वात् ॥ १२ ॥

॥ १३ ॥ १४ ॥

अन्येन धर्षयितुमशक्या किं सर्वथा नेत्याह,—कुमुदेत्यादि प्रसिद्धा, पूर्वमेव सिद्धप्रतिका ॥ १५ ॥

विवृतस्तनूजस्य हरेश्च कुशपर्वण: ।
स्त्रत्यस्य कपिमुख्यस्य मम चैव गतिर्भवेत् ॥ १६ ॥
समीक्ष्य च महाबाहो राघवस्य पराक्रमम् ।
लक्ष्मणस्य च विक्रान्तमभवत् प्रीतिमान् कपि: ॥ १७ ॥
तां रत्नवसनोपेतां गोष्ठागारावतंसिकाम् ।
यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥ १८ ॥
तां नष्टतिमिरां दीपैर्भास्वरैश्च महाग्रहै: ।
नगरीं राक्षसेन्द्रस्य स ददर्श महाकपि: ॥ १९ ॥
अथ सा हरिशार्दूलं प्रविशन्तं महाकपिम् ।
नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ २० ॥

कुशपर्वण इति कुशपर्वसदृशलोमवत इत्यर्थकम् ऋक्षस्य विशेषणम्। अतिदीर्घकठोरलोमावृतत्वात्। कपिमुख्यस्येति विशेषणञ्च तस्यैव मम चैव गतिरस्यामिति शेषः॥ १६॥

रामस्य पराक्रमं लक्ष्मणस्य विक्रान्तं शौर्य्यञ्च समीक्ष्यदृश्यपि तदीयबाणैरेवतत्पुर्ध्वंसेति विचार्य्य प्रीतिमानभूत् अविषण्णोऽभूत् ॥ १७॥

रत्नवसनोपेतां रत्नाकरवाससं रत्नप्राकारवाससञ्च। गोष्ठान्यागाराणि चावतंसा यस्यास्ताम्। गोष्ठं गोशाला। इदं वाजिशालादेरप्युपलक्षणम्। यन्त्राणि प्राकारोपरि स्थापितानि क्षेपण्यादीनि तद्गृहस्तनीम्॥ १८॥

तां प्रसिद्धां लङ्कां भास्वरैश्च महाग्रहैः चामन्द्रकिरणैः॥ १९॥

सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता ।
स्वयमेवोत्थिता तत्र विकृतानमदर्शना ॥ २१ ॥
पुरस्तात्तस्य वीरस्य वायुसूनोरतिष्ठत ।
मुञ्चमाना महानादमब्रवीत्पवनात्मजम् ॥ २२ ॥
कस्त्वं केन च कार्य्येण इह प्राप्तो वनालय ! ।
कथयस्वेह यत्तत्त्वं यावत्प्राणा धरन्ति ते ॥ २३ ॥
न शक्या खल्वियं लङ्का प्रवेष्टुं वानर ! त्वया ।
रक्षिता रावणबलैरभिगुप्ता समन्ततः ॥ २४ ॥
अथ तामब्रवीद्वीरो हनूमानग्रतः स्थिताम् ।
कथयिष्यामि तत्तत्त्वं यन्मां त्वं परिपृच्छसि ॥ २५ ॥
का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसे ।
किमर्थञ्चापि मां क्रोधान्निर्भर्त्सयसि दारुणे ! ॥ २६ ॥
हनूमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ।
उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७ ॥

सा नगरी स्वेन रूपेणाधिष्ठातृदेवतारूपेण युक्ता ददर्श ॥ २० ॥
स्वयमेवोत्थिता अनन्यप्रेरितेति यावत् ॥ २१ ॥
अतिष्ठत देवतारूपं प्रकाशितवती ॥ २२ ॥
वनालय वानर तत्त्वं सत्यम् ॥ २३ ॥
त्वया एषा प्रवेष्टुं न शक्यं सुदुष्प्रहन्तुं शक्यमितिवत् । न शक्येति पाठस्तु सुगम एव ॥ २४ ॥ २५ ॥

अहं राक्षसराजस्य रावणस्य महात्मनः।
आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥ २८ ॥
न शक्यं मामवज्ञाय प्रवेष्टुं नगरीमिमाम्।
अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥ २९ ॥
अहं हि नगरी लङ्का स्वयमेव प्लवङ्गम!।
सर्वतः परिरक्षामि अतस्ते कथितं मया ॥ ३० ॥
लङ्काया वचनं श्रुत्वा हनूमान् मारुतात्मजः।
यत्नवान् स हरिश्रेष्ठः स्थितः शैल इवापरः ॥ ३१ ॥
स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुङ्गवः।
आबभाषेऽथ मेधावी सत्त्ववान् प्लवगर्षभः ॥ ३२ ॥
द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम्।

अथ तया पृष्टो हनूमांस्तां प्रति तत्प्रश्नोत्तरकथनं प्रतिज्ञाय सुरसावद्देवपूज्या वा सिंहिकावद्वध्यावेति निर्णेतुं पृच्छति का त्वमिति ॥ २६ ॥ २७ ॥

आज्ञाप्रतीक्षा नियोगपरिपालिका ॥ २८ ॥ २९ ॥

अथापि का त्वं तत्राह,—अहं हीति। स्वयं सदेवतास्वरूपश्रेत्यर्थः ॥ ३० ॥

यत्नवान्। लङ्काधिष्ठातृत्वेनावगतत्वात्तज्जयोपाये यत्नवान् ॥ ३१ ॥

स्त्रीरूपविकृतां विकृतस्त्रीरूपाम्। अथ तत्प्रश्नोत्तरं तत्प्रश्नोत्तरमाह,—आबभाषे इति ॥ ३२ ॥

इत्यर्थमिह सम्प्राप्तः परं कौतूहलं हि मे ॥ २३ ॥
वनान्युपवनानीह लङ्कायाः काननानि च ।
सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥ २४ ॥
तस्य तद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ।
भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥ २५ ॥
मामनिर्जित्य दुर्बुद्धे ! राक्षसेश्वरपालिताम् ।
न शक्यं ह्यद्य ते द्रष्टुं पुरीयं वानराधम ! ॥ २६ ॥
ततः स हरिशार्दूलस्तामुवाच निशाचरीम् ।
दृष्ट्वा पुरीमिमां भद्रे ! पुनर्यास्ये यथागतम् ॥ २७ ॥
ततः कृत्वा महानादं सा वै लङ्का भयङ्करम् ।
तलेन वानरश्रेष्ठं ताड़यामास वेगिता ॥ २८ ॥
ततः स हरिशार्दूलो लङ्कया ताड़ितो भृशम् ।

द्रक्ष्यामीत्यर्थमिह सम्प्राप्त इत्यन्वयः। दर्शनं प्रयोजनमुद्दिश्ये-त्यर्थः ॥ २३ ॥

वनं कृत्रिमम्। काननमकृत्रिमम् ॥ २४ ॥

भूयोऽधिकं परुषाक्षरं वाक्यं पुनर्बभाषे इति सम्बन्धः ॥ २५ ॥ २६ ॥

त्वामनिर्जित्य द्रष्टुं न शक्यमित्युक्तेऽपि कस्यापि वस्तुनोऽग्रहणपूर्वकं केवलं दर्शनमात्रे तव का क्षतिरित्याशयेनाह,—ततः स इति। स हनूमान् ॥ २७ ॥

वेगिता सञ्जातवेगा ॥ २८ ॥

ननाद सुमहानादं वीर्य्यवान् मारुतात्मजः ॥ ३९ ॥
ततः संवर्त्तयामास वामहस्तस्य सोऽङ्गुलीः।
मुष्टिनाऽभिजघानैनां हनूमान् क्रोधमूर्च्छितः ॥ ४० ॥
स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः।
सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी।
पपात सहसा भूमौ विकृताननदर्शना ॥ ४१ ॥
ततस्तु हनुमान् वीरस्तां दृष्ट्वा विनिपातिताम्।
कृपाञ्चकार तेजस्वी मन्यमानः स्त्रियञ्च ताम् ॥ ४२ ॥
ततो वै भृशमुद्विग्ना लङ्का सा गद्गदाक्षरम्।
उवाचागर्वितं वाक्यं हनूमन्तं प्लवङ्गमम् ॥ ४३ ॥
प्रसीद सुमहाबाहो ! त्रायस्व हरिसत्तम !।
समये सौम्य ! तिष्ठन्ति सत्त्ववन्तो महाबलाः ॥ ४४ ॥

महानादं ननादेति निर्भयत्वद्योतनम् ॥ ३९ ॥

अङ्गुलीः संवर्त्तयामास मुष्टिं बबन्धेत्यर्थः ॥ ४० ॥

वामहस्तमुष्टिबन्धे आशयमाह,—स्त्री चेति। तेन प्रहारेण वाममुष्टिकृतसदयताडनेनापीत्यर्थः। विकृताननदर्शना विकृतवक्त्र-दृष्टिः ॥ ४१ ॥ ४२ ॥

उद्विग्ना भीता। अगर्वितं गर्वरहितम् ॥ ४३ ॥

त्रायस्व मा प्राणनाशं कुर्वित्यर्थः। तत्र हेतुः। समये इति। स्त्री न हन्तव्येति शास्त्रमर्य्यादायामित्यर्थः ॥ ४४ ॥

अहन्तु नगरी लङ्का स्वयमेव प्लवङ्गम ! ।
निर्जिताहं त्वया वीर ! विक्रमेण महाबल ! ॥ ४५ ॥
इदञ्च तथ्यं शृणु मे ब्रुवन्त्या वै हरीश्वर ! ।
स्वयं स्वयम्भुवा दत्तं वरदानं यथा मम ॥ ४६ ॥
यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् ।
तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ॥ ४७ ॥
स हि मे समयः सौम्य ! प्राप्तोऽद्य तव दर्शनात् ।
स्वयम्भुविहितः सत्यो न तस्यास्ति व्यतिक्रमः ॥ ४८ ॥
सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः ।
रक्षसाञ्चैव सर्वेषां विनाशः समुपागतः ॥ ४९ ॥
तत्प्रविश्य हरिश्रेष्ठ ! पुरीं रावणपालिताम् ।

यद्यप्यहं लङ्काधिष्ठातृदेवतात्वात् दुर्जया तथापि त्वया निर्जिता ॥ ४५ ॥

इदञ्च तथ्यं शृणु । त्वदनुग्रहार्थमुच्यमानमित्यर्थः । वरदानं दत्तं कृतमित्यर्थः ॥ ४६ ॥

रक्षसां भयमिति । एवञ्च मज्जयोऽयं सर्वरक्षोभयसूचक इति भावः ॥ ४७ ॥

न तस्यास्ति व्यतिक्रमः । भगवद्दत्तवरस्य रावणस्य सकलताधिक्षेपक्षुभितनन्दिकेश्वरशापात्तु सद्यःप्राप्तो विनाशः स्वयम्भुवरप्रदानाद्वानरात्स्वान्तपर्य्यन्तं प्रतिबद्ध इति कथाप्यानुसन्धेयेति तीर्थः ॥ ४८ ॥ ४९ ॥

विधत्स्व सर्वकार्य्याणि यानि यानीह वाञ्छसि ॥ ५० ॥

प्रविश्य शापोपहतां हरीश्वरः

पुरीं शुभां राक्षसमुख्यपालिताम्।

यदृच्छया त्वं जनकात्मजां सतीं

विमार्ग सर्वत्र गतो यथासुखम् ॥ ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे

तृतीयः सर्गः ॥ ३ ॥

विधत्स्व अनुतिष्ठ ॥ ५० ॥

शापोपहतां सत्यसङ्कल्पभगवद्वचनेन नन्दिकेश्वरशापेन च प्रा यितनाशकालां हरीश्वरस्त्वं प्रविश्य यदृच्छया सर्वत्र रावणान्तःपुर-पर्य्यन्तं यथासुखं गतः सन् सतीमप्रच्युतपातिव्रत्यां जानकीं विमार्ग अन्वेषय अनेन च वचनेन सीताऽत्रास्याम् पुरि वर्त्तत इति उप-दिष्टम् ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके सुन्दर-काण्डे तृतीयः सर्गः ॥ ३ ॥

# चतुर्थः सर्गः ।



स निर्जित्य पुरीं लङ्कां श्रेष्ठां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान् कपिसत्तमः ॥ १ ॥
अद्वारेण महावीर्य्यः प्राकारमवपुप्लुवे ।
निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ॥ २ ॥
प्रविश्य नगरीं लङ्कां कपिराजहितङ्करः ।
चक्रेऽथ पादं सव्यञ्च शत्रूणां स तु मूर्द्धनि ॥ ३ ॥
प्रविष्टः सत्त्वसम्पन्नो निशायां मारुतात्मजः ।
स महापथमास्थाय मुक्तापुष्पविराजितम् ॥ ४ ॥

स इति ॥ १ ॥

प्राकारमद्वारेणावपुप्लुवे । शत्रोः पुरं ग्रामं गृहं वा अद्वारेण प्रविशेच्छत्रुविनाशायेति नीति स्मृतेरिति भावः ॥ २ ॥

अद्वारेण प्रवेशेऽपि सव्यं पादं वामपादं प्रथमतश्चक्रे । यतः स तु प्रथमनिक्षिप्तवामपादस्तु शत्रूणां मूर्द्धन्येव निहितो भवति । तथा विजयप्रदो भवतीति भावः । उक्तञ्च । प्रयाणकाले स्वगृहप्रवेशे विवाहकालेऽपि च दक्षिणांघ्रिम् । कृत्वाऽथतः शत्रुपुरप्रवेशे वामं निदध्याच्चरणं नृपालयमिति ॥ ३ ॥

महापथं राजमार्गम् ॥ ४ ॥

ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः।
हसितोत्कृष्टनिनदैस्तूर्य्यघोषपुरस्कृतैः॥ ५॥
वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः।
गृहमेधैः पुरी रम्या बभासे द्यौरिवाम्बुदैः॥ ६॥
प्रजज्वाल तदा लङ्का रक्षोगणगृहैः शुभैः।
सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः॥ ७॥
वर्द्धमानगृहैश्चापि सर्वतः सुविभूषितैः।
तां चित्रमाल्याभरणां कपिराजहितङ्करः॥ ८॥
राघवार्थं चरन् श्रीमान् ददर्श च ननन्द च।
भवनाद्भवनं गच्छन् ददर्श कपिकुञ्जरः॥ ९॥
विविधाकृतिरूपाणि भवनानि ततस्ततः।

हसितैरट्टहासैरुत्पन्ना ये उत्कृष्टनिनदास्तूर्य्यघोषैः पुरस्कृतामुपलक्षिताम्॥ ५॥

वज्राणामङ्कुशानां निकाशाः प्रतिमा येषु गृहेषु तैर्बभासे। वज्रनिर्मितानि जालानि गवाक्षाणि तद्विभूषितैर्गृहैः॥ ६॥

पद्मादिसंज्ञकं संस्थितं स्थानं येषां तैः॥ ७॥

वर्द्धमानगृहैः वर्द्धमाननामकसंस्थानवद्गृहैः। चतुःशालं चतुर्द्वारं सर्वतोभद्रसंज्ञितम्। पश्चिमद्वाररहितं नन्द्यावर्त्ताह्वयन्तु तत्। दक्षिणद्वाररहितं वर्द्धमानं धनप्रदम्। प्राग्द्वाररहितं स्वस्तिकाख्यं पुत्रधनप्रदमित्युक्तेः। हितङ्कर इत्यार्षः॥ ८॥

चरन् तां ददर्शेत्यन्वयः॥ ९॥

शुश्राव रुचिरं गीतं त्रिस्थानस्वरभूषितम् ॥ १० ॥
स्त्रीणां मदनविद्धानां दिवि चाप्सरसामिव ।
शुश्राव काञ्चीनिनदं नूपुराणाञ्च निःस्वनम् ॥ ११ ॥
सोपाननिनदांश्चापि भवनेषु महात्मनाम् ।
आस्फोटितनिनादांश्च क्ष्वेडितांश्च ततस्ततः ॥ १२ ॥
शुश्राव जपतां तत्र मन्त्रान् रक्षोगृहेषु वै ।
स्वाध्यायनिरतांश्चैव यातुधानान् ददर्श सः ॥ १३ ॥
रावणस्तवसंयुक्तान् गर्जतो राक्षसानपि ।
राजमार्गं समावृत्य स्थितं रक्षोगणं महत् ॥ १४ ॥
ददर्श मध्यमे गुल्मे राक्षसस्य चरान् बहून् ।
दीक्षितान् जटिलान् मुण्डान् गोजिनाम्बरवाससः ॥ १५ ॥

विविधाकृतिरूपाणि विविधा आकारा: रूपाणि वर्णाश्च येषां तानि भवनानि ददर्शेति पूर्वेणान्वयः । त्रिस्थानस्वरभूषितम् उरःकण्ठशिरोरूपस्थानत्रयजैर्मन्द्रमध्यतारस्वरैर्भूषितम् ॥ १० ॥ ११ ॥

सोपाननिनदान् सोपानसञ्चरत्कान्ताजनकाञ्चीमञ्जीरनिनदान् यद्वा सोपानेषु पदाघातजशब्दान् । आस्फोटितं विलासार्थं कराम्फालनं तज्जन्यनिनादान् क्ष्वेडितान् सिंहनिनादान् ॥ १२ ॥

मन्त्रान् वेदमन्त्रान् स्वाध्याये स्वस्वार्थे निरतान् ॥ १३ ॥ १४ ॥

मध्यमे गुल्मे मध्यमकक्ष्याप्रदेशे चरान् नगरवृत्तान्तावेदकगूढचारान् । दीक्षितजटिलमुण्डाः ग्रहिलनियतयः । गोजिनं गवाजिनं यद्वाससोऽम्बरवाससो विवाससः । नग्नाः नग्नाया भारतखण्डाद्दक्षिणभा-

दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा।
कूटमुद्गरपाणींश्च दण्डायुधधरानपि ॥ १६ ॥
एकाक्षानेकवर्णांश्च लम्बैकपयोधरान्।
करालान् भुग्नवक्त्रांश्च विकटान् वामनांस्तथा ॥ १७ ॥
धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान्।
परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ॥ १८ ॥
नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान्।
नातिगौरान्नातिकृष्णान्नातिकुब्जान्न वामनान् ॥ १९ ॥

वेन कर्मभूमित्वाभावात् कथं तत्र रक्षसां दीक्षितत्वमिति चेन्न। नित्यकर्मस्वन्यदेशेऽप्यधिकारात्। रावणादेस्तपोमाहात्म्यात्तत्र काम्यकर्मसिद्धिरपीत्यन्यत्। यथा त्वष्टुरमेन्द्रमेव सोममाजह्रे इत्यादिश्रुतपर्यालोचनरीत्या एतेन देवानामीर्षदक्षतानपि यज्ञान् दर्शयतीति भाष्यरीत्या चाङ्गवैकल्येऽप्यनुष्ठितात्कर्मणो रुचोत्पत्तिरूपकामनासिद्धिस्तथा प्रकृते देशरूपाङ्गवैकल्येऽपि तत्सिद्धिः रक्षसामपि देवयोनित्वात् ॥ १५ ॥

अरिष्टनिवारणपूर्वकमनुष्ठाननिर्वाहाय दर्भमुष्टिप्रहरणत्वं बोध्यम्। यथा वज्रं हरेः पाणौ तथा विप्रकरे कुशा इति स्मृतेः। शत्र्वाद्युत्पादनद्वारा शत्रुमारकतयाऽग्निकुण्डानामायुधत्वं कूटायस्कारकूटः आयुधविशेषः ॥ १६ ॥

एकपयोधरान् परभागे सूक्ष्मसन्निवेशेनापि रहितान् विकटान् विकटाङ्गान् ॥ १७ ॥ १८ ॥

नातिदीर्घानातिह्रस्वकान्। वृत्तभङ्गः रेफहकारसंयोगपरो गुरुर्लघुकार्यकारीति न ॥ १९ ॥

विरूपान् बहुरूपांश्च सुरूपांश्च सुवर्चसः ।
ध्वजिनः पताकिनश्चैव ददर्श विविधायुधान् ॥ २० ॥
शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः ।
क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः ॥ २१ ॥
स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान् ।
नानावेषसमायुक्तान् यथास्वैरचरान् बहून् ॥ २२ ॥
तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् ।
शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः ॥ २३ ॥
रक्षोधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः ।
स तदा तद् गृहं दृष्ट्वा महाहाटकतोरणम् ॥ २४ ॥
राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्निप्रतिष्ठितम् ।

छन्दो भङ्ग आर्षः ॥ २० ॥

वृक्षायुधाः वक्रलकुटाद्यायुधाः । पट्टिशाशनी आयुधविशेषे क्षेपणी भिन्दिपालः ॥ २१ ॥

यथास्वैरचरान् यथेष्टं स्वैरविहारं गतान् ॥ २२ ॥

अव्यग्रं सावधानम् आरक्षम् आ समन्तादन्तःपुररक्षकं सैन्यम् । मध्यमं मध्यमकक्ष्यास्थितम् ॥ २३ ॥

अन्तःपुराग्रतः रावणान्तःपुरगृहस्याग्रतः तद्गृहम् आरक्षावस्थितिगृहं दृष्ट्वा सः प्रक्रान्तः प्रसिद्धः कपिः ॥ २४ ॥

पुण्डरीकावतंसाभिः परिखाभिः समावृतम् ॥ २५ ॥
प्राकारावृतमत्यन्तं ददर्श स महाकपिः ।
त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् ॥ २६ ॥
वाजिह्रेषितसङ्घुष्टमद्भुतैश्च हयैस्तथा ।
रथैर्यानैर्विमानैश्च तथा हयगजैः शुभैः ॥ २७ ॥
वारणैश्च चतुर्दन्तैः श्वेताभ्रनिचयोपमैः ।
भूषितैरुचिरद्वारं मत्तैश्च मृगपक्षिभिः ॥ २८ ॥
रक्षितं सुमहावीर्य्यैर्यातुधानैः सहस्रशः ।
राक्षसाधिपतेर्गुप्तमाविवेश गृहं कपिः ॥ २९ ॥

स हेमजाम्बूनदचक्रवालं
महार्हमुक्तामणिभूषितान्तम् ।

राक्षसेन्द्रस्य गृहमुख्यमानादिशेषगां ददर्श पुण्डरीकावतंसाभिः श्वेतपद्मभूषिताभिः ॥ २५ ॥ २६ ॥

विमानैः पुष्पकादिभिः विचित्रशर्य्यादिमत्त्वादद्भुतत्वं हयानां हयगजैर्हयाकारैर्गजैः सम्पगजैरिति यावत् ॥ २७ ॥

द्वारमित्यस्य ददर्शेति शेषः ॥ २८ ॥

विवेश आससाद ॥ २९ ॥

हेम तप्तवर्णं स्वर्णं तत्सदृशेन जाम्बूनदेन षोडशवर्णस्वर्णेन निर्मितं चक्रवालं प्राकारमण्डलं यस्य महार्हमुक्तामणिभिः भूषितोऽन्तः-

परार्द्ध्यकालागुरुचन्दनार्हं
स रावणान्तःपुरमाविवेश ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चतुर्थः सर्गः ॥ ४ ॥

शिरोभागो यस्य । परार्द्ध्याभ्यामुत्तमाभ्यां कालागुरुचन्दनाभ्यामर्हा योग्या पूजा यस्य तदन्तःपुरमाविवेश स हनुमान् ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ।



चन्द्रोऽपि साचिव्यमिवास्य कुर्वं-
स्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन निपत्य लोका-
नुत्तिष्ठतेनेकसहस्ररश्मिः ॥ १ ॥
शङ्खप्रभाक्षीरमृणालवर्णं
हृष्यमानं ह्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः
पोप्लूयमानं सरसीव हंसम् ॥ २ ॥
ततः स मध्यङ्गतमंशुमन्तं
ज्योत्स्नावितानं मुहुरुद्वमन्तम् ।
द[illegible]मान् भुवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ ३ ॥

अग्रे श्लोकद्वयं प्रक्षिप्तम् ॥ १ ॥ २ ॥

ततः अन्तःपुरप्रवेशोत्तरं रात्रेः प्रथमयामस्य समाप्तिकल्पत्वमत्रेति बोध्यं मध्यम् । गतं व्योममध्यं ताराणामध्यं प्राप्तम् अंशुमन्तं शीतांशुं भानुमन्तं सूर्ययोगेन प्रकाशवत्त्विरयावन्तम् । गोष्ठे भ्रमन्तं मत्तं वृषमिव ॥ ३ ॥

लोकस्य पापानि विनाशयन्तं
महोदधिञ्चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं
ददर्श शीतांशुमथाभियान्तम् ॥ ४ ॥
या भाति लक्ष्मीर्भुवि मन्दरस्था
यथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥ ५ ॥
हंसो यथा राजतपञ्जरस्थः
सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्व्वितकुञ्जरस्थ-
श्चन्द्रोऽपि बभ्राज तथाऽम्बरस्थः ॥ ६ ॥

पापानि पापजनकदुःखानि नाशयन्तं लोकाह्लादजनकत्वात् । समेधयन्तं वर्द्धयन्तं विराजयन्तं प्रकाशयन्तम् अभितो यान्तम् अन्तः-पुरदर्शनसाधनत्वेन स्वमध्यं प्राप्तम् ॥ ४ ॥

भुवि मन्दरस्था भाति अधिकसन्निधाना भवति पुष्करस्था अब्जेति शेषः । सेदानीं निशाकरस्थेति पर्य्यायालङ्कारः पादचतुष्टये स्था इत्येक-पदयमकञ्च । भुवि मन्दरे प्रदोषे सागरेऽधिकलक्ष्मीसन्निधानम् ऋषि-वचनादेवावसेयम् ॥ ५ ॥

हंसेव यथेति किञ्चिदाधारप्रतिष्ठितमुख्यवस्तुत्वमात्रेणाम्बरस्थचन्द्रे

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो
महाचलः श्वेत इवोर्द्ध्वशृङ्गः।
हस्तीव जाम्बूनदबद्धशृङ्गो
विभाति चन्द्रः परिपूर्णशृङ्गः॥ ७॥
विनष्टशीताम्बुतुषारपङ्को
महाग्रहग्राहविनष्टपङ्कः।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को
रराज चन्द्रो भगवान् शशाङ्कः॥ ८॥
शिलातलं प्राप्य यथा मृगेन्द्रो
महारणं प्राप्य यथा गजेन्द्रः।

आदृश्यमिति कतकः। कुञ्जरोऽप्यत्र श्वेत एव अम्बरमपि तत्किरणैरेव श्वेतमिति बोध्यम् अम्बरस्थोऽम्बरमध्यस्थः॥ ६॥

परिपूर्णशृङ्गः परिपूर्णकलङ्करूपहरिणशृङ्ग इत्यर्थः। जाम्बूनदबद्धेति स्वरूपकथनमात्रम्॥ ७॥

विनष्टः शीताम्बुतुषाररूपः शीतलजलबिन्दुसम्पर्करूपः पङ्को यस्य तम्। तच्च वर्षकालस्यातीतत्वादस्ततो हिमकालेऽपि विनष्टः शीतलजलबिन्दुसम्पर्करूपः पङ्को यस्य स इत्यर्थः। हिमालयस्यातिदूरत्वादिति भावः। विनष्टेति द्वितीयार्थे प्रथमासमक्षीलत्वेदम्। महाग्रहस्य सूर्यस्य ग्राहेण किरणसंक्रमेण विनष्टो विनाशितः पङ्कस्तमो येन सः। अतएव प्रकाशलक्ष्म्याश्रयेण हेतुना निर्मलाङ्कः व्यक्तस्फुरल्लाञ्छनः रराज गगनमध्य प्राप्येति शेषः॥ ८॥

राज्यं समासाद्य यथा नरेन्द्र-
स्तथा प्रकाशो विरराज चन्द्रः ॥ ९ ॥
प्रकाशचन्द्रोदयनष्टदोषः
प्रवृद्धरक्षःपिशिताशदोषः ।
रामाभिरामेरितचित्तदोषः
स्वर्गप्रकाशो भगवान् प्रदोषः ॥ १० ॥
तन्त्रीस्वराः कर्णसुखाः प्रवृत्ताः
स्वपन्ति नार्य्यः पतिभिः सुवृत्ताः ।
नक्तञ्चराश्चापि तथा प्रवृत्ता
विहर्त्तुमत्यद्भुतरौद्रवृत्ताः ॥ ११ ॥

शिलातलं गुहाबहिःस्थम् ॥ ९ ॥

प्रकाशयुक्तचन्द्रस्योदयेन ऊर्द्धमागमनेन नष्टो नाशितोऽन्तर्गृहेऽपि दोषस्तिमिररजो येन तथाभूतप्रदोषो रजनीमुखं यामार्द्धात्मकम् । प्रवृद्धा वर्द्धिता रक्षसां पिशिताशनरूपा दोषा येन । पिशितभक्षणस्य दोषत्वमविहितजीवहिंसाहेतुत्वात् । रामाणामभिरामविषयको रमणविषयक ईरितो निरस्तः चित्तदोषः प्रणयकलहरूपो येन स्वर्गस्य सुखस्य प्रकाशो यतः अतएव भगवान् पूज्यो रराजेत्यनुकर्षः ॥ १० ॥

सुवृत्ताः भेदग्रहाविषयाः । स्ववृत्ता इति पाठे स्वं स्वीयं सहजपातिव्रत्यलक्षणं वृत्तं चारित्रं यासां ताः । नक्तञ्चरा उलूकादयो राक्षसाश्च तथा विहर्त्तुं प्रवृत्ताः ॥ ११ ॥

मत्तप्रमत्तानि समाकुलानि
रथाश्वभद्रासनसङ्कुलानि ।
वीरश्रिया चापि समाकुलानि
ददर्श धीमान् स कपिः कुलानि ॥ १२ ॥

परस्परञ्चाधिकमाक्षिपन्ति
भुजांश्च पीनानधिविक्षिपन्ति ।
मत्तप्रलापानधिविक्षिपन्ति
मत्तानि चान्योऽन्यमधिक्षिपन्ति ॥ १३ ॥

रक्षांसि वक्षांसि च विक्षिपन्ति
गात्राणि कान्तासु च विक्षिपन्ति ।
रूपाणि चित्राणि च विक्षिपन्ति
दृढानि चापानि च विक्षिपन्ति ॥ १४ ॥

ऐश्वर्य्यादिमत्ताः प्रमत्ता मद्यादिना येषु तानि अतएव समाकुलानि रक्षसां गृहाणि । रथाश्वेति सर्वयानोपलक्षणं भद्रासनं स्वर्णपीठम् ॥ १२ ॥

आक्षिपन्ति उत्तरप्रत्युत्तरं कुर्वन्ति अधिविक्षिपन्ति परस्परमित्यनुकर्षः । मत्तप्रलापानधिकं विक्षिपन्ति मुञ्चन्ति भर्त्सयन्ति वा मत्तानि रक्षांसीत्याकर्षः । अधिक्षिपन्ति तिरस्कुर्वन्ति ॥ १३ ॥

वक्षांसि विक्षिपन्ति परस्परमास्फालयन्ति गात्राणां हस्तादीनां कान्तासु क्षेपोन्यासः । चित्राणि रूपाणि नानाविधवेषान् विक्षिपन्ति

ददर्श कान्ताश्च समालभन्त्य-
स्तथापरास्तत्र पुनः स्वपन्त्यः ।
सुरूपवक्त्राश्च तथा हसन्त्यः
क्रुद्धाः पराश्चापि विनिःश्वसन्त्यः ॥ १५ ॥
महागजैश्चापि तथा नदद्भिः
सुपूजितैश्चापि तथा सुसद्भिः ।
रराज वीरैश्च विनिःश्वसद्भि-
र्ह्रदो भुजङ्गैरिव निःश्वसद्भिः ॥ १६ ॥
बुद्धिप्रधानान् रुचिराभिधानान्
संश्रद्दधानान् जगतः प्रधानान् ।
नानाविधानान् रुचिराभिधानान्
ददर्श तस्यां पुरि यातुधानान् ॥ १७ ॥

कुर्वन्ति कान्ताप्रीतये सम्पादयन्ति । धनुषां विक्षेपो विस्फारणम् ईदृशानि रक्षांसि ददर्श । अवन्त्यान्येतानि ॥ १४ ॥

समालभन्त्यः चन्दनादीनीति शेषः । द्वितीयार्थे इमाः प्रथमा-न्ताः संज्ञाश्च ददर्शेति शेषो वा ॥ १५ ॥

सुसद्भिः सुतरां सन्तो विभीषणादयः रराज पुरमिति शेषः । विनिःश्वसद्भिः सापेक्षितयोत्कर्षलाभात् ॥ १६ ॥

बुद्धिः प्रधानं प्रधानगुणो येषां रुचिरमभिधानं वचनं येषां सम्यक् श्रद्दधानान् आस्तिकान् रुचिराभिधानान् रुचिरनाम्नः नानाप्रकारं विधानं वेषादिर्येषां तान् ॥ १७ ॥

ननन्द दृष्ट्वा च स तान् सुरूपान्
नानागुणानात्मगुणानुरूपान्।
विद्योतमानान् स च तान् सुरूपान्
ददर्श कांश्चिच्च पुनर्विरूपान्॥ १८॥

ततो वरार्हाः सुविशुद्धभावा-
स्तेषां स्त्रियस्तत्र महानुभावाः।
प्रियेषु पानेषु च सक्तभावा
ददर्श तारा इव सुस्वभावाः॥ १९॥

स्त्रियो ज्वलन्तीस्त्रपयोपगूढा
निशीथकाले रमणोपगूढाः।
ददर्श काश्चित् प्रमदोपगूढा
यथा विहङ्गा विहगोपगूढाः॥ २०॥

अन्याः पुनर्हर्म्यतलोपविष्टा-
स्तत्र प्रियाङ्केषु सुखोपविष्टाः।

आत्मगुणानुरूपान् तदुचितव्यवहारवतः कांश्चित् पुनर्विरूपानपि विद्योतमानान् सुरूपानिव ददर्शेत्यर्थः॥ १८॥

वरार्हाः श्रेष्ठविभूषणादियोग्याः उत्तमोत्तमरूपाश्च भावाः कटाक्षादयः अनुभावः प्रभावः भावोऽन्तःकरणं ताराः तारकाः॥ १९॥

ज्वलन्तीः रूपसम्पदा ज्वलन्तीरिव। त्रपा लज्जा प्रमदेन हर्षेणोपगूढाः सम्बद्धाः यथा विहङ्गाः विहङ्गैरित्यर्थः। इन्द्रनीलमणिमयोर्द्ध्वगेहेषु नीलतमःसदृशेषु शयनात् तत् सादृश्यम्॥ २०॥

भर्त्तुः परा धर्मपरा निविष्टा
ददर्श धीमान् मदनोपविष्टाः ॥ २१ ॥
अप्रावृताः काञ्चनराजिवर्णाः
काश्चित् परार्द्ध्यास्तपनीयवर्णाः ।
पुनश्च काश्चिच्छशलक्ष्मवर्णाः
कान्तप्रहीणा रुचिराङ्गवर्णाः ॥ २२ ॥
ततः प्रियान् प्राप्य मनोभिरामान्
सुप्रीतियुक्ताः सुमनोभिरामाः ।
गृहेषु हृष्टाः परमाभिरामा
हरिप्रवीरः स ददर्श रामाः ॥ २३ ॥

भर्त्तुः परा उत्कृष्टत्वेनाभिमताः धर्मपराः भर्त्तसेवालक्षणधर्मतत्पराः निविष्टा ऊढ़ाः । निवेशः शिबिरोद्वाहविन्यासेष्विति कोषः । मदन उपविष्टो यासु मदनाश्रया इत्यर्थः ॥ २१ ॥

अप्रावृताः उत्तरीयहीनाः काञ्चनराजिवर्णाः कनकरेखाकाराः परार्द्ध्याः उत्तमाः तपनीयवर्णाः तप्तस्वर्णवर्णाः शशलक्ष्मा चन्द्रः कान्तप्रहीणाः प्रियाद्वियुक्ताः रुचिराङ्गवर्णाः सुन्दरदेहकान्तयः । प्रथमं ददर्श ॥ २२ ॥

प्रियान् प्राप्य प्रीतियुक्ताः आसन् सुमनोभिः पुष्पैरभिरामाः अतएव हृष्टाः परमया शोभयाऽभिरामाः स्वस्वकान्तमनोहरा रामा गृहेषु ददर्श । प्रसमीक्ष्य रामा इति पाठे प्रियान् प्राप्य तान् समीक्ष्य

चन्द्रप्रकाशाश्च हि वक्रमाला
वक्राः सुपक्ष्माश्च सुनेत्रमालाः।
विभूषणानाञ्च ददर्श मालाः
शतह्रदानामिव चारुमालाः॥ २४॥

नत्वेव सीतां परमाभिजातां
पथि स्थिते राजकुले प्रजाताम्।
लतां प्रफुल्लामिव साधुजातां
ददर्श तन्वीं मनसाभिजाताम्॥ २५॥

सनातने वर्त्मनि सन्निविष्टां
रामेक्षणीं तां मदनाभिविष्टाम्।
भर्त्तुर्मनः श्रीमदनुप्रविष्टां
स्त्रीभ्यः पराभ्यश्च सदा विशिष्टाम्॥ २६॥

प्रीतियुक्ताः रामाभिः प्रिये रम्यमाणाः। अतएव गृहेषु हृष्टाः रामा ददर्शेति शेषः॥ २३॥

चहौ पादपूरकौ। वक्रमालाः वक्रसमूहः वक्राः वक्रविशेषाः सुपक्ष्माः शोभनपक्ष्मयुक्ता नेत्रमाला ददर्श। शतह्रदानां माला इव भूषणानां माला ददर्श। वक्राक्षिपक्ष्मा इति पाठेऽक्षिपदमभिकं वक्रपक्ष्मा इत्येवोचितं पक्ष्मसु वक्रत्वमपि किमित्यपरिचिन्त्यम्॥ २४॥

पथि स्थिते स्वधर्ममार्गस्थे। नत्वेव ददर्शेत्यन्वयः साधु जातामिति लताविशेषणम्। मनसाभिजातां धात्रा मनसा सृष्टाम्॥ २५॥

उत्कण्ठितां सानुसृतास्रकण्ठीं
पुरा वराहोत्तमनिष्ककण्ठीम् ।
सुजातपक्ष्मामभिरक्तकण्ठीं
वने प्रवृत्तामिव नीलकण्ठीम् ॥ २७ ॥
अव्यक्तरेखामिव चन्द्रलेखां
पांसुप्रदिग्धामिव हेमरेखाम् ।
क्षतप्ररूढामिव वर्णरेखां
वायुप्रभुग्नामिव मेघरेखाम् ॥ २८ ॥
सीतामपश्यन् मनुजेश्वरस्य
रामस्य पत्नीं वदतां वरस्य ।

सनातने वर्त्मनि अविच्छेदप्रवृत्ते पातिव्रत्यमार्गे । राममीक्षते ध्यायति रामेक्षणीं तां मदनेन रामविषयेणाभिविष्टां व्याप्तां श्रीमद्भर्तुः मनोऽनुप्रविष्टाम् अनेन परस्परानुरागो ध्वनितः ॥ २६ ॥

उत्कण्ठितां विरहतापपीडिताम् अनुसृतास्रेण प्रवृत्तबाष्पेण सह वर्त्तमानः कण्ठो यस्यास्ताम् । अत्र त्रोषार्थः । कण्ठाभति वा पाठः । पुरा रामसन्निधिकाले वराणामुत्तमभूषणानामर्हाऽतएवोत्तमनिष्काः उत्तमभूषणाः कण्ठो यस्यास्ताम् अभिरक्तो मधुरस्वरः कण्ठो यस्यास्ताम् । नीलकण्ठी मयूरी ॥ २७ ॥

अव्यक्ता अभ्रादिनाऽस्पष्टा रेखा रेखाकारो यस्यास्ताम् । प्रदिग्धां रूषिताम् । क्षतप्ररूढां क्षतेन प्ररूढामुत्पन्नां वर्णरेखां वायुप्रभग्नचिह्न तद्वामस्वेदनीं राघवस्य सा । २८ ।

बभूव दुःखोपहतश्चिरस्य
प्लवङ्गमो मन्द इवाचिरस्य ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
पञ्चमः सर्गः ॥ ५ ॥

चिरस्य चिरमित्यर्थेऽव्ययम्। चिरमन्विष्याप्यपश्यन् अचिरस्य सद्यः मन्द इव अन्वेषणाद्यकुशल इव दुःखोपहतो बभूव। अत्र सर्गेऽय-मकालङ्कारः ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ।



स निकामं विमानेषु विचरन् कामरूपधृक् ।
विचचार कपिर्लङ्कां लाघवेन समन्वितः ॥ १ ॥
आससाद च लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् ।
प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २ ॥
रक्षितं राक्षसैर्भीमैः सिंहैरिव महद्वनम् ।
समीक्षमाणो भवनं चकाशे कपिकुञ्जरः ॥ ३ ॥
रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषणैः ।
विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचिरावृतम् ॥ ४ ॥
गजास्थितैर्महामात्रैः शूरैश्च विगतश्रमैः ।
उपस्थितमसंहार्यैर्हयैः स्यन्दनयायिभिः ॥ ५ ॥

विमानेषु सप्तभूमिप्रासादेषु । लाघवेन शैघ्र्येण ॥ १ ॥
राक्षसेन्द्रनिवेशनमाससाद ॥ २ ॥
चकाशे । चन्द्रमाहित्यादत्यन्तान्वेषणक्रियो बभूवेत्यर्थः ॥ ३ ॥
रूप्यकं रजतं तेनोपहितैः शोभार्थं निहितैः ॥ ४ ॥
गजास्थितैर्गजारूढैः महामात्रैर्हस्तिपकैः उपस्थितं वृतम् । असंहार्यैरप्रतिहतवेगैः स्यन्दनयायिभिः स्यन्दनवाहकैः प्रशस्ताश्वैरित्यर्थः ॥ ५ ॥

सिंहव्याघ्रतनुत्राणैर्दोन्तकाञ्चनराजतैः।
घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥ ६ ॥
बहुरत्नसमाकीर्णं परार्ध्यासनभूषितम्।
महारथसमावापं महारथमहासनम् ॥ ७ ॥
दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः।
विविधैर्बहुसाहस्रैः परिपूर्णं समन्ततः ॥ ८ ॥
विनीतैरन्तपालैश्च रक्षोभिश्च सुरक्षितम्।
मुख्याभिश्च वरस्त्रीभिः परिपूर्णं समन्ततः ॥ ९ ॥
मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम्।
वराभरणसंह्रादैः समुद्रस्वननिःस्वनम् ॥ १० ॥

सिंहव्याघ्रतनुत्राणत्वादिरथविशेषणम्। दन्तादिविकाराद्दान्तादयः तत्स्वर्णप्रतिमाक्ताधरद्भिरिति शेषः। घोषवत्त्वं किङ्किणीभिः ॥ ६ ॥

महतां रथानामावापः स्थानं समन्ताद्यस्मिन् तत् महारथानाम् एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते इत्युक्तलक्षणमहारथानां महासनं सदावासस्थानम् ॥ ७ ॥

दृश्यैर्दर्शनीयैरतएव परमोदारैः अतिसुन्दरैः ॥ ८ ॥

अन्तपालैः पर्य्यन्तरक्षकैः ॥ ९ ॥

राक्षसेन्द्राणां महापार्श्वादीनां निवेशनानि यस्मिन् तत्। भूषणशब्दैः समुद्रस्वनसदृशनिःस्वनम् ॥ १० ॥

तद्राजगुणसम्पन्नं मुख्यैश्च वरचन्दनैः ।
महाजनसमाकीर्णं सिंहैरिव महद्वनम् ॥ ११ ॥
भेरीमृदङ्गाभिरुतं शङ्खघोषविनादितम् ।
नित्यार्चितं पर्वसुतं पूजितं राक्षसैः सदा ॥ १२ ॥
समुद्रमिव गम्भीरं समुद्रसमनिःस्वनम् ।
महात्मनो महद्वेश्म महारत्नपरिच्छदम् ॥ १३ ॥
महारत्नसमाकीर्णं ददर्श स महाकपिः ।
विराजमानं वपुषा गजाश्वरथसंकुलम् ॥ १४ ॥
लङ्काभरणमित्येव सोऽमन्यत महाकपिः ।
चचार हनुमांस्तत्र रावणस्य समीपतः ॥ १५ ॥
गृहाद् गृहं राक्षसानामुद्यानानि च सर्वशः ।
वीक्ष्यमाणोऽप्यसन्त्रस्तः प्रासादांश्च चचार सः ॥ १६ ॥

तद्राजगुणसम्पन्नं तैः प्रसिद्धैराजभवनगुणैः छत्रचामरादिभिः सम्पन्नं वरचन्दनैश्च राजभवनानुकूलैः ॥ ११ ॥

पर्वसु सुतः सोमो यस्मिन् यज्ञार्थं तत् पर्वसुतं राक्षसैः सदा पूजितं स्वपूजनीयदेवताकम् ॥ १२ ॥

परिच्छदाः अलङ्काराः महात्मनो रावणस्य महद्वेश्म ददर्शेत्यन्वयः ॥ १३ ॥

अमन्यत लङ्काभरणमेवेति शेषः । रावणस्य रावणभवनस्य समीपतः तत्प्राकारप्रदेशेषु ॥ १५ ॥

अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम्।
ततोऽन्यत् पुप्लुवे वेश्म महापार्श्वस्य वीर्य्यवान्॥ १७॥
अथ मेघप्रतीकाशं कुम्भकर्णनिवेशनम्।
विभीषणस्य च तथा पुप्लुवे स महाकपिः॥ १८॥
महोदरस्य च तथा विरूपाक्षस्य चैव हि।
विद्युज्जिह्वस्य भवनं विद्युन्मालेस्तथैव च॥ १९॥
वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः।
शुकस्य च महावेगः सारणस्य च धीमतः॥ २०॥
तथा चेन्द्रजितो वेश्म जगाम हरियूथपः।
जम्बुमालेः सुमालेश्च जगाम हरिसत्तमः॥ २१॥
रश्मिकेतोश्च भवनं सूर्य्यशत्रोस्तथैव च।
वज्रकायस्य च तथा पुप्लुवे स महाकपिः॥ २२॥
धूम्राक्षस्याथ सम्पातेर्भवनं मारुतात्मजः।
विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च॥ २३॥
शुकनाभस्य चक्रस्य शठस्य कपटस्य च।
ह्रस्वकर्णस्य दंष्ट्रस्य लोमशस्य च रक्षसः॥ २४॥

गृहाद् गृहं राजवेश्ममहाप्राकारान्तर्वर्त्तिप्रधानरक्षसामेकस्य गृहादपरं गृहमित्यर्थः॥ १६॥

अस्यैव प्रपञ्चोऽवप्लुत्येत्यादि॥ १७॥ १८॥ १९॥ २०॥ २१॥ २२॥ २३॥ २४॥

युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य सादिनः ।
विद्युज्जिह्वद्विजिह्वानां तथा हस्तिमुखस्य च ॥ २५ ॥
करालस्य विशालस्य शोणिताक्षस्य चैव हि ।
प्लवमानः क्रमेणैव हनूमान् मारुतात्मजः ॥ २६ ॥
तेषु तेषु महार्हेषु भवनेषु महायशाः ।
तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ॥ २७ ॥
सर्वेषां समतिक्रम्य भवनानि समन्ततः ।
आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् ॥ २८ ॥
रावणस्योपशायिन्यो ददर्श हरिसत्तमः ।
विचरन् हरिशार्दूलो राक्षसीर्विकृतेक्षणाः ॥ २९ ॥
शूलमुद्गरहस्ताश्च शक्तितोमरधारिणः ।
ददर्श विविधान् गुल्मांस्तस्य रक्षःपतेर्गृहे ॥ ३० ॥
राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान् ।
रक्तान् श्वेतान् सितांश्चापि हरींश्चापि महाजवान् ॥ ३१ ॥

विद्युज्जिह्वद्विजिह्वानामिति बहुवचनमार्षं तयोरित्यर्थः । विद्यु-ज्जिह्वेन्द्रजिह्वानामिति पाठान्तरम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

उपशायिन्यः । उपशायोपशायश्च पर्यायशयनार्थकाः । पर्यायेण शयनस्थानरक्षिका इत्यर्थ इत्याहुः ॥ २९ ॥

गुल्मान् रक्षासमूहान् ॥ ३० ॥

हरीन् अश्वान् ॥ ३१ ॥

कुलीनान् रूपसम्पन्नान् गजान् परगजारुजान् ।
शिक्षितान् गजशिक्षायाम् ऐरावतसमान् युधि ॥ ३२ ॥
निहन्तॄन् परसैन्यानां गृहे तस्मिन् ददर्श सः ।
चरतश्च यथा मेघान् स्रवतश्च यथा गिरीन् ॥ ३३ ॥
मेघस्तनितनिर्घोषान् दुर्धर्षान् समरे परैः ।
सहस्रं वाहिनीस्तत्र जाम्बूनदपरिष्कृताः ॥ ३४ ॥
हेमजालैरविच्छिन्नास्तरुणादित्यसन्निभाः ।
ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ॥ ३५ ॥
शिबिका विविधाकाराः स कपिर्मारुतात्मजः ।
लतागृहाणि चित्राणि चित्रशालागृहाणि च ॥ ३६ ॥
क्रीड़ागृहाणि चान्यानि दारुपर्वतकानि च ।
कामस्य गृहकं रम्यं दिवागृहकमेव च ॥ ३७ ॥

परगजारुजान् शत्रुगजान् आरुजन्ति भञ्जयन्ति तान् ॥ ३२ ॥ ३३ ॥
मेघस्तनितनिर्घोषत्वादिविशिष्टान् गजान् ददर्शेत्यन्वयः । सहस्रं वाहिनीः अनेकसेनाः ॥ ३४ ॥

हेमजालैरविच्छिन्नाः सर्वतो भूषिता इति शिबिकाविशेषणम् ॥ ३५ ॥

शिबिकाः ददर्शेत्यनुकर्षः । चित्रशालागृहाणि चित्रयुक्तशालावन्ति गृहाणि ॥ ३६ ॥

दारुनिर्मिताः क्रीड़ापर्वताः दारुपर्वतकानि । क्रीवत्वमार्षम् ।

दर्दर्श राक्षसेन्द्रस्य रावणस्य निवेशने।
स मन्दरसमप्रख्यं मयूरस्थानसङ्कुलम् ॥ ३८ ॥
ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम्।
अनन्तरत्ननिचयं निधिजालं समन्ततः।
धीरनिष्ठितकर्माङ्गं गृहं भूतपतेरिव ॥ ३९ ॥
अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च।
विरराज च तद्वेश्म रश्मिवानिव रश्मिभिः ॥ ४० ॥
जाम्बूनदमयान्येव शयनान्यासनानि च।
भाजनानि च शुभ्राणि ददर्श हरियूथपः ॥ ४१ ॥
मध्वासवकृतक्लेदं मणिभाजनसंकुलम्।
मनोरममसम्बाधं कुवेरभवनं यथा ॥ ४२ ॥

कामस्य गृहकं रतिगृहकम्। दिवागृहं दिनविहारगृहम्। सर्वत्रा-त्यन्तस्वार्थिकः कन् ॥ ३७ ॥

मयूरस्थानैः क्रीड़ामयूरस्थानैः सङ्कुलं व्याप्तम् ॥ ३८ ॥

निधिजालं निधिजालवदित्यर्थः। धीरनिष्ठितकर्माङ्गं धीरैर्निर्भयस्थिरचित्तैः निष्ठितं निर्वर्तितं कर्मणो निधिरक्षादिकर्मणोऽङ्गं शङ्खपद्मादिबलिरूपं यस्मिन्। केचित्तु कर्मान्तमिति पठित्वा धीरैर्निष्ठितस्य अनुष्ठितस्य कर्मणस्तपोरूपस्यान्तं फलरूपमित्यर्थमाहुः,—भूतपतेर्महेश्वरस्य वा ॥ ३९ ॥ ४० ॥ ४१ ॥

मध्वासवयोरवान्तरभेदः। ताभ्यां कृतक्लेदमार्द्रमित्यर्थः ॥ ४२ ॥

नूपुराणाञ्च घोषेण काञ्चीनां निःस्वनेन च।
मृदङ्गतलनिर्घोषैर्घोषवद्भिर्विनादितम्॥ ४३॥
प्रासादसङ्घातयुतं स्त्रीरत्नशतसंकुलम्।
सुव्यूढकच्यं हनुमान प्रविवेश महागृहम्॥ ४४॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षष्ठः सर्गः॥ ६॥

घोषवद्भिर्मृदङ्गातिरिक्तैरपि घोषवद्भिर्वाद्यैर्विनादितम्॥ ४३॥ ४४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षष्ठः सर्गः॥ ६॥

---

## सप्तमः सर्गः ।

स वेश्मजालं बलवान् ददर्श
व्यासक्तवैदूर्य्यसुवर्णजालम् ।
यथा महत्प्रावृषि मेघजालं
विद्युद्विनद्धं सविहङ्गजालम् ॥ १ ॥

निवेशनानां विविधाश्च शालाः
प्रधानशङ्खायुधचापशालाः ।
मनोहराश्चापि पुनर्विशाला
ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २ ॥

अथ रावणप्रधानगृहं वर्णयति । स इति । व्यासक्तानि सम्बद्धानि वैदूर्य्यखचितानि च सुवर्णजालानि स्वर्णगवाक्षाणि यस्मिन् तत् । सविहङ्गजालमिति गृहमेघयोर्विशेषणम् ॥ १ ॥

प्रधानैः प्रशस्तैः शङ्खादिभिः शालन्ते शोभन्ते तादृशीः निवेशनानां शाला अवान्तरगृहाणि ददर्श । पुनश्च विशालाश्चन्द्रशाला ददर्श । वेश्माद्रिषु औन्नत्यादद्रितुल्यवेश्मसु । चन्द्रशालाः शिरोगृहाणि । चन्द्रकान्तमणिघटितशाला वा ॥ २ ॥

गृहाणि नानावसुराजितानि
देवासुरैश्चापि सुपूजितानि।
सर्वैश्च दोषैः परिवर्जितानि
कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥

तानि प्रयत्नाभिसमाहितानि
मयेन साक्षादिव निर्मितानि।
महीतले सर्वगुणोत्तराणि
ददर्श लङ्काधिपतेर्गृहाणि ॥ ४ ॥

ततो ददर्शोच्छ्रितमेघरूपं
मनोहरं काञ्चनचारुरूपम्।
रक्षोऽधिपस्यात्मबलानुरूपं
गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५ ॥

महीतले स्वर्गमिव प्रकीर्णं
श्रिया ज्वलन्तं बहुरत्नकीर्णम्।

वसु धनं स्वबलेत्यत्र स्वशब्दो रावणवाची। कुबेरादावयवेन लङ्काया आच्छिद्यगृहीतत्वात्। यद्वा स्वशब्दो हनुमद्वाची स्वबलेनार्जितानि लब्ध-प्रवेशानि ॥ ३ ॥

प्रयत्नेनाभितः सम्यगाहितानि यथायोग्यं स्थापितानि प्रयत्नाभि-समाहितानि। विश्वकर्मकृतान्यपि मायया विचित्ररचनादर्शनेन मयेन निर्मितानीव ॥ ४ ॥

गृहोत्तमं प्रधानगृहेष्वप्युत्तमम् अप्रतिरूपरूपं विषमरूपम् ॥ ५ ॥

नानातरूणां कुसुमावकीर्णं
गिरेरिवाग्रं रजसावकीर्णम् ॥ ६ ॥
नारीप्रवेकैरिव दीप्यमानं
तडिद्भिरम्भोधरमर्च्यमानम् ।
हंसप्रवेकैरिव वाह्यमानं
श्रिया युतं खे सुकृतं विमानम् ॥ ७ ॥
यथा नगाग्रं बहुधातुचित्रं
यथा नभश्च ग्रहचन्द्रचित्रम् ।
ददर्श युक्तीकृतचारुमेघ-
चित्रं विमानं बहुरत्नचित्रम् ॥ ८ ॥
मही कृता पर्वतराजिपूर्णा
शैलाः कृता वृक्षवितानपूर्णाः ।

प्रकीर्णं पातितम् । रत्नकीर्णं रत्नपूर्णम् । रजसा पुष्प-रजसा ॥ ६ ॥

नारीप्रवेकैः नारीश्रेष्ठैः । इवशब्दार्थे । तडिद्भिरर्च्यमानं पूज्य-मानमम्भोधरं मेघमिव । हंसश्रेष्ठैर्वाह्यमानमूह्यमानं विमान-मिव ॥ ७ ॥

नानावर्णैरयुक्तोऽपि अयुक्तःकृतो युक्तीकृतः स चासौ चारुमेघश्च तद्वद्विचित्रं विमानं पुष्पकाख्यम् ॥ ८ ॥

वृक्षाः कृताः पुष्पवितानपूर्णाः
पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९ ॥
कृतानि वेश्मानि च पाण्डुराणि
तथा सुपुष्पा अपि पुष्करिण्यः।
पुनश्च पद्मानि सकेसराणि
वनानि चित्राणि सरोवराणि ॥ १० ॥
पुष्पाह्वयं नाम विराजमानं
रत्नप्रभाभिश्च विघूर्णमानम्।
वेश्मोत्तमानामपि चोच्चमानं
महाकपिस्तत्र महाविमानम् ॥ ११ ॥
कृताश्च वैदूर्य्यमया विहङ्गा
रूप्यप्रवालैश्च तथा विहङ्गाः।

यत्र पुष्पके मही अनेकजननामाधारस्थानं पर्वतराज्यापूर्णाम्। पर्वतादयस्तत्र मणिस्वर्णादिनिर्मिताः नत्विदं चित्ररूपमिति भामितव्यम्। अनन्तवानरसेनाया निर्बाधं तत्रावस्थानस्य वक्ष्यमाणत्वात्। किञ्च स्वामीच्छानुसारेण सङ्कोचविकासौ तस्य वक्ष्यति। स्वेच्छया हनुमद्देहवत्। वितानं समूहः। एकावली यथालङ्कारः ॥ ९ ॥

कृतानि अस्य यत्नेत्यादि शेषः ॥ १० ॥

पुष्पाह्वयं नाम ददर्शेत्यन्वयः। वेश्मोत्तमानां देववेश्मभूतविमानानां मध्ये उच्चमानं सौभाग्यपरमकाष्ठां प्राप्तम् ॥ ११ ॥

चित्राश्च नानावसुभिर्भुजङ्गा
जात्यानुरूपास्तुरगाः शुभाङ्गाः ॥ १२ ॥
प्रवालजाम्बूनदपुष्पपक्षाः
सलीलमावर्जितजिह्मपक्षाः ।
कामस्य साक्षादिव भान्ति पक्षाः
कृता विहङ्गाः सुमुखाः सुपक्षाः ॥ १३ ॥
नियुज्यमानाश्च गजाः सुहस्ताः
सकेसराश्चोत्पलपत्रहस्ताः ।
बभूव देवी च कृता सुहस्ता
लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४ ॥

कृताश्चेति। तत्र विमाने इति शेषः। नानावसुभिः रूप्यसुवर्णाद्यैः। जात्यानुरूपा जातितुरङ्गसदृशाः तुरङ्गविशेषणाश्चैतत् ॥ १२ ॥

प्रवालजाम्बूनदकृतानि पुष्पाणि पक्षेषु येषाम्। आवर्जिताः सङ्कुचिता जिह्मा वक्राः पक्षा येषां ते। साक्षात् कामस्य पक्षा इव येषां पक्षा भान्ति। तदुद्दीपकत्वात्तादृशा उच्यमानगुणा विहङ्गास्तत्र कृताः ॥ १३ ॥

नियुज्यमानाः व्याप्रियमाणाः वक्ष्यमाणाया लक्ष्म्या अभिषेके इति शेषः। हस्तः शुण्डा। पद्माकरविहारिगजाकारनिर्माणात् सकेसरत्वमुत्पलपत्रहस्तत्वञ्च तेषां तादृशा गजास्तत्र कृता बभूवुरिति शेषः। पद्मिनि पद्मवत् सरसि ॥ १४ ॥

इतीव तद् गृहमभिगम्य शोभमानं
सविस्मयो नगमिव चारुकन्दरम्।
पुनश्च तत्परमसुगन्धिसुन्दरं
हिमात्यये नगमिव चारुकन्दरम् ॥ १५ ॥
ततः स तां कपिरभिपत्य पूजितां
चरन् पुरीं दशमुखबाहुपालिताम्।
अदृश्य तां जनकसुतां सुपूजितां
सुदुःखितां पतिगुणवेगनिर्जिताम् ॥ १६ ॥
ततस्तदा बहुविधभावितात्मनः
कृतात्मनो जनकसुतां सुवर्त्मनः।

इतीव एवं प्रकारं चारुकन्दरं चारुगुहं नगमिव पर्वतमिव चारु-दर्शनं तत् गृहमधिगम्य सविस्मयो बभूव इति शेषः। हिमात्यये वसन्ते परमसुगन्धि चारुकन्दरं नगमिव वृक्षमिव कन्दरोऽत्र कोटरः। पुनश्चाभिगम्य सविस्मयोऽभूदिति शेषः। परिच्छेदानवगमा-दिति भावः ॥ १५ ॥

अभिपत्याभिपत्य चरन् सञ्चरन्। पतिगुणवेगनिर्जितां पतिगुण-वेगेन पतिगुणानिरन्तरध्यानेन निर्जितां निर्जितदुःखां अदृश्य अदृष्ट्वा दुःखितोऽभूदिति शेषः। आर्षो ल्यप् ॥ १६ ॥

बहुविधभावितात्मनः नानाप्रकारेण सर्वजगत्पूजितस्वभावस्य। स्वभाववाची आत्मशब्दः। कृतात्मनः शिक्षितान्तःकरणस्य सुव-

अपश्यतो भवदतिदु:खितं मन:
सचक्षुष: प्रविचरतो महात्मन: ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
सप्तमः सर्गः ॥ ७ ॥

त्मनः शोभनमोतिमार्गवर्त्तिनः सचक्षुषः श्रुतिस्मृतिन्यायरूपचक्षुःसहि-
तस्य ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे सप्तम: सर्ग: ॥ ७ ॥

---

# अष्टमः सर्गः।

स तस्य मध्ये भवनस्य संस्थितो
महद्विमानं मणिरत्नचित्रम्।
प्रतप्तजाम्बूनदजालकृत्रिमं
ददर्श धीमान् पवनात्मजः कपिः॥ १॥

तदप्रमेयप्रतिकारकृत्रिमं
कृतं स्वयं साध्विति विश्वकर्मणा।
दिवं गते वायुपथे प्रतिष्ठितं
व्यराजतादित्यपथस्य लक्ष्म तत॥ २॥

अथ विशिष्टपुष्पकं वर्णयितुमाह,—स इति। मणिरत्नैर्मणिश्रेष्ठैश्चित्रितम्। प्रतप्तजाम्बूनदजालानां तन्मयगवाक्षाणां कृत्रिमं कृतिर्यस्मिन् तत्तस्य भवनस्य रावणगृहस्य मध्ये महद्विमानं पुष्पकं ददर्श॥ १॥

अप्रमेयप्रतिकारकृत्रिमम्। अप्रमेयैरपरिच्छेद्यसौन्दर्य्यादिभिः प्रतिकारैः प्रतिमादिभिः कृत्रिमं निवृत्तचित्रशोभम्। पाठान्तरन्त्वसाम्प्रदायिकमिति कतकः। विश्वकर्मणा च स्वयं साध्विति कृतं सन्निर्मितेषु इदमतिसाध्वित्यनुमोदितमित्यर्थः। दिवमाकाशं गते वायुपथे प्रतिष्ठितम्। वायुपथस्यैवादित्यपथत्वात्तस्य चिह्नभूतम्॥ २॥

न तत्र किञ्चिन्न कृतं प्रयत्नतो
न तत्र किञ्चिन्न महार्घरत्नवत्।
न ते विशेषा नियताः सुरेष्वपि
न तत्र किञ्चिन्न महाविशेषवत् ॥ ३ ॥

तपःसमाधानपराक्रमार्जितं
मनःसमाधानविचारचारिणम्।
अनेकसंस्थानविशेषनिर्मितं
ततस्ततस्तुल्यविशेषनिर्मितम् ॥ ४ ॥

मनः समाधाय तु शीघ्रगामिनं
दुरासदं मारुततुल्यगामिनम्।
महात्मनां पुण्यकृतां महर्द्धिनां
यशस्विनामग्र्यमुदामिवालयम् ॥ ५ ॥

तत्र तादृशं किञ्चिन्न यत्प्रयत्नतो न कृतम्। अपितु सर्वं प्रयत्नकृतमेवेत्यर्थः। यदवयवजातं महार्घरत्नवन्न बहुमूल्यरत्नवन्न तादृशं किञ्चिदपि तत्र न ये विशेषा रचनाविशेषास्तत्र नियताः प्रतिष्ठितास्ते सुरेषु सुरविमानेष्वपि न। महाविशेषो गुणाधिक्यम् ॥ ३ ॥

तपसा उपवासादिना समाधानेन भगवति चित्तसमाधानेन लब्धो यः पराक्रमस्तेन रावणार्जितम्। मनःसमाधानेन यत्र विचारो गमनंतस्य तत्र सञ्चरणशीलं मनःसङ्कल्पितदेशगमनशीलम्। संस्थानविशेषा रचनाविशेषाः। ततस्ततस्तस्मात्तस्मादाहृतेन तुल्येन दिव्यविमाननिर्माणोचितेन विशेषेण विशिष्टपदार्थेन निर्मितम् ॥ ४ ॥

विशेषमालम्ब्य विशेषसंस्थितं
विचित्रकूटं बहुकूटमण्डितम्।
मनोऽभिरामं शरदिन्दुनिर्मलं
विचित्रकूटं शिखरं गिरेर्यथा ॥ ६ ॥
वहन्ति यत् कुण्डलशोभितानना
महाशना व्योमचरा निशाचराः।
विवृत्तविध्वस्तविशाललोचना
महाजवा भूतगणाः सहस्रशः ॥ ७ ॥

मनः समाधाय स्वामिमनोऽनुरुध्य तु शीघ्रगामित्यादिधर्मकम्। दुरासदं पापिभिरिति शेषः। दुरावरमिति पाठे शत्रुभिर्दुर्निवारमित्यर्थः महर्द्धिनाम्। दीर्घाभावश्छान्दसः। एवं तुल्यगामिनमित्यत्र पुंस्त्वं विमानशब्दोऽर्द्धर्चादिर्वा। अप्रमदां महासुखानां पुण्यकृतामेवालयम् आस्पदम्। इव शब्द एवार्थे। अत्र तस्याचेतनत्वेऽपि तदभिमानिदेवतायाश्चित्तज्ञत्वादि बोध्यम् ॥ ५ ॥

विशेषं गतिविशेषमालम्ब्य विशेषे व्योमखण्डादेशविशेषे संस्थितम्। विचित्राणामाश्चर्यवस्तूनां कूटं समवायभूतम्। बहुभिः कूटैः शालाभिर्मण्डितम्। गिरेर्विचित्रावान्तरशृङ्गवच्छिखरमिव ॥ ६ ॥

उह्यमानविशेषमाह भूतगणा यद्वहन्ति तद्विमानं तत्र ददर्शेत्यन्वयः। विवृत्तानि विघूर्णानि विध्वस्तानि स्वस्मिन्नेवाधिविशालानि लोचनानि येषाम्। निशाचराः निशास्वप्यहरिव चरन्ति ते ॥ ७ ॥

वसन्तपुष्पोत्करचारुदर्शनं
वसन्तमासादपि चारुदर्शनम्।
सपुष्पकं तत्र विमानमुत्तमं
ददर्श तद्वानरवीरसत्तमः ॥ ८ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
अष्टमः सर्गः ॥ ८ ॥

वसन्तपुष्पोत्करचारुदर्शनं वसन्तकालिकपुष्पसमूहेन चारुदर्शनम् ॥ ८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे अष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः।

तस्यालयवरिष्ठस्य मध्ये विमलमायतम्।
ददर्श भवनश्रेष्ठं हनूमान् मारुतात्मजः॥ १॥

अर्द्धयोजनविस्तीर्णमायतं योजनं महत्।
भवनं राक्षसेन्द्रस्य बहुप्रासादसङ्कुलम्॥ २॥

मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम्।
सर्वतः परिचक्राम हनूमानरिसूदनः॥ ३॥

उत्तमं राक्षसावासं हनूमानवलोकयन्।
आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम्॥ ४॥

चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च।
परिक्षिप्तमसम्बाधं रक्ष्यमाणमुदायुधैः॥ ५॥

तस्येति। आलयवरिष्ठस्य लङ्कामध्यवर्त्तिनो गृहसमूहवतो महा-
गृहस्य॥ १॥

अर्द्धयोजनविस्तीर्णं तिर्य्यक्प्रमाणम्॥ २॥ ३॥

आवासं बहुराक्षससाधारणं वासस्थानम्। राक्षसेन्द्रनिवेशनं
तन्मात्रवासस्थानम्॥ ४॥

परिक्षिप्तं युक्तम् ईदृग्गजादिसत्त्वेऽपि असम्बाधत्वेनातिविस्तृतत्वं
सूच्यते॥ ५॥

राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् ।
आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥ ६ ॥
तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम् ।
वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७ ॥
या हि वैश्रवणे लक्ष्मीर्या चन्द्रे हरिवाहने ।
सा रावणगृहे रम्या नित्यमेवानपायिनी ॥ ८ ॥
या च राज्ञः कुबेरस्य यमस्य वरुणस्य च ।
तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥ ९ ॥
तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत्सुनिर्मितम् ।
बहुनिर्यूहसंयुक्तं ददर्श पवनात्मजः ॥ १० ॥
ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा ।
विमानं पुष्पकं नाम सर्वरत्नविभूषितम् ॥ ११ ॥

राक्षसीभिः राक्षसजातिजाभिः पत्नीभिरावृतम् । तथा विक्रम्य। हृताभी राजकन्याभिश्चावृतम् ॥ ६ ॥

पन्नगैयुतं सागरमिव तत् पश्यति स्म ॥ ७ ॥

लक्ष्मीः शोभा रावणगृहे लङ्कायाम् ॥ ८ ॥

ऋद्धिरैश्वर्यं तद्विशिष्टा ततोऽप्यधिका ॥ ९ ॥

तस्य हर्म्यस्य अर्द्धयोजनविस्तीर्णत्वादिधर्मयः वेश्म सखीकशयनगृहमिति कतकः । वेश्मपुष्पकाख्यमिति तीर्थः । अत्र तीर्थव्याख्या ज्यायसी । निर्यूहाः मत्तवारणाः ॥ १० ॥

परेण तपसा लेभे यत् कुबेरः पितामहात् ।
कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥ १२ ॥
ईहामृगसमायुक्तैः कार्त्तस्वरहिरण्मयैः ।
सुकृतैराजितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥ १३ ॥
मेरुमन्दरसङ्काशैरुल्लिखद्भिरिवाम्बरम् ।
कूटागारैः शुभागारैः सर्वतः समलङ्कृतम् ॥ १४ ॥
ज्वलनार्कप्रतीकाशैः सुकृतं विश्वकर्मणा ।
हेमसोपानयुक्तञ्च चारुप्रवरवेदिकम् ॥ १५ ॥
जालवातायनैर्युक्तं काञ्चनैः स्फाटिकैरपि ।
इन्द्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६ ॥
विद्रुमेण विचित्रेण मणिभिश्च महाधनैः ।
निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥ १७ ॥

पुनर्हनुमदारोहणयोग्यतया पुष्पकं वर्णयति ब्रह्मणोऽर्थे इति । भगवतो लीलाफलकमित्यर्थः ॥ ११ ॥ १२ ॥

कार्त्तस्वरहिरण्मये स्वर्णजातिविशेषौ रूप्यस्वर्णौ इति कश्चित् ईहामृगो वृकस्तत्प्रतिमायुक्तैः ॥ १३ ॥

कूटागारैः प्रसादाग्रगृहैः शुभागारैर्विहारयोग्यगृहैः ॥ १४ ॥

चार्व्यः सुन्दराः प्रवराः श्रेष्ठा वेदिका यस्मिंस्तत् ॥ १५ ॥

जालवातायनयोः काञ्चनकार्त्तस्वरयोर्मध्यासवयोश्च कश्चिद्भेदं परिकल्प्य निर्वाहः । एवमिन्द्रनीलमहानीलयोरपि ॥ १६ ॥

चन्दनेन च रक्तेन तपनीयनिभेन च।
सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम् ॥ १८ ॥
विमानं पुष्पकं दिव्यमारुरोह महाकपिः।
तत्रस्थः सर्वतो गन्धं पानभक्ष्यान्नसम्भवम् ॥ १९ ॥
दिव्यं सम्मूर्च्छितं जिघ्रन् रूपवन्तमिवानिलम्।
सगन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ॥ २० ॥
इत एहीत्युवाचेव तत्र यत्र स रावणः।
ततस्तां प्रस्थितः शालां ददर्श महतीं शिवाम् ॥ २१ ॥

निस्तलाभिर्वर्तुलाभिर्निरुपमाभिर्वा तलेन कुट्टिमप्रदेशेन ॥ १७ ॥
आदित्यतरुणोपमं तरुणादित्यसदृशम् ॥ १८ ॥
तत्रस्थः पुष्पकविमानस्थः ॥ १९ ॥

संमूर्च्छितं व्याप्तं गन्धवहमनिलमपि तद्गन्धेन रूपवन्तमिव गन्धद्रव्यरूपमिव। तद्वायुसम्बन्धात् सगन्धः स्वयं महासत्त्वम् उत्तमं बन्धुं बन्धुरिव जिघ्रन्नभूत्। गन्धापरोक्ष्यात्तद्वहवायुरप्यपरोक्ष इवाभूत् ॥ २० ॥

यत्र स रावणस्तत्र स्थाने। इत एहीत्युवाचेव उक्तगुणवायुः कर्त्ता। दिव्यगन्धेन रावणशयनगृहं ज्ञातवानित्यर्थः। ततस्तस्मात् पुष्पकादवरुह्य गन्धानुमितां तां रावणशयनशालां प्रस्थितस्तां शालां ददर्श। यत्तु पुष्पकस्यैव सा शाला तत इत्यस्य तदनन्तरमित्यर्थः इति तच्चिन्त्यम्। प्रस्थित इति पदस्वारस्यात्। अर्द्धयोजनविस्तीर्णामित्यादिना मूलालयप्रदर्शनोपक्रमाच्च। मूलालयं दृष्ट्वा तद्बहिःस्थं पुष्पकमन्विष्यततस्य एव

रावणस्य महाकान्तां कान्तामिव वरस्त्रियम् ।
मणिसोपानविकृतां हेमजालविराजिताम् ॥ २२ ॥
स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् ।
मुक्तावज्रप्रवालैश्च रूप्यचामीकरैरपि ॥ २३ ॥
विभूषितां मणिस्तम्भैः सुबहुस्तम्भभूषिताम् ।
समैर्ऋजुभिरत्युच्चैः समन्तात् सुविभूषितैः ॥ २४ ॥
स्तम्भैः पक्षैरिवात्युच्चैर्दिवं सम्प्रस्थितामिव ।
महत्या कुथयास्तीर्णां पृथिवीलक्षणांकया ॥ २५ ॥
पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालिनीम् ।

रावणशयनगृहं तत् गृहवत्त्वेनुमाय पुष्पकादवरुह्य तं प्रतिस्थितस्तां ददर्शेत्येव न्याय्यमिति कतकः । यत्त्वित्यादिनोक्ता व्याख्यैव युक्तेति मम भाति । अवतीर्य्य विमानाच्च हनुमान् मारुतात्मज इत्यग्रे उपसंहारात् ॥ २१ ॥

महाकान्ताम् अतिरमणीयामित्यर्थकं शालाविशेषणम् । कान्तां कमनीयां तां शालामेव विशिनष्टि मणीत्यादिना । स्त्रियः सञ्चरणी-मिवेत्यन्तेन मणिकृतसोपानानि विशेषेण कृतानि यस्याम् ॥ २२ ॥

तलं कुट्टिमभूः । दन्तान्तरितरूपिकामिति दन्तैरन्तरितानि मध्ये मध्ये निर्मितानि रूपाणि यस्यां सा । चामीकरैरपि अन्तरितरूपिका-मित्यनुकर्षः ॥ २३ ॥

बहुत्वबोधनाय पुनस्तम्भानुवादः । बहुत्वञ्च विपुलत्वं समन्तात् सुविभूषितैः रत्नादिभिरिति शेषः ॥ २४ ॥

नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् ॥ २६ ॥
परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम्।
धूम्रामगुरुधूपेन विमलां हंसपाण्डुराम् ॥ २७ ॥
पत्रपुष्पोपहारेण कल्माषीमिव सुप्रभाम्।
मनसो मोदजननीं वर्णस्यापि प्रसाधिनीम् ॥ २८ ॥
तां शोकनाशिनीं दिव्यां श्रियः सञ्जननीमिव।
इन्द्रियाणीन्द्रियार्थैस्तु पञ्चपञ्चभिरुत्तमैः ॥ २९ ॥
तर्पयामास मातेव तदा रावणपालिता।
स्वर्गोऽयं देवलोकोऽयमिन्द्रस्यापि पुरी भवेत् ॥ ३० ॥

अत्युच्चैः पक्षैरिवात्युच्चैः स्तम्भैर्दिवं संप्रस्थितामिवेत्युत्प्रेक्षा। कुथया विशालविचित्रकम्बलास्तरणेन पृथिवीलक्ष्म्यां चतुरस्रतलम् ॥ २५ ॥

सराष्ट्रग्रहशालिनीमिति पृथिवीविशेषणम् ॥ २६ ॥

हंसपाण्डुरां हंसवत् पाण्डुराम् ॥ २७ ॥

कल्माषी शबलवर्णा वसिष्ठगौः अनेन सर्वानन्ददायित्वं रिपूणाम-भृष्यत्वं सर्वमनोरथपूरकत्वञ्च सूच्यते। वर्णस्य देहकान्तेः प्रसाधिनीं सम्पादिकाम् ॥ २८ ॥

तां शालां ददर्शेति पूर्वेण सम्बन्धः। पञ्चभिरिन्द्रियार्थैः शब्दस्पर्श-रूपरसगन्धैः पञ्चेन्द्रियाणि श्रोत्रत्वक्चक्षुरसनघ्राणानि। तर्पयामास हनुमत इति शेषः। रावणपालिता शालेति शेषः। स्वर्गः ज्योतिष्टो-मादिकफलभोगभूमिः। देवलोको वायुवरुणादिलोकः। इन्द्रस्य पुरी अमरावती ॥ २९ ॥ ३० ॥

सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥ २१ ॥
प्रध्यायत इवापश्यत् प्रदीपांस्तत्र काञ्चनान्।
धूर्त्तानिव महाधूर्त्तैर्देवनेन पराजितान् ॥ २२ ॥
दीपानाञ्च प्रकाशेन तेजसा रावणस्य च।
अर्च्चिभिर्भूषणानाञ्च प्रदीप्तेत्यभ्यमन्यत ॥ २३ ॥
ततोऽपश्यत् कुथासीनं नानावर्णाम्बरस्रजम्।
सहस्रं वरनारीणां नानावेषविभूषितम् ॥ २४ ॥
परिवृत्तेऽर्धरात्रे तु पाननिद्रावशं गतम्।
क्रीडित्वोपरतं रात्रौ प्रसुप्तं बलवत्तदा ॥ २५ ॥
तत् प्रसुप्तं विरुरुचे निःशब्दान्तरभूषितम्।
निःशब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ २६ ॥

परा गान्धर्वीसिद्धिः तन्मायेत्यर्थः ॥ २१ ॥

प्रध्यायतो ध्याननिष्ठान्। धूर्त्ताद्देवनः तत्रातिसमर्थो महाधूर्त्तः। महाधूर्त्तेन देवनेन पराजितो हि धूर्त्तः धननाशात् ध्यायन्निवास्ते। काञ्चनान् दीपान् काञ्चनदीपस्तम्भस्थदीपान् विपुलदीपाग्रे क्षुद्रदीपप्रभा इव रावणतेजोऽभिभूतानपश्यदित्यर्थः ॥ २२ ॥

प्रदीप्ता अग्निज्वाला ज्वालिता अनेनाग्निर्मोमिदाहः सूचितः ॥२३॥

कुथासीनम् आस्तीर्णकुथायां शयानम् ॥ २४ ॥

बलवत् प्रसुप्तमपश्यदित्यनुकर्षः ॥ २५ ॥

तत्प्रसुप्तं प्रसुप्तजनं रावणगृहं निःशब्दान्तरं निर्गतस्य अशब्दभेदं नूपुरसिञ्जित्वादिभिर्भूषितम् ॥ २६ ॥

तासां संवृतदान्तानि मीलिताक्षीणि मारुतिः।
अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥ ३७ ॥
प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये।
पुनःसंवृतपत्राणि रात्राविव बभुस्तदा ॥ ३८ ॥
इमानि मुखपद्मानि नियतं मत्तषट्पदाः।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः ॥ ३९ ॥
इति वाऽमन्यत श्रीमानुपपत्त्या महाकपिः।
मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥ ४० ॥
सा तस्य शुशुभे शाला ताभिः स्त्रीभिर्विराजिता।
शरदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥ ४१ ॥
स च ताभिः परिवृतः शुशुभे राक्षसाधिपः।
यथा ह्युडुपतिः श्रीमांस्ताराभिरिव संवृतः ॥ ४२ ॥

निद्रितत्वात्संवृतानि संवृतपक्ष्माणि तादृशानि च तानि दान्तानि म्लानानि मीलिताक्षीणि अतिसंवृतपक्ष्माणि। स्वर्गदेवलोकादेरिव संवृतमीलितयोरपि भेदो बोध्यः। यद्वा संवृतदान्तानीत्यस्यैव व्याख्यानं निमीलिताक्षीणीति। यद्वा संवृतत्वमोष्ठयोः ॥ ३७ ॥

क्षपाक्षये पद्मानीव प्रबुद्धानि भूत्वा पुनः रात्रौ संवृतपत्राणि पद्मानीव बभुरित्यन्वयः ॥ ३८ ॥

मुखानि दृष्ट्वा हनुमतोजातां सम्भावनामाह,—इमानीति। फुल्लानि प्रार्थयन्तीत्यन्वयः। नियतं नित्यम् ॥ ३९ ॥

उपपत्त्या युक्त्या। सलिलोद्भवैः पद्मैः ॥ ४० ॥ ४१ ॥ ४२ ॥

याश्च्यवन्तोऽवरात्तारा: पुण्यशेषसमावृता: ।
इमास्ता: सङ्गता: कृत्स्ना इति मेने हरिस्तदा ॥ ४३ ॥
ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ।
प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥ ४४ ॥
व्यावृत्तकचपीनस्रक्प्रकीर्णवरभूषणा: ।
पानव्यायामकालेषु निद्रोपहतचेतस: ॥ ४५ ॥
व्यावृत्ततिलका: काश्चित् काश्चिदुद्भ्रान्तनूपुरा: ।
पार्श्वे गलितहाराश्च काश्चित्परमयोषित: ॥ ४६ ॥
मुक्ताहारवृताश्चान्या: काश्चित्प्रस्रस्तवासस: ।
व्याविद्धरशनादामा: किशोर्य इव वाहिता: ॥ ४७ ॥

पुण्यशेषसमावृतास्तद्युक्ताः सङ्गताः एकदेशमिलिताः। अनेन सान्दर्थात्युत्प्रेक्षारूपोऽत्युक्त्यलङ्कारः ॥ ४३ ॥

तदेवाह,—ताराणामिति। प्रभा देहकान्तिः वर्णो रूपम्। प्रसादस्त्वौज्ज्वल्यम् ॥ ४४ ॥

व्यावृत्ताः कचाः पीनस्रजश्च यासान्तास्च। प्रकीर्णानि इतस्ततः क्षिप्तानि वरभूषणानि यासान्ताः। पानव्यायामकालेषु पानानन्तरकालिकगानन्त्यरत्यादिक्रीडाकालेषु उक्तगुणाः अतएव श्रमाद्भिद्रोपहतचेतसः ॥ ४५ ॥

उक्तं भूषणप्रकिरणमेव प्रपञ्चयति। व्यावृत्तेति। उद्भ्रान्ताः स्वस्थानात् स्खलिता नूपुरा यासान्ताः। पार्श्वे एकस्मिन् गलिता विस्रस्ता हारा यासान्ताः ॥ ४६ ॥

अकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः।
गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥ ४८ ॥
चन्द्रांशुकिरणाभाश्च हाराः कासाञ्चिदुद्गताः।
हंसा इव बभुः सुप्तास्तनमध्येषु योषिताम् ॥ ४९ ॥
अपरासाञ्च वैदूर्य्याः कादम्बा इव पक्षिणः।
हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥ ५० ॥
हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः।
आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥ ५१ ॥

मुक्ताहारैर्वृताः छिन्नमुक्ताहाराः। व्याविद्धं विक्षिप्तं रशनादाम-काञ्चीगुणो यासान्ताः। एवम्भूषणबन्धराहित्येन शयने उपमा। वाहिताः किशोर्य्य इव कृतभारवहनाः श्रान्ताः किशोर्य्यो वड़वा यथा अध्वश्रमापनयनाय लुण्ठनेन व्यत्यस्तपल्ययनबन्धाः शेरते तद्वत् ॥ ४७ ॥

अकुण्डलधराः कुण्डलधरणरहिताः गलितकुण्डला इति यावत्। विच्छिन्ना आमृदिताश्च स्रजो यासान्ताः अत्र रेजुरित्यनुकर्षः ॥ ४८ ॥

अंशवः प्रभाः किरणास्तदाधाराः अंशवः सूक्ष्मरश्मय किरणाः स्थूलरश्मय इत्यन्ये। वैपरीत्येन स्थिताः हाराः मुक्ताहाराः ॥ ४९ ॥

वैदूर्य्याः वैदूर्य्यमणिमालाः। कादम्बाः कलहंसाः। अत्र कादम्ब-शब्देन कारण्डवपदवाच्यो जलकाक उच्यते। अन्यथा वैदूर्य्योपमानत्वम-सङ्गतं स्यात्। हेमसूत्राणि च अत्रापि स्तनमध्योद्गतानीत्यनुकर्षः। चक्रवाकानां पीतत्वसादृश्यादुपमानत्वम् ॥ ५० ॥

किङ्किणीजालसङ्काशास्ता हेमविपुलाम्बुजाः।
भावग्राह्या यशस्तीराः सुप्ता नद्य इवाबभुः॥ ५२॥
मृदुष्वङ्गेषु कासाञ्चित्कुचाग्रेषु च संस्थिताः।
बभूवुर्भूषणानीव शुभा भूषणराजयः॥ ५३॥
अंशुकान्ताश्च कासाञ्चिन्मुखमारुतकम्पिताः।
उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः॥ ५४॥
ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः।
नानावर्णसुवर्णानां वक्त्रमूलेषु रेजिरे॥ ५५॥

स्त्रीषु नानावर्णभूषणानि हंसादिस्थानीयानि। स्त्रोकटीपुरोभागो जघनम्॥ ५१॥

किङ्किणीजालसङ्काशाः तद्वन्मुकुलितनयनाः। तत्स्थाने च नद्यां मुकुलितकुमुदानि हेमविपुलाम्बुजत्वेन वक्तृनिगरणं उपमाने तु न निगरणम्। किङ्किणीजालसम्बन्धा इति पाठे किङ्किणीजालसम्बाधत्वमुभयत्रापि स्पष्टमेव शब्दवच्चसाधर्म्यात्। किङ्किणीशब्देन लहरीणामप्युक्तिः। भावा विलासा एव स्वाभिकसुरतभावो वा ग्राह्यो यासान्ताः यशोऽतिगुणवत्त्वख्यातयश एव तीरं यासान्ताः। यशः शब्देन लक्षणया कान्तिरित्यन्ये। सुप्ता नार्यो नद्य इव बभुः॥ ५२॥

भूषणराजयः विमर्दजनितरेखाः। भूषणराश्य इति पाठेऽप्ययमेवार्थो लक्षणादिना बोध्यः॥ ५३॥

वक्त्राणामुपर्युपरीत्यन्वयः॥ ५४॥

व्याधूयमानमंशुकान्तमत्रोच्यते। ता इति विधेयमपेक्ष्य स्त्रीलिङ्ग-

ववल्गुश्चाच कासाञ्चित्कुण्डलानि शुभार्चिषाम् ।
मुखमारुतसङ्कम्पैर्मन्दं मन्दञ्च योषिताम् ॥ ५६ ॥
शर्करासवगन्धः स प्रकृत्या सुरभिः सुखः ।
तासां वदननिःश्वासः सिषेवे रावणं तदा ॥ ५७ ॥
रावणाननशङ्काश्च काश्चिद्रावणयोषितः ।
मुखानि च सपत्नीनां उपाजिघ्रन् पुनः पुनः ॥ ५८ ॥
अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः ।
अस्वतन्त्राः सपत्नीनां प्रियमेवाचरंस्तदा ॥ ५९ ॥

निर्देशः पत्नीनाम् अर्थाद्रावणस्य । अनेकवर्णवत्सुवर्णतन्तुनिर्मितवाससां पताका इवेत्यन्वयः ॥ ५५ ॥

शुभार्चिषां कासाञ्चिद्योषितां कुण्डलानि मुखमारुतसङ्कम्पैः मुखमारुतसंसर्गकृतचलनैर्मन्दं मन्दं ववल्गुः । तेन कुण्डलानामतिलघुता तेन तासां सौकुमार्य्यातिशयो व्यञ्जः ॥ ५६ ॥

शर्करासवः आसवविशेषस्तद्योगात्तद्गन्धः प्रकृत्या च सुरभिरतएव सुखस्तासां वदननिःश्वासो रावणं सिषेवे । यद्वा प्रकृत्या असुरभिरपि वायुरिति शेषः । तासां वदननिश्वाससम्युक्तः अर्थ्य आद्यजन्तम् । अत एव शर्करासवगन्धो रावणं सिषेवे ॥ ५७ ॥

रावणाननशङ्काः मदनिद्राभयजचित्तवैवश्यात् । सपत्नीनाञ्च सपत्नीनामपि मुखान्युपाजिघ्रन् ॥ ५८ ॥

ननु सपत्नीभिः कृतं मुखाघ्राणं ताः कथं सहन्तेत्यत आह,—अत्यर्थमिति । अत्यासक्तेरेवास्वतन्त्राः मदपारवश्याच्च तथाभूताः वर-

बाहू उपनिधायान्याः पारिहार्यविभूषिताः।
अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे॥ ६०॥
अन्या वक्षसि चान्यस्यास्तस्याः काचित्पुनर्भुजम्।
अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा कुचौ॥ ६१॥
ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः।
परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः॥ ६२॥
अन्योन्यस्याङ्गसंस्पर्शात् प्रीयमाणाः सुमध्यमाः।
एकीकृतभुजाः सर्वाः सुषुपुस्तत्र योषितः॥ ६३॥
अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा।
मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा॥ ६४॥

स्त्रियः सपत्नीभिराघ्रातमुखा अपि सपत्नीनां प्रियमेवाचरन्। ता अपि तासां मुखानि रावणमुखशङ्कयोपाजिघ्रन्नित्यर्थः॥ ५९॥

पारिहार्या वलयः। उपनिधाय उपधानं कृत्वा अंशुकानि च उपनिधायेत्यनुकर्षः॥ ६०॥

अन्येत्यादि श्लोकद्वये शिश्यिर इति पदं यथायोगं वचनविपरिणामेन योज्यम्। उपनिधायेति पदञ्च॥ ६१॥

स्नेहोऽत्र रावणीयः॥ ६२॥

एकीकृतभुजाः परस्परसम्बद्धभुजाः॥ ६३॥

अतएवाह,—अन्योऽन्येति। माला पुष्पमाला उपमेये मत्तषट्पदस्थानीयाः कचभारानेत्रद्वन्द्वानि च॥ ६४॥

लतानां माधवे मासि फुल्लानां वायुसेवनात्।
अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥ ६५ ॥
प्रतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम्।
आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ॥ ६६ ॥
उचितेष्वपि सुव्यक्तं न तासां योषितां तदा।
विवेकं शक्यमाधातुं भूषणाङ्गाम्बरस्रजाम् ॥ ६७ ॥
रावणे सुखसंविष्टे ताः स्त्रियो विविधप्रभाः।
ज्वलन्तः काञ्चना दीपाः प्रेक्ष्यन्तोनिमिषा इव ॥ ६८ ॥

लतानां वनमिवेत्यन्वयः। अन्योऽन्यसम्बन्धेन मालाकारेण ग्रथितमिव ॥ ६५ ॥

प्रतिवेष्टिता वृक्षाणां नायकानाञ्च शोभनाः स्कन्धा येन तत्। अन्योऽन्यं धावन्तो ये भ्रमरास्तैराकुलम्। स्त्रीणामपि पद्मिनीत्वात् भ्रमराकुलत्वम्। केशपाशनेत्रादयो वा तासु भ्रमराः। स्त्रीवनं स्त्रीसमूहः ॥ ६६ ॥

तासां योषितामुचितेषु स्थानेषु। सुव्यक्तं प्रतिष्ठितानामपि भूषणाङ्गाम्बरस्रजां विवेकमाधातुं कर्तुं न शक्यम्। अपरिमितत्वात् भूषणभूष्ययोरैकरूप्यात्। परस्परसङ्कुचितत्वेन सुमत्वाच्च इमानि अस्या भूषणानि इमान्यन्यस्या इति विवेकः कर्तुमशक्य इति भ्रान्तिमानलङ्कारोऽत्र व्यङ्ग्यः ॥ ६७ ॥

सुखसंविष्टे सुखसुप्ते काञ्चनाः काञ्चनस्तम्भाः दीपाः दीपस्थामि-

राजर्षिविप्रदैत्यानां गन्धर्वाणाञ्च योषितः।
रक्षसाञ्चाभवन् कन्यास्तस्य कामवशङ्गताः॥ ६९॥
युद्धकामेन ताः सर्वा रावणेन हृताः स्त्रियः।
समदा मदनेनैव मोहिताः काश्चिदागताः॥ ७०॥

न तत्र काश्चित्प्रमदाः प्रसह्य
वीर्य्योपपन्नेन गुणेन लब्धाः।
न चान्यकामापि न चान्यपूर्वा
विना वरार्हां जनकात्मजान्तु॥ ७१॥

पुरुषाः कर्तारः। स्त्रियः कर्म। अनेन रावणो जायति तेषामपि तद्दर्शने भयं सूचितम्॥ ६८॥

राजर्षयो विप्रदैत्याश्च। अस्य ब्रह्मराक्षसत्वात् अस्ति विप्रकन्याविवाहेऽधिकारः। कामवशङ्गताः सत्यस्तस्य योषितोऽभवन्। अनेन तासामप्यनुरागः सूचितः॥ ६९॥

अस्य बहुस्त्रीप्राप्तिर्बलात् स्वारस्याच्चेत्याह। युद्धेत्यादि। सर्वा इति बाहुल्याऽभिप्रायम्। आसां हरणे एतद्बन्धुभिर्युद्धं भविष्यतीति युद्धकामना पूर्वं हृताः। काश्चित्समदास्तरुण्यो मदनमोहिताः स्वयमेवैनं वृतवत्यः॥ ७०॥

अस्यैव विवरणं न तत्र काश्चिदिति। वीर्य्योपपन्नेनापि तेन तत्र तासु मध्ये काश्चित्प्रमदाः प्रसह्य न हृताः किन्तु गुणेन निरतिशयैश्वर्य्यवीर्य्यसौन्दर्य्यादिगुणेन स्वत एव लब्धाः। तत्र बह्वीयामन्यकामा च

न चाकुलीना न च हीनरूपा
नादक्षिणा नानुपचारयुक्ता।
भार्य्याऽभवत्तस्य न हीनसत्वा
न चापि कान्तस्य न कामनीया ॥ ७२ ॥
बभूव बुद्धिस्तु हरीश्वरस्य
यदीदृशी राघवधर्मपत्नी।
इमा महाराक्षसराजभार्य्याः
सुजातमस्येति हि साधुबुद्धेः ॥ ७३ ॥
पुनश्च सोऽचिन्तयदात्तरूपो
ध्रुवं विशिष्टा गुणतो हि सीता।

नाहृता अन्यपर्वा च नाहृता। कथमेवं प्रत्यक्षापलापस्तत्राह,—विनेति। वराहां श्रेष्ठरामार्हाम् ॥ ७१ ॥

उपचारः उत्तमाम्बरभूषणमालादिः कान्तस्य रावणस्य कामनीया मनोज्ञा न तादृशी च न ॥ ७२ ॥

अथ सीताप्येतत्स्त्र्यन्तर्गता नवेति विकल्प्याद्ये रावणस्य भद्रमेवेति बुद्धिर्हनूमतो जातेत्याह,—बभूवेति। साधुबुद्धेर्हरीश्वरस्येति बुद्धिर्बभूव। इमा महाराक्षसराजभार्य्याः यथा तद्युक्ताः राघवधर्मपत्न्यपि ईदृशी एतदन्तर्गता एतद्युक्ता च यदि स्यात् तदाऽस्य रावणस्य सुजातं भद्रमेव भवति। रावणभुक्तेति मया निवेदिते सति सीतायां मृतायामिव राघवस्यापेक्षयाद्रावणवधयत्नाप्रसक्तेरिति भावः ॥ ७३ ॥

यदीत्यनेन सूचितमस्य पक्षस्यात्यन्तासम्भावितत्वमाह,—पुनश्चेति।

अथाधमस्यां कृतवान्महात्मा
लङ्केश्वरः कष्टमनार्य्यकर्म ॥ ७४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
नवमः सर्गः ॥ ९ ॥

पश्चात्तरश्च सोऽचिन्तयद्विचारेण निश्चितवानित्यर्थः। चिन्ताप्रकारः हि प्रसिद्धमेतत्। यत्सीता देवी गुणतः पातिव्रत्यादिगुणैर्विशिष्टा। अथ यत इत्यर्थः। यतो महात्मा महाबलो लङ्केश्वरः निरवधिकैश्वर्य्यवैशिष्ट्यमनेन सूचितम्। ईदृशोऽस्यां आगत्याम् अनार्य्यकर्मापहरणरूपं कर्म आत्तरूपः परिगृहीतमायारूपः सन् कष्टं सक्लेशं यथा भवति तथा कृतवान्। यद्येषा ऐश्वर्य्यादौ सरागा स्यात् तदा स्वरसत एव नयनं स्यात्। न च तदस्ति अस्माभिः तद्विलापनादेव रावणेन क्लेशपूर्वं नयनस्य चानुभवादित्याशयः। आर्त्तरूप इति पाठे आर्त्तं सञ्जातं रूपं यस्येत्यर्थं हनुमद्विशेषणम्। आन्तरं पीडा सूचकरूप इत्यर्थः॥७४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् ।
अवेक्षमाणो हनुमान् ददर्श शयनासनम् ॥ १ ॥
दान्तकाञ्चनचित्राङ्गैर्वैदूर्य्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २ ॥
तस्य चैकतमे देशे दिव्यमाल्योपशोभितम् ।
ददर्श पाण्डुरं छत्रं ताराधिपतिसन्निभम् ॥ ३ ॥
जातरूपपरिक्षिप्तं चित्रभानोः समप्रभम् ।
अशोकमालाविततं ददर्श परमासनम् ॥ ४ ॥

तत्र शालायां दिव्योपमं दिविभवेन स्वर्गवर्तिपदार्थेनैवोपमा यस्य तत् शयनस्यासनं पल्यङ्कप्रतिष्ठापनवेदिका । अवेक्षमाणः इतस्ततः पश्यन् ॥ १ ॥

—अस्यैव वर्णनं दान्तेत्यादि । गजदन्तमयानि स्वर्णमयानि च चित्राणि चित्रयुतानि अङ्गानि पादादिरूपाणि येषान्तैर्महार्हास्तरणोपेतैः बहुमूल्यास्तरणयुक्तैः । वैदूर्य्यैरित्युपलक्षणम् । वैदूर्य्यपद्मरागादिनिर्मितैर्वरासनैः श्रीशयनपल्यङ्कैर्महाधनैर्बहुमूल्यैरुपपन्नम् ॥ २ ॥ ३ ॥

परमासनं पल्यङ्कं तस्यैकदेशे ददर्श । अशोकपुष्पमालायुक्तम् । यद्वा यत्सन्निधाने शोकाभावस्तादृशमालायुतम् । चित्रभानुरग्निः ॥ ४ ॥

वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः।
गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम्॥ ५॥
परमास्तरणास्तीर्णमाविकाजिनसंवृतम्।
दामभिर्वरमाल्यानां समन्तादुपशोभितम्॥ ६॥
तस्मिन् जीमूतसङ्काशं प्रदीप्तोज्ज्वलकुण्डलम्।
लोहिताक्षं महाबाहुं महारजतवाससम्॥ ७॥
लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना।
सन्ध्यारक्तमिवाकाशे तोयदं सतडिद्गुणम्॥ ८॥
वृतमाभरणैर्दिव्यैः सुरूपं कामरूपिणम्।
स वृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम्॥ ९॥
क्रीडित्वोपरतं रात्रौ वराभरणभूषितम्।
प्रियं राक्षसकन्यानां राक्षसानां सुखावहम्॥ १०॥

वालव्यजनं चामरम्। ननु सम्भोगगृहे तथापि निद्रास्य कथं वालव्यजनवीजनं कथञ्च हनूमतस्ताभिरदर्शनमिति चेन्न। यन्त्रनिर्मित-स्त्रीप्रतिमादिभिः तथापि तत्सम्भवात्॥ ५॥

आविकाजिनं ऊर्णायुचर्म। तद्धि परममृदुलं तेन संवृतं संवृत-पर्यन्तप्रदेशम्। माल्यं पुष्पम्॥ ६॥

तस्मिन् प्रसुप्तमिति शेषः। महारजतं स्वर्णं तत्तन्तुनिर्मितवासो-धारिणम्॥ ७॥

रावणस्य लडितत्वाभावेऽपि वासः॥ ८॥

पीत्वाप्युपरतञ्चापि ददर्श स महाकपिः ।
भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥ ११ ॥
निःश्वसन्तं यथा नागं रावणं वानरोत्तमः ।
आसाद्य परमोद्विग्नः सोपासर्पत्सुभीतवत् ॥ १२ ॥
अथारोहणमासाद्य वेदिकान्तरमाश्रितः ।
क्षीवं राक्षसशार्दूलं प्रेक्षते स्म महाकपिः ॥ १३ ॥
शुशुभे राक्षसेन्द्रस्य स्वपतः शयनं शुभम् ।
गन्धहस्तिनिसंविष्टं यथा प्रस्रवणं महत् ॥ १४ ॥
काञ्चनाङ्गदसन्नद्धौ ददर्श स महात्मनः ।
विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥ १५ ॥

स वृक्षवनगुल्माढ्यं पुष्पसञ्छितवृक्षवनगुल्माढ्यं मन्दरमिव स्थितम् । बाहवो यस्य वृक्षाः नासादयो गुल्माः ॥ ९ ॥ १० ॥

पीत्वाप्युपरतम् । अपिना क्रीडित्वाप्युपरतम् ॥ ११ ॥

यथा नागं गजमिव निःश्वसन्तं रावणम् । आसाद्य प्राप्य परमोद्विग्नः । अयं पापी देवीं हृतवानित्येतत्समीपेवस्थानमनुचितमिति चिन्तयित्सोपासर्पत् सुभीतवत् सुभीतो यथा भयभीतः पिशाचादिसंमुखे स्थातुमशक्तोऽपसर्पति तद्वत् ॥ १२ ॥

आरोहणं सोपानं वेदिकान्तरं सोपानवेदिकान्तरं सोपानपर्वमध्यम् ॥ १३ ॥

यस्य गन्धमान्ये गजाः पलायन्ते सगन्धगजः मत्तगजेन नितरां संविष्टम् अधिष्ठितं महत्प्रस्रवणमिव ॥ १४ ॥

ऐरावतविषाणाग्रैरापीडनकृतव्रणौ।
वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ॥ १६॥
पीनौ समसुजातांसौ सङ्गतौ बलसंयुतौ।
सुलक्षणनखाङ्गुष्ठौ स्वङ्गुलीयकलक्षितौ॥ १७॥
संहतौ परिघाकारौ वृत्तौ करिकरोपमौ।
विक्षिप्तौ शयने शुभ्रे पञ्चशीर्षाविवोरगौ॥ १८॥
शशक्षतजकल्पेन सुशीतेन सुगन्धिना।
चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलङ्कृतौ॥ १९॥
उत्तमस्त्रीविमृदितौ गन्धोत्तमनिषेवितौ।
यक्षपन्नगगन्धर्वदेवदानवराविणौ॥ २०॥
ददर्श स कपिस्तस्य बाहू शयनसंस्थितौ।
मन्दरस्यान्तरे सुप्तौ महाही रुषिताविव॥ २१॥

महात्मनः महाशरीरस्य। विक्षिप्तौ प्रसारितौ॥ १५॥

आपीडने युद्धे कृतव्रणौ क्षतव्रणकिणौ। वज्रोल्लिखितौ क्षतौ पीनांसौ ययोस्तौ। वज्रचक्रयोरप्यसाध्यत्वमनयोरिति भावः॥ १६॥

समौ सुजातौ अंसौ सङ्गतौ दृढसन्धिबन्धौ स्वङ्गुलीयकलक्षितौ शोभनाङ्गुलीयकभूषितौ॥ १७॥ १८॥

शशस्य क्षतजं रक्तमतिलोहितवर्णम्॥ १९॥

उत्तमस्त्रीणां विमृदितं विमर्दनमालिङ्गनादि ययोस्तौ॥ २०॥

ददर्श इत्यादरेण ददर्श भातः पुनरुक्तिः। महाही महासर्पौ।

ताभ्यां सपरिपूर्णाभ्यामुभाभ्यां राक्षसेश्वरः ।
शुशुभेऽचलसङ्काशः शृङ्गाभ्यामिव मन्दरः ॥ २२ ॥
चूतपुन्नागसुरभिर्बकुलोत्तमसंयुतः ।
मृष्टान्नरससंयुक्तः पानगन्धपुरःसरः ॥ २३ ॥
तस्य राक्षसराजस्य निश्चक्राम महामुखात् ।
शयानस्य विनिःश्वासः पूरयन्निव तद्गृहम् ॥ २४ ॥
मुक्तामणिविचित्रेण काञ्चनेन विराजता ।
मुकुटेनापवृत्तेन कुण्डलोज्ज्वलिताननम् ॥ २५ ॥
रक्तचन्दनदिग्धेन तथा हारेण शोभिना ।
पीनायतविशालेन वक्षसाभिविराजता ॥ २६ ॥
पाण्डरेणापविद्धेन क्षौमेण क्षतजेक्षणम् ।

अत्र द्विभुजत्वकथनात् युद्धादिकाले एव विंशतिभुजत्वं दशशीर्षत्वञ्चेति बोध्यम् ॥ २१ ॥ २२ ॥

बकुलोत्तमसंयुतः उत्तमबकुलगन्धयुतः अयं पुरुषविशेषश्वासधर्म इति ज्ञातव्यः । चूतादिसुरभित्वञ्च तदधिवासितवस्त्रसेवनात् । मृष्टान्नरससंयुक्तः सद्रसोत्तमान्नगन्धोपेतः पानं मधु राक्षसत्वादेव वामाचारेण पूजाकरणार्थं मधुपानम् ॥ २३ ॥ २४ ॥

अपावृत्तेन निद्रावशात्पर्यस्तेन विराजता मुकुटेन उपलक्षितमिति शेषः ॥ २५ ॥

शोभिना हारेण शोभनहारवता वक्षसोपलक्षितमिति शेषः ॥२६॥

महार्हेण सुसंवीतं पीतेनोत्तरवाससा ॥ २७ ॥
माषराशिप्रतीकाशं निःश्वसन्तं भुजङ्गवत्।
गाङ्गे महति तोयान्ते प्रसुप्तमिव कुञ्जरम् ॥ २८ ॥
चतुर्भिः काञ्चनैर्दीपैर्दीप्यमानं चतुर्दिशम्।
प्रकाशीकृतसर्वाङ्गं मेघं विद्युद्गणैरिव ॥ २९ ॥
पादमूलगताश्चापि ददर्श सुमहात्मनः।
पत्नीः स प्रियभार्य्यस्य तस्य रक्षःपतेर्गृहे ॥ ३० ॥
शशिप्रकाशवदना वरकुण्डलभूषणाः।
अम्लानमाल्याभरणा ददर्श हरियूथपः ॥ ३१ ॥
नृत्यवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः।
वराभरणधारिण्यो निषन्ना ददृशे कपिः ॥ ३२ ॥

अपविद्धेन पर्य्यस्तेन पाण्डुरेण क्षौमेण परिधानीयेन कटेरधः संवीतं पीतेनोत्तरीयेण सुसंवीतमित्यर्थः ॥ २७ ॥

तोयान्ते तोयमध्ये ॥ २८ ॥

काञ्चनैः काञ्चनस्तम्भगैः चतुर्दिशं चतुर्दिक्षु दीप्यमानम्। अत्यन्तसंयोगे द्वितीया। विद्युल्लतैरिवेति पाठे पुंस्त्वमार्षम् ॥ २९ ॥

उक्तगुणं रावणं ददर्श पादमूलगास्तत्पत्नीश्च ददर्श। रक्षः पतेर्गृह इत्युत्तरान्वयि ॥ ३० ॥

अम्लानमाल्याभरणा देवकन्या इत्यर्थः ॥ ३१ ॥

राक्षसेन्द्रभुजावङ्कञ्च गच्छन्ति ताः। यथा प्रिया इति यावत्। धारिण्यः धारिणीः। निषन्नाः शयिताः ॥ ३२ ॥

वज्रवैदूर्य्यगर्भाणि श्रवणान्तेषु योषिताम् ।
ददर्श तापनीयानि कुण्डलान्यङ्गदानि च ॥ ३३ ॥
तासां चन्द्रोपमैर्वक्त्रैः शुभैर्ललितकुण्डलैः ।
विराजत विमानं तन्नभस्तारागणैरिव ॥ ३४ ॥
मदव्यायामखिन्नास्ता राक्षसेन्द्रस्य योषितः ।
तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः ॥ ३५ ॥
अङ्गहारैस्तथैवान्या कोमलैर्नृत्यशालिनी ।
विन्यस्तशुभसर्वाङ्गी प्रसुप्ता वरवर्णिनी ॥ ३६ ॥
काचिद्वीणां परिष्वज्य प्रसुप्ता संप्रकाशते ।
महानदीप्रकीर्णेव नलिनी पोतमाश्रिता ॥ ३७ ॥
अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा ।
प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला ॥ ३८ ॥

बाहुल्यप्रधानत्वादङ्गदानामपि श्रवणान्ते दर्शनं बोध्यम् ॥ ३३ ॥

विमानं मण्डपविशेषः पुष्पकमित्यन्ये । विराजत व्यराजत ॥ ३४ ॥

मदव्यायामेन रतिजेन ॥ ३५ ॥

कोमलैः अकर्कशैः अङ्गहारैः अङ्गविक्षेपैः नृत्यशालिनीति वासनाबलेन नृत्याभिनयोपेततया सुप्तवतीत्यर्थः । विशेषेण न्यस्तं शुभं येषु धाम्ना तादृशानि सर्वाण्यङ्गानि यस्याः ॥ ३६ ॥

महानदीप्रकीर्णा महानद्यां प्रकीर्णपुष्पपत्रा दैवात्सङ्गतं पोतं प्लवमाश्रिता नलिनी पद्मिनीव पोतस्थानेऽत्र वीणा ॥ ३७ ॥

मड्डुको वाद्यभेदः ॥ ३८ ॥

पटहञ्चारुसर्वाङ्गी न्यस्य शेते शुभस्तनी।
चिरस्य रमणं लब्ध्वा परिष्वज्येव कामिनी॥ ३९ ॥
काचिद्वीणां परिष्वज्य सुप्ता कमललोचना।
वरं प्रियतमं गृह्य सकामेव हि कामिनी॥ ४० ॥
विपञ्चीं परिगृह्यान्या नियता नृत्यशालिनी।
निद्रावशमनुप्राप्ता सहकान्तेव भामिनी॥ ४१ ॥
अन्या कनकसङ्काशैर्मृदुपीनैर्मनोरमैः।
मृदङ्गं परिविध्याङ्गैः प्रसुप्ता मत्तलोचना॥ ४२ ॥
भुजपार्श्वान्तरस्थेन कक्षगेन कृशोदरी।
पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा॥ ४३ ॥
डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा।
प्रसुप्ता तरुणं वत्समुपगुह्येव भामिनी॥ ४४ ॥
काचिदाडम्बरं नारी भुजसम्भोगपीडितम्।
कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता॥ ४५ ॥
कलशीमपविध्यान्या प्रसुप्ता भाति भामिनी।

न्यस्य आलिङ्ग्येत्यर्थः॥ ३९॥

काचिदिति॥ ४०॥

विपञ्ची वीणाविशेषः॥ ४१॥ ४२॥

मदकृतश्रमा मदवती। अर्श आद्यच्। वादनेन कृतश्रमा च॥ ४३॥

डिण्डिमं परिगृह्य आलिङ्ग्य आसक्तडिण्डिमा एकदेशसम्बद्धान्यडिण्डिमा। तरुणं रमणं वत्सं पुनश्च परिगृह्य प्रसुप्तेव॥ ४४॥

वसन्ते पुष्पशबला मालेव परिमार्जिता ॥ ४६ ॥
पाणिभ्याञ्च कुचौ काचित्सुवर्णकलशोपमौ ।
उपगुह्याबला सुप्ता निद्राबलमुपागता ॥ ४७ ॥
अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना ।
अन्यामालिङ्ग्य सुश्रोणी निद्रावशमुपागता ॥ ४८ ॥
आतोद्यानि विचित्राणि परिष्वज्य वरस्त्रियः ।
निपीड्य च कुचैः सुप्ताः कामिन्यः कामुकानिव ॥ ४९ ॥
तासामेकान्तविन्यस्ते शयानां शयने शुभे ।
ददर्श रूपसम्पन्नामथ तां स कपिः स्त्रियम् ॥ ५० ॥
मुक्तामणिसमायुक्तैर्भूषणैः सुविभूषिताम् ।
विभूषयन्तीमिव च स्वश्रिया भवनोत्तमम् ॥ ५१ ॥
गौरीं कनकवर्णाभामिष्टामन्तःपुरेश्वरीम् ।
कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥ ५२ ॥

आडम्बरं वाद्यभेदः । भुजसम्भोगेन भुजाश्लेषेण पीडितम् आश्लिष्टं कृत्वा ॥ ४५ ॥

कलशीं जलसंभृतामपविध्य पर्य्यस्य स्वपर्य्यस्तकलशोदकार्द्रशरीरा नारी वसन्ते परिमार्जिता ग्लानिपरिहाराय कृतजलसेका पुष्पशबला शबलपुष्पमालेव भाति ॥ ४६ ॥ ४७ ॥ ४८ ॥

आतोद्यानि वाद्यानि ॥ ४९ ॥

अथ प्रधानमहिषीदर्शनं तासामिति । एकान्तविन्यस्ते तासां शयनात् पृथग्विन्यस्ते । तां स्त्रियं वक्ष्यमाणगुणां स्त्रियम् ॥ ५० ॥ ५१ ॥

स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः।
तर्कयामास सीतेति रूपयौवनसम्पदा।
हर्षेण महता युक्तो ननन्द हरियूथपः॥ ६३॥

आस्फोटयामास चुचुम्ब पुच्छं
ननन्द चिक्रीड़ जगौ जगाम।
स्तम्भानरोहन्निपपात भूमौ
निदर्शयन् स्वां प्रकृतिं कपीनाम्॥ ६४॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
दशमः सर्गः॥ १०॥

गौरीं पीतामतएव कनकवर्णाभाम् इष्टां रावणस्यातिप्रियाम् अन्तःपुरस्त्रीणामीश्वरीं कपिर्मन्दोदरीं ददर्शेत्यन्वयः॥ ५२॥

तर्कयामास सम्भावयामास। एथगेकान्ते परममञ्चे अतिरूपाया दर्शनात् प्रायेणेयं सीतेति सम्भावना हनूमतः। तदेवाह,—रूपयौवन-सम्पदा नत्वौचित्यालोचनं कृतवानिति भावः। हर्षो मुखविकासादिः आनन्दो मानसः॥ ५३॥

आनन्दं कार्य्यद्वाराह। आस्फोटयामासेति। आस्फोट पुच्छचुम्ब-नादिजातिधर्मः। जगामस्तम्भानित्यनुकर्षः। सर्वा अप्येतास्चेष्टा उपांश्विति बोध्यम्। एवं चेष्टायां हेतुः स्वां कपीनां प्रकृतिं निदर्शयन्निति॥ ५४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे दशमः सर्गः॥ १०॥ ०

# एकादशः सर्गः ।

अवधूय च तां बुद्धिं बभूवावस्थितस्तदा ।
जगाम चापरां चिन्तां सीतां प्रति महाकपिः ॥ १ ॥
न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम् ॥ २ ॥
नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ।
न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥ ३ ॥
अन्येयमिति निश्चित्य भूयस्तत्र चचार सः ।
पानभूमौ हरिश्रेष्ठः सीतासन्दर्शनोत्सुकः ॥ ४ ॥

अवधूय च तां बुद्धिं सीता सम्भावनयाप्रवृत्तां कार्यविषयां बुद्धिम् अवधूय त्यक्त्वा अवस्थितः स्थिरतास्वभावे प्रतिष्ठितः सीतां प्रति तद्विषयामितरामन्यां चिन्तां पूर्वचिन्ताविघटिकां जगाम ॥ १ ॥

तामेव चिन्तामभिनयति । न रामेणेति ॥ २ ॥

अन्यं नरं पुरुषमुपस्थातुमङ्गीकर्तुं नार्हति नाध्यवस्यति । तत्र हेतुर्नहि रामेति ॥ ३ ॥

यदेवमतोऽन्येयमनुभूतेति निश्चित्य तत्र गृहे पानभूमौ पानशालायां चचार पुनः सम्यगन्वेषणायेति शेषः ॥ ४ ॥

क्रीड़ितेनापराः क्लान्ता गीतेन च तथापराः।
नृत्येन चापराः क्लान्ताः पानविप्रहतास्तथा ॥ ५ ॥
मुरजेषु मृदङ्गेषु चेलिकासु च संस्थिताः।
तथास्तरणमुख्येषु संविष्टाश्चापराः स्त्रियः ॥ ६ ॥
अङ्गनानां सहस्रेण भूषितेन विभूषणैः।
रूपसंलापशीलेन युक्तगीतार्थभाषिणा ॥ ७ ॥
देशकालाभियुक्तेन युक्तवाक्याभिधायिना।
रताधिकेन संयुक्तां ददर्श हरियूथपः ॥ ८ ॥
अन्यत्रापि वरस्त्रीणां रूपसंलापशायिनाम्।

अथ पानभूमौ दर्शनप्रकारः क्रीड़ितेनेति। क्रीड़ितेनाक्षादिक्रीड़या क्लान्ताः सत्यस्तयैव निद्रिता इति शेषः। विप्रहताः अति निद्रिताः स्त्रियो ददर्शेति शेषः ॥ ५ ॥

मुरजेषु मृदङ्गेषु चेलिकासु चेलिका वाद्यविशेष इत्याहुः। तेषु प्रसक्ता एव संस्थिताः स्थिता एव निद्रिताः संविष्टाः सुप्ता ददर्शेति शेषः। आकर्षो वा ॥ ६ ॥

रूपसंलापशीलेन निद्राद्भ्रमवशात्तस्यास्तस्या रूपविषयो यः संलापो वर्णनं तच्छीलेन। युक्तं यथा भवति तथा गीतार्थस्य भाषणशीलेन ॥ ७ ॥

देशकालाभियुक्तेन तद्विषयपरिज्ञानकुशलेन। युक्तवाक्यस्य देशकालोचितवाक्यस्याभिधानशीलेन। एतत्सर्वं निद्राद्भ्रमवशादेव बोध्यम्। रताधिकेन उत्तमक्रीड़ावता संयुक्तां पानभूमिं ददर्श ॥ ८ ॥

सहस्रं युवतीनान्तु प्रसुप्तं स ददर्श ह ॥ ९ ॥
देशकालाभियुक्तन्तु युक्तवाक्याभिधायि तत्।
रताविरतसंसुप्तं ददर्श हरियूथपः ॥ १० ॥
तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः।
गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥ ११ ॥
स राक्षसेन्द्रः शुशुभे ताभिः परिवृतः स्वयम्।
करेणुभिर्यथाऽरण्ये परिकीर्णो महाद्विपः ॥ १२ ॥
सर्वकामैरुपेताञ्च पानभूमिं महात्मनः।
ददर्श कपिशार्दूलस्तस्य रक्षःपतेर्गृहे ॥ १३ ॥
मृगाणां महिषाणाञ्च वराहाणाञ्च भागशः।

अन्यथापीत्यादि श्लोकद्वयं नव्याः प्रमादान्न पठन्ति। अन्यथापि पानभूमिन्न रावणशयनगृहे बहिःस्थां पानभूमिं दृष्ट्वा पुनरभ्यन्तरे शयनस्थाने आगत्यान्वेषणम्। रूपविषयो यः संलापो वर्णनं तत्पूर्वं शयानानां युवतीनां वरस्त्रीणां सहस्रमुत्कृष्टानगुणं ददर्श ॥ ९ ॥

तत्पूर्वदृष्टं रताविरतसंसुप्तं रतान्तेऽविरतसुप्तं गाढसुप्तम् ॥ १० ॥

तासां मध्ये इति ॥ ११ ॥

स इति ॥ १२ ॥

सस्त्रीकरावणगृहे पुनः सम्यगन्विष्य पुनर्बहिः पानभूमिमागत्य-विचिनोति सर्वकामैरिति। पूर्वं नृत्यादियुक्ततत्स्त्रीमात्रदर्शनं इदानीं तस्याः सर्वकामोपेतत्वदर्शनम् ॥ १३ ॥

तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ॥१४॥
रौक्मेषु च विशालेषु भाजनेष्वप्यभक्षितान्।
ददर्श कपिशार्दूलो मयूरान् कुक्कुटांस्तथा ॥ १५॥
वराहवाध्रीणसकान् दधिसौवर्चलायुतान्।
शल्यान् मृगमयूरांश्च हनूमानन्ववैक्षत ॥ १६ ॥
क्रकलान् विविधांश्छागान् शशकानर्द्धभक्षितान्।
महिषानेकशल्यांश्च छेदांश्च कृतनिष्ठितान् ॥ १७ ॥
लेह्यानुच्चावचान् पेयान् भोज्यानुच्चावचानि च।
तथाम्ललवणोत्तंसैर्विविधै रागखाण्डवैः ॥ १८ ॥

तदेव प्रपञ्चयति। मृगाणामिति ॥ १४ ॥ १५ ॥

पुनः पुनर्वराहादिमृगादिकथनं बहुत्वलवर्त्तितया भूयस्त्वप्रकाशनाय। वाध्रीणसः पक्षिविशेषः। कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः। सवै वाध्रीणसः प्रोक्त इति विष्णुधर्मोक्तेः। छागविशेषो वा। त्रिःपिबन्त्विन्द्रियक्षीणं श्वेतं वृद्धप्रजापतिम्। वाध्रीणसञ्च तं प्राहुर्याज्ञिकाः श्राद्धकर्मणीति स्मृतेः। मुखकर्णौ च पानसमये जलं स्पृशन्ति यस्य सः त्रिःपिबः। वाध्रीणसः खड्गमृग इति वृत्तायुध + दध्ना सौवर्चलेन लवणविशेषेण च आयुतान् संस्कृतान् ॥ १६ ॥

क्रकलक्रकरौ समौ पक्षिविशेषवाचकौ। एकशल्या मत्स्यविशेषाः कृतनिष्ठितान् कृतं निष्ठितं निष्ठानं पाको येषां तान् ॥ १७ ॥

अम्लरसो लवणरसश्च उत्तंसो जिह्वाजाड्यपरिहारकत्तौ येषु भक्ष्यमाणेषु तैः रागखाण्डवैः। सीता मध्वादिमधुरो द्राक्षादाडिमजो रसः।

महानूपुरकेयूरैरपविद्धैर्महाधनैः ।
पानभाजनविक्षिप्तैः फलैश्च विविधैरपि ॥ १९ ॥
कृतपुष्पोपहारा भूरधिकां पुष्यति श्रियम् ।
तत्र तत्र च विन्यस्तैः सुश्लिष्टशयनासनैः ॥ २० ॥
पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते ।
बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ॥ २१ ॥
मांसैः कुशलसंयुक्तैः पानभूमिगतैः पृथक् ।
दिव्याः प्रसन्ना विविधाः सुराः कृतसुरा अपि ॥ २२ ॥
शर्करासवमाध्वीकाः पुष्पासवफलासवाः ।
वासचूर्णैश्च विविधैर्मृष्टास्तैस्तैः पृथक् पृथक् ॥ २३ ॥

विरलखण्डकृतो रागः सान्द्रखण्डखाण्डवः स्मृतः इत्युक्तः । केशरादिभिः कृतवर्णाः षड्रसोपेताः सूपारागखाण्डवा इत्यन्ये ॥ १८ ॥

महाधनैर्बहुमूल्यैः ॥ १९ ॥

सुश्लिष्टैः सुघटितसन्धिबन्धैः ॥ २० ॥

उत्कृष्टैः स्वर्णरत्नमयशयनासनैः पानभूमिः प्रदीप्तेवोपलक्ष्यते । बहुप्रकारैः बहुपाकभेदैरत एव त्रिविधैर्विविधरसवद्भिः वरसंस्कारेण श्रेष्ठसंस्कारकद्रव्ययोगेन संस्कृतैः ॥ २१ ॥

कुशलसंयुक्तैर्निपुणपाचकपक्वैर्मांसैः सहोत्थमानगुणाः सुरा ददर्श । तत्र दिव्याः सुराः स्वतोभ्यः कदम्बादिभ्यः स्वतः प्रादुर्भूताः । कृतसुराः शौण्डिकैरुत्पादिताः ॥ २२ ॥

सन्तता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः ।
हिरण्मयैश्च कलशैर्भाजनैः स्फाटिकैरपि ॥ २४ ॥
जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता ।
राजतेषु च कुम्भेषु जाम्बूनदमयेषु च ॥ २५ ॥
पानश्रेष्ठां तथा भूमिं कपिस्तत्र ददर्श ह ।
सोऽपश्यच्छातकुम्भानि सीधोर्मणिमयानि च ॥ २६ ॥
तानि तानि च पूर्णानि भाजनानि महाकपिः ।
क्वचिदर्द्धावशेषाणि क्वचित् पीतान्यशेषतः ॥ २७ ॥
क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह ।
क्वचिद्भक्ष्यांश्च विविधान् क्वचित् पानं विभागतः ॥ २८ ॥

सुरासवान्तरभेदानाह—शर्करासवेत्यादि । शर्करोपादानकः आसवः शर्करासवः । मधूपादानो माध्वीकः द्राक्षोपादानक इत्यन्ये । मधूकपुष्पादिजः पुष्पासवः खर्जूरफलादिजः फलासवः वासचूर्णैः सुगन्धद्रव्यचूर्णैः सृष्टा अधिवासिताः दृष्टा इति शेषः ॥ २३ ॥

अथ भूमिवर्णनं बहुषु देशेषु संस्थितैर्माल्यैः सन्तता आपानभूमिः शुशुभे उह्यमानविशेषणैः करकैर्वर्टैश्च सन्तता ॥ २४ ॥

राजतादिषु कुम्भेषु ॥ २५ ॥

पानश्रेष्ठां सम्भृतप्रशस्तपानां सीधोर्मद्यस्य भाजनानीत्यन्वयः ॥ २६ ॥

भाजनानि पानभाजनानि अर्द्धावशेषाणि अर्द्धावशिष्टपानानि पीतानि पीतासवानि ॥ २७ ॥

क्वचिद्वस्त्रविशेषाणि पश्यन् वै विचचार ह ।
शयनान्यत्र नारीणां शून्यानि बहुधा पुनः ।
परस्परं समाश्लिष्य काश्चित् सुप्ता वराङ्गनाः ॥ २९ ॥
काश्चिच्च वस्त्रमन्यस्या अपहृत्योपगुह्य च ।
उपगम्याबला सुप्ता निद्राबलपराजिता ॥ ३० ॥
तासामुच्छ्वासवातेन वस्त्रं माल्यञ्च गात्रजम् ।
नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम् ॥ ३१ ॥
चन्दनस्य च शीतस्य सीधोर्मधुरसस्य च ।
विविधस्य च माल्यस्य पुष्पस्य विविधस्य च ॥ ३२ ॥

नैव प्रपीतानि पूर्णासवान्येव पानानि पानभाजनानि विभागतः विभागेन पानं ददर्श इदममुकमिदममुकमिति विभज्य ददर्शेत्यर्थः ॥ २८ ॥

शून्यानि पतिशून्यानि अतएव परस्परं समाश्लिष्येति ॥ २९ ॥

अपहृत्य बलाद्गृहीत्वोपगुह्य प्रावृत्य उपगम्य तच्छयनस्थानं प्राप्य । ताश्च ...विचचारेति सम्बन्धः ॥ ३० ॥

गात्रजं गात्रस्थम् ॥ ३१ ॥

अथ पानभूमितोऽपि बहिरागत्य तत्र स्थिते पुष्पके प्रवृत्तिकाल इव निर्गमकालेऽपि बहुगन्धो वायुरन्यस्त्रियस्तानुभूत इत्याह,—चन्दनस्य चेत्यादि । पानभूम्यादिकमपि पुष्पकस्थमेवेत्यन्ये । सीधु मद्यम् ॥ ३२ ॥

बहुधा मारुतस्तस्य गन्धं विविधमुद्वहन् ।
स्नानानां चन्दनानाञ्च धूपानाञ्चैव मूर्च्छितः ॥ ३३ ॥
प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा ।
श्यामावदातास्तत्रान्याः काश्चित् कृष्णा वराङ्गनाः ॥ ३४ ॥
काश्चित् काञ्चनवर्णाङ्ग्यः प्रमदा राक्षसालये ।
तासां निद्रावशत्वाच्च मदनेन विमूर्च्छितम् ॥ ३५ ॥
पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ।
एवं सर्वमशेषेण रावणान्तःपुरं कपिः ॥ ३६ ॥
ददर्श स महातेजा न ददर्श च जानकीम् ॥ ३७ ॥
निरीक्षमाणश्च ततस्ताः स्त्रियः स महाकपिः ।
जगाम महतीं शङ्कां धर्मसाध्वसशङ्कितः ॥ ३८ ॥

स्नानानां चन्दनानामिति पाठे स्नानार्हचन्दनानामित्यर्थः । विविधं गन्धमुद्वहन् प्रववौ । अतएव सुरभिर्गन्धो विमाने मूर्च्छितो व्याप्तः ॥ ३३ ॥

तत्रान्याः बहिःप्रतिष्ठितपुष्पके इत्यर्थः ॥ ३४ ॥

राक्षसालये आन्तरमध्यबहिःकक्षोपलक्षिते सर्वत्र । निद्रावशत्वात् मदनेन तद्धेतुकरत्याद्यैर्मूर्च्छितं व्याप्तं तासां रूपं प्रसुप्तानां रात्रौ मुकुलितानां पद्मिनीनां नलिनीनां यथारूपं तथैवासीत् । एवं प्रकारेण ददर्श ॥ ३५ ॥ ३६ ॥ ३७ ॥

ततो निरीक्षणानन्तरम् । नेक्षेत नग्नां परस्त्रियमिति शास्त्रस्मरणा-

परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ।
इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ॥ ३९ ॥
न हि मे परदाराणां दृष्टिर्विषयवर्त्तिनी ।
अयञ्चात्र मया दृष्टः परदारपरिग्रहः ॥ ४० ॥
तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः ।
निश्चितैकान्तचित्तस्य कार्य्यनिश्चयदर्शिनी ॥ ४१ ॥
कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ।
न तु मे मनसा किञ्चिद्वैकृत्यमुपपद्यते ॥ ४२ ॥

रिति शेषः । तदेवाह,—धर्मेति । धर्मलोपनिमित्तं यत्पाप्वसम्भयं तेन शङ्कितो भीत इत्यर्थः ॥ ३८ ॥

धर्मलोपं दर्शयति । परदारावरोधस्य । दारशब्दः स्त्रीसामान्यवाची । अवरोधशब्दः स्वधर्मयुक्तकुलस्त्रीवाची । प्रसुप्तस्य अनेन नग्नप्रायत्वं सूचितम् । तत्समये वसनानां विपर्य्यासात् ॥ ३९ ॥

मे दृष्टिः परदाराणामद्य यावद्विषयवर्त्तिनी न । किन्तु परदारपरिग्रहवतान् अतिपापो रावणश्च दृष्टः । तादृशदर्शनमपि धर्मलोपकारीति भावः ॥ ४० ॥

अथ पुनर्विचारेण तद्दोषपङ्क्तिरप्युत्पन्नेत्याह,—तस्येति । अन्या चिन्ता पूर्वचिन्ताविरोधिनी । निश्चिते प्रमाणप्रतिपन्ने एकान्ते सिद्धान्ते तद्विमर्शने चित्तं यस्य सः । अतएव सा चिन्ता कार्य्यनिश्चयदर्शिनी कर्त्तव्याकर्त्तव्यनिर्णयसमर्था ॥ ४१ ॥

मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्त्तने।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम्॥ ४३॥
नान्यत्र हि मया शक्या वैदेही परिमार्गितुम्।
स्त्रियो हि स्त्रीषु दृश्यन्ते सदा सम्परिमार्गणे॥ ४४॥
यस्य सत्त्वस्य या योनिस्तस्यां तत् परिमार्गते।
न शक्यं प्रमदा नष्टा मृगीषु परिमार्गितम्॥ ४५॥
तदिदं मार्गितं तावत् शुद्धेन मनसा मया।
रावणान्तःपुरं सर्वं दृश्यते न च जानकी॥ ४६॥

तां चिन्तामभिनयति। काममिति। विश्वस्ता इतरालोकन-शङ्कारहिता। वैकृत्यं विकारः। स्वार्थं यत्न। नोपपद्यते न प्राप्नोति॥ ४२॥

ततः किं तत्राह,—मनोहीति। शुभाशुभास्ववस्थासु पुण्यपापकर्मसु इन्द्रियाणां प्रवर्त्तने मनोहेतुः मनसोऽसत्तदर्थरागद्वेषतः इन्द्रियप्रवृत्तिर्हि पापाय। इयन्तु मम प्रवृत्तिर्न पापाय यतस्तन्मे मनः सुष्ठु व्यवस्थितं परदारेषु न रागवत् पुण्यपापव्यवस्थायाञ्च स्वचित्तमेव साक्षीति भावः॥ ४३॥

किञ्च राजाज्ञानुष्ठानरूपसेवकीयपरमधर्मान्यथानुपपत्त्यापि न दोष इत्याह,—नान्यत्रेति। तत्र हेतुः स्त्रियो हीति। सदा सम्परिमार्गणे मार्गणव्यवहारे लोकैरिति शेषः॥ ४४॥

सजातीयेष्वेव मार्गणं प्रसिद्धमित्याह,—यस्येति। सत्त्वस्य प्राणिनः

देवगन्धर्वकन्याश्च नागकन्याश्च वीर्य्यवान् ।
अवेक्षमाणो हनुमान् नैवापश्यत जानकीम् ॥ ४७ ॥
तामपश्यन् कपिस्तत्र पश्यंश्चान्या वरस्त्रियः ।
अपक्रम्य तदा वीरः प्रध्यातुमुपचक्रमे ॥ ४८ ॥
स भूयः सर्वतः श्रीमान् मारुतिर्यत्नमाश्रितः ।
आपानभूमिमुत्सृज्य तां विचेतुं प्रचक्रमे ॥ ४९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकादशः सर्गः ॥ ११ ॥

या योनिः या समानजातिः परिमार्गते लोक इति शेषः । तत्रैवोपपत्तिमाह,—न शक्यमिति । एतेन रावणादर्शनजोऽपि दोषः परिहृतः ॥ ४५ ॥ ४६ ॥ ४७ ॥

अपक्रम्य रावणान्तःपुरबहिःकक्षात इति शेषः ॥ ४८ ॥
तां सीतामन्यत्र विचेतुं प्रचक्रमे ॥ ४९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
......सुन्दरकाण्डे एकादशः सर्गः ॥ ११ ॥

---

# द्वादशः सर्गः



स तस्य मध्ये भवनस्य संस्थितो
लतागृहांश्चित्रगृहान्निशागृहान् ।
जगाम सीतां प्रतिदर्शनोत्सुको
न चैव तां पश्यति चारुदर्शनाम् ॥ १ ॥
स चिन्तयामास ततो महाकपिः
प्रियामपश्यन् रघुनन्दनस्य ताम् ।
ध्रुवं न सीता म्रियते यथा न मे
विचिन्वतो दर्शनमेति मैथिली ॥ २ ॥
सा रक्षमाणा प्रवरेण बाला
स्वशीलसंरक्षणतत्परा सती ।

अथ बहुदुःखचिन्ताकुलोऽन्विष्टमेव पुनः पुनरन्वेषयतिस्मेत्याह,—स तस्येति । तस्य भवनस्य रावणभवनस्य, निशागृहाः रात्रिनिवासगृहाः तान् विचेतुं जगाम ॥ १ ॥

न म्रियते न जीवति स्म । ध्रुवं नु सीता म्रियत इति क्वचित् पाठः । तत्र हेतुर्यथेति यत इत्यर्थः ॥ २ ॥

अनेन नूनं प्रतिदुष्टकर्मणा
हता भवेदार्य्यपथे परे स्थिता ॥ ३ ॥
विरूपरूपा विकृता विवर्चसो
महानना दीर्घविरूपदर्शनाः ।
समीक्ष्य ता राक्षसराजयोषितो
भयाद्विनष्टा जनकेश्वरात्मजा ॥ ४ ॥
सीतामदृष्ट्वा ह्यनवाप्य पौरुषं
विहृत्य कालं सह वानरैश्चिरम् ।
न मेऽस्ति सुग्रीवसमीपगा गतिः
सुतीक्ष्णदण्डो बलवांश्च वानरः ॥ ५ ॥
दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः ।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ ६ ॥

स्वशीलं पातिव्रत्यं प्रतिदुष्टकर्म्मणा प्रति हष्टं दुष्टं कर्म यस्य तेन सकलसज्जनानर्थकारिणेत्यर्थः । आर्य्यपथे आर्य्याणां पतिव्रतानां मार्गे ॥ ३ ॥

रावणस्यानुरागात् स्त्रीवधदोषाद्वा तद्वधेऽप्रवृत्तावपि स्वयमेव भयान्नष्टेत्याह,—विरूपेति । दीर्घाणि विरूपाणि दर्शनानि यासां ताः । दीर्घपदेन कर्मधारयो वा । राक्षसराजयोषितः तदाज्ञाकारिणीः ॥ ४ ॥

पौरुषं समुद्रलङ्घनरूपपराक्रमसाध्यं प्रयोजनम् । कालं विहृत्य

किं नु मां वानराः सर्वे गतं वक्ष्यन्ति सङ्गताः ।
गत्वा तत्र त्वया वीर ! किं कृतं तद्वदस्व नः ॥ ७ ॥
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ।
ध्रुवं प्रायमुपासिष्ये कालस्य व्यतिवर्त्तने ॥ ८ ॥
किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः ।
गतं पारं समुद्रस्य वानराश्च समागताः ॥ ९ ॥
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
भूयस्तत्र विचेष्यामि न यत्र विचयः कृतः ॥ १० ॥
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्त्तकः ।

सुग्रीवकृतं कालमतिक्रम्य सुग्रीवसमीपं गम्यते यया सा गतिर्मार्गो नास्ति तत्र हेतुः सुतीक्ष्णेति ॥ ५ ॥ ६ ॥

अस्तु सुग्रीवसमीपगमनवार्त्ता अङ्गदादिसमीपगमनमपि दुर्लभमित्याह,—किं न्विति । किन्नु वक्ष्यन्तीति चिन्तां कृत्वा पुनर्विचार्य्य यद्वक्तव्यं तत् स्वयमेवानुवदति । गत्वेत्यादि । वदस्व इति वक्ष्यन्तीत्यर्थः ॥ ७ ॥

किं प्रवक्ष्यामि तान् प्रतीति शेषः । न किमपीत्यर्थः । यदेवमतो ध्रुवमिति । कालस्य सुग्रीवकल्पितस्य व्यतिवर्त्तने अतिक्रमे ॥ ८ ॥

किं वा वक्ष्यति मां धिक्करिष्यतीत्यर्थः । समागता मिलिता अन्ये वानराश्च धिक्करिष्यन्ति ॥ ९ ॥

एवं स्वात्मानं निर्विद्य पुनरुत्साहमवलम्ब्याह,—अनिर्वेद इति । निर्वेदः कार्य्यनाशस्य प्रवृत्तिवैमुख्यं तदभाव उत्साहः ॥ १० ॥

करोति सफलं जन्तोः कर्म यच्च करोति सः ॥ ११ ॥
तस्मादनिर्वेदकरं यत्नं चेष्टेऽहमुत्तमम्।
अदृष्टांश्च विचेष्यामि देशान् रावणपालितान् ॥ १२ ॥
आपानशाला विचितास्तथा पुष्पगृहाणि च।
चित्रशालाश्च विचिता भूयः क्रीड़ागृहाणि च ॥ १३ ॥
निष्कुटान्तररथ्याश्च विमानानि च सर्वशः।
इति सञ्चिन्त्य भूयोऽपि विचेतुमुपचक्रमे ॥ १४ ॥
भूमीगृहांश्चैत्यगृहान् गृहातिगृहकानपि।
उत्पतन्निपतंश्चापि तिष्ठन् गच्छन् पुनः क्वचित् ॥ १५ ॥
अपवृण्वंश्च द्वाराणि कपाटान्यवघट्टयन्।
प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्निव ॥ १६ ॥

यत् कर्म स करोति तत् कर्म सफलं करोति ॥ ११ ॥

अनिर्वेदकरम् उत्साहजननं यत्नं चित्तस्थैर्य्यं चेष्टे करोमि ॥ १२ ॥

॥ १३ ॥

निष्कुटान्तररथ्याः गृहारामसंध्यगता वीथिः। विमानानि पुष्पकादीनि ॥ १४ ॥

भूमीगृहान् भूविलगृहान् गृहातिगृहकाः गृहोपरि गृहा इति यावत्। गृहासन्नोद्यानातिदूरे स्वैरविहारार्थं निर्मितगृहा इति तीर्थः। विचेतुमुपचक्रमे इत्यनुकर्षः। उत्पतनमुन्नतमारोहणम् निपतनमवरोहः ॥ १५ ॥

निष्पतनं निष्क्रमणम्। अवघट्टनं संवरणम् ॥ १६ ॥

सर्वमप्यवकाशं स विचचार महाकपिः ।
चतुरङ्गुलमात्रोऽपि नावकाशः स विद्यते ।
रावणान्तःपुरे तस्मिन् यं कपिर्न जगाम सः ॥ १७ ॥
प्राकारान्तरवीथ्यश्च वेदिकाश्चैत्यसंश्रयाः ।
श्वभ्राश्च पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥ १८ ॥
राक्षस्यो विविधाकारा विरूपा विकृतास्तथा ।
दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ १९ ॥
रूपेणाप्रतिमा लोके परा विद्याधरस्त्रियः ।
दृष्टा हनुमता तत्र न तु राघवनन्दिनी ॥ २० ॥
नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः ।
दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ २१ ॥
प्रमथ्य राक्षसेन्द्रेण नागकन्या बलात् हृता ।
दृष्टा हनूमता तत्र न सा जनकनन्दिनी ॥ २२ ॥
सोऽपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः ।
विषसाद महाबाहुर्हनूमान् मारुतात्मजः ॥ २३ ॥

यं स कपिर्न जगाम स तादृशश्चतुरङ्गुलमात्रोऽप्यवकाशो न विद्यते ॥ १७ ॥

प्राकारान्तरवीथ्यः प्राकारमध्यवर्त्तिमार्गाः कुमारादिगृहवीथ्यः । चैत्यश्चतुष्पथवर्त्तिवृक्षः श्वभ्राः गर्त्ताः ॥ १८ ॥ १९ ॥

राघवनन्दिनी रामप्रिया ॥ २१ ॥

उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ।
व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागतः ॥ २४ ॥
अवतीर्य्य विमानाच्च हनूमान् मारुतात्मजः ।
चिन्तामुपजगामाथ शोकोपहतचेतनः ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
द्वादशः सर्गः ॥ १२ ॥

प्रमथ्य नागकन्याः बलाद्धृता इत्यनेन वन्दीकृतानां ग्रहणम् । पूर्वन्तूढानां नागकन्यानां ग्रहणमतो न पुनरुक्तिः ॥ २२ ॥ २३ ॥ २४ ॥

अवतीर्य्य विमानाच्चेति पुनरारुह्यावरुह्य चेत्यर्थः । विमाने एवैतत् सर्वदर्शनमिति तत्त्वम् ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

## त्रयोदशः सर्गः ।



विमानात्तु स संक्रम्य प्राकारं हरियूथपः ।
हनूमान् वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १ ॥
संपरिक्रम्य हनुमान् रावणस्य निवेशनान् ।
अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २ ॥
भूयिष्ठं लोलिता लङ्का रामस्य चरता प्रियम् ।
न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ ३ ॥
पल्वलानि तटाकानि सरांसि सरितस्तथा ।
नद्योऽनूपवनान्ताश्च दुर्गाश्च धरणीधराः ॥ ४ ॥
लोलिता वसुधा सर्वा न च पश्याम जानकीम् ।
इह सम्पातिना सीता रावणस्य निवेशने ।
आख्याता गृध्रराजेन न च सा दृश्यते तु किम् ॥ ५ ॥

—

वेगवान् हनूमान् विमानात् प्राकारं संक्रम्य घनान्तरे यथा विद्युत् सशोभा आसीत्तथासीत् । प्राकारस्थेऽङ्गनीलक्षतत्वमनेन ध्वन्यते ॥ १ ॥

रावणस्य निवेशनान् गृहान् संपरिक्रम्य पुनः परिक्रमणेन दृष्ट्वा जानकीमदृष्ट्वा अब्रवीत् । आत्मनैवेति बोध्यम् ॥ २ ॥

भूयिष्ठं लोलिता बहुशोऽन्विष्टा ॥ ३ ॥ ४ ॥

किं तु सीताऽथ वैदेही मैथिली जनकात्मजा ।
उपतिष्ठेत विवशा रावणेन हृता बलात् ॥ ६ ॥
क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ।
बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ॥ ७ ॥
अथवा ह्रियमाणायाः पथि सिद्धनिषेविते ।
मन्ये पतितमार्य्याया हृदयं प्रेक्ष्य सागरम् ॥ ८ ॥
रावणस्योरुवेगेन भुजाभ्यां पीड़ितेन च ।
तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्य्यया ॥ ९ ॥

नन्वनुपलब्धिप्रमाणादभावनिश्चय एवास्त्वत आह,—रावणनिवेशने एवाख्याता तद्वधस्य प्रमाणं दृश्यते तु न किमिदमिति ॥ ५ ॥

बहुप्रकारं चिन्तयति किन्त्विति । पूर्वदृष्टां मन्दोदरीं सौन्दर्य्यादिगुणैः पुनः सीतात्वेन सम्भाव्य तन्निरासकवाक्यं रावणेन बलात् हृता विवशा सती सीता उपतिष्ठेत रावणमिति शेषः । रावणं दुष्टचारिणमिति पाठे तु यथा श्रुतमेव । इदं किन्तु कुत्सितन्तु यतः सा मैथिली सा सीता लाङ्गलपद्धतिजत्वेनायोनिजा वैदेही जगत्प्रशस्तविदेहवंशसम्बद्धा जनकात्मजा ब्रह्मवित्पुत्री ॥ ६ ॥

तस्यादर्शनं कुतस्तत्र हेतूनुत्प्रेक्षते । क्षिप्रमिति । एते पक्षा दुःखातिशयात् सम्पातिवचनविस्मरणमूलकाः । बिभ्यतः करात् भ्रष्टेति शेषः । रामबाणानाम् आघातादिति शेषः । शेषे षष्ठी वा ॥ ७ ॥

रामपरोक्षं तथा भयायोगात् पश्चान्तरमथवेति हृदयं पतितं मन उत्क्रान्तं मन उत्क्रमणस्यैव मरणत्वात् ॥ ८ ॥

उपर्य्युपरि सा नूनं सागरं क्रमतस्तदा।
विचेष्टमाना पतिता समुद्रे जनकात्मजा॥ १०॥
अहो क्षुद्रेण चानेन रक्षन्ती शीलमात्मनः।
अबन्धुर्भक्षिता सीता रावणेन तपस्विनी॥ ११॥
अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा।
अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति॥ १२॥
सम्पूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम्।
रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता॥ १३॥
हा! रामलक्ष्मणेत्येव हा! अयोध्येति च भामिनी।
विलप्य बहु वैदेही न्यस्तदेहा भविष्यति॥ १४॥
अथवा निहिता मन्ये रावणस्य निवेशने।

पीड़ितेन पोड़नेन॥ ९॥

विचेष्टमाना विलुठन्ती॥ १०॥

ननु सर्वमेतदसम्भावितं रावणेन सर्वोपायरक्षितं हरणस्यैतत्कारत्वादतः पक्षान्तरमाह,—अहो इति। अथवेत्यर्थः॥ ११॥

ननु बहुभक्ष्यसामग्रीमत्त्वादनुरागवत्त्वाच्च तेन भक्षणमसम्भावितमत आह,—अथवेति। सापत्न्यदुःखादिति भावः॥ १२॥

एतदुत्तरं श्लोकद्वयं सम्पूर्णचन्द्रेत्यादि प्रक्षिप्तमिति कतकः॥ १३॥

ननु सपत्नीभिरप्यशक्यं भक्षणं रावणेन सम्भोगार्थमानीतत्वादत आह,—अथवेति॥ १४॥

भृशं लालप्यते बाला पञ्जरस्थेव सारिका ॥ १५ ॥
जनकस्य कुले जाता रामपत्नी सुमध्यमा ।
कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत ॥ १६ ॥
विनष्टा वा प्रनष्टा वा मृता वा जनकात्मजा ।
रामस्य प्रियभार्य्यस्य न निवेदयितुं क्षमम् ॥ १७ ॥
निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने ।
कथं नु खलु कर्त्तव्यं विषमं प्रतिभाति मे ॥ १८ ॥

निहिता गुप्ततया स्थापिता इति मन्ये। नायमपि पक्षो युक्त इत्याह,—एवमपि सा बाला पञ्जरस्था सारिकेव भृशं मुहुर्मुहुः रामेति लालप्यते न च तत दृश्यते इति भावः ॥ १५ ॥

ननु तर्हि रावणसमीप एव भवेत् सम्पातिवचनप्रामाण्यात्। मया तु सम्यक् नान्विष्टमित्याशङ्क्याह,—जनकस्येति। तस्मादेतदप्ययुक्तमिति भावः ॥ १६ ॥

नन्वनेन विचारेणालं यथानुभूतं निवेद्यतां तत्राह,—विनष्टेति। अस्य क्वचिद्दर्शनं इति भावः। नाश अदर्शन इति धात्वनुसारादद्दृष्टा सती क्वचिदस्तीति वक्तुमशक्यमक्षमम्, सर्वतोऽन्विष्टत्वात्। प्रनष्टा प्रगतं नष्टमदर्शनं यस्याः सा दृष्टेत्यर्थः, एतदपि न वक्तुं क्षमं स्वयमदृष्टत्वात्। एवं मृतेत्यपि, वक्तुं न शक्यं, तत्साधकदृढतरप्रमाणाभावात्। तस्माद्रामस्याग्रे किमपि वक्तुं न शक्यम्। दृश्यदेशे माययाऽदर्शनं विनाशः। अदृश्यदेशेऽवस्थापनं प्रणाश इति तु तीर्थः ॥ १७ ॥

तदेव स्पष्टयति। निवेद्यमाने इति। न दृष्टेति निवेद्यमाने दोषो

अस्मिन्नेवं गते कार्य्ये प्राप्तकालं क्षमञ्च किम्।
भवेदिति मतिं भूयो हनुमान् प्रविचारयन् ॥ १९ ॥
यदि सीतामदृष्ट्वाऽहं वानरेन्द्रपुरीमितः।
गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ॥ २० ॥
ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति।
प्रवेशश्चैव लङ्कायां राक्षसानाञ्च दर्शनम् ॥ २१ ॥
किं वा वक्ष्यति सुग्रीवो हरयो वापि सङ्गताः।
किष्किन्धामनुसम्प्राप्तं तौ वा दशरथात्मजौ ॥ २२ ॥
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परुषं वचः।
न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ॥ २३ ॥
परुषं दारुणं तीक्ष्णं क्रूरमिन्द्रियतापनम्।

वक्ष्यमाणरामप्राणत्यागरूपः। अनिवेदने स्वामिवचनाननुरूपो दोषः। तस्मान्निवेदनानिवेदनरूपमुभयमपि विषमं दुरनुष्ठेयं प्रतिभाति ॥ १८ ॥

एतदनन्तरं कविवाक्यमस्मिन्निति। कार्य्ये एवं गते सति दुर्निरूपे सतीत्यर्थः। प्राप्तकालं कालोचितं किं क्षमं किं वक्तुं युक्तं भवेदिति भूयो मतिं तद्विषयं पक्षं विचारयन्नभूत् इति शेषः ॥ १९ ॥

विचारमेव प्रपञ्चयति। यदीति।, को भविष्यति न कोऽपीत्यर्थः ॥ २० ॥ २१ ॥

वक्ष्यति असाध्वेव वक्ष्यतीत्यर्थः ॥ २२ ॥

न दृष्टेत्यप्रियं यदि वक्ष्यामि। ततस्त्यक्ष्यत्यामन्तारम् ॥ २३ ॥

सीतानिमित्तं दुर्वाक्यं श्रुत्वा स न भविष्यति ॥ २४ ॥

तन्तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् ।

भ्रातुरक्तमेधावी न भविष्यति लक्ष्मणः ॥ २५ ॥

विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ।

भरतञ्च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति ॥ २६ ॥

पुत्रान् मृतान् समीक्ष्याथ न भविष्यन्ति मातरः ।

कौशल्या च सुमित्रा च कैकेयी च न संशयः ॥ २७ ॥

कृतज्ञः सत्यसन्धश्च सुग्रीवः प्लवगाधिपः ।

रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम् ॥ २८ ॥

दुर्मना व्यथिता दीना निरानन्दा तपस्विनी ।

पीड़िता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् ॥ २९ ॥

वालिजेन तु दुःखेन पीड़िता शोककर्शिता ।

पञ्चत्वमागता राज्ञी ताराऽपि न भविष्यति ॥ ३० ॥

मातापित्रोर्विनाशेन सुग्रीवव्यसनेन च ।

परुषं कर्णकठोरम् अतएव दारुणं भयङ्करं तीक्ष्णमसह्यं क्रूरमुग्रम् इन्द्रियाणां तापनं सन्तापकं सीतानिमित्तं सीताविषयम् । स रामः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

ततः दिवसरामदर्शनात् ॥ २८ ॥ २९ ॥

वालिजेन वालिमरणजेन पञ्चत्वमागता पञ्चत्वं प्राप्तुं निश्चयवती ॥ ३० ॥

कुमारोऽप्यङ्गदस्तस्माद्विजहिष्यति जीवितम् ॥ ३१ ॥
भर्तृजेन तु दुःखेन अभिभूता वनौकसः ।
शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ॥ ३२ ॥
सान्त्वेनानुप्रदानेन मानेन च यशस्विना ।
लालिताः कपिनाथेन प्राणांस्त्यक्ष्यन्ति वानराः ॥ ३३ ॥
न वनेषु न शैलेषु न निरोधेषु वा पुनः ।
क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ॥ ३४ ॥
सपुत्रदाराः सामात्या भर्तृव्यसनपीडिताः ।
शैलाग्रेभ्यः पतिष्यन्ति समेषु विषमेषु च ॥ ३५ ॥
विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा ।
उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः ॥ ३६ ॥
घोरमारोदनं मन्ये गते मयि भविष्यति ।
इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ॥ ३७ ॥
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः ।
न हि शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ॥ ३८ ॥

तस्मात्तदनन्तरम् ॥ ३१ ॥ ३२ ॥
यशस्विना कपिनाथेन सान्त्वादिभिर्लालिताः प्राणांस्त्यक्ष्यन्ति ॥ ३३ ॥
निरोधेषु गुहादिसंवृतदेशेषु ॥ ३४ ॥
सपुत्रदारा इत्यादेः कपिकुञ्जरा इति विशेष्यम् ॥ ३५ ॥
शस्त्रं शस्त्राघातं प्रचरिष्यन्ति करिष्यन्ति ॥ ३६ ॥ ३७ ॥ ३८ ॥

मथ्यगच्छति चेदत्र धर्मात्मा नौ महारथौ ।
आशया तौ धरिष्येते वानराश्च तरस्विनः ॥ ३९ ॥
हस्तादानो मुखादानो नियतो वृक्षमूलिकः ।
वानप्रस्थो भविष्यामि अदृष्ट्वा जनकात्मजाम् ॥ ४० ॥
सागरानूपजे देशे बहुमूलफलोदके ।
चितिं कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ॥ ४१ ॥
उपविष्टस्य वा सम्यक् लिङ्गिनं साधयिष्यतः ।
शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च ॥ ४२ ॥
इदमप्यृषिभिर्दृष्टं निर्य्याणमिति मे मतिः ।
सम्यगापः प्रवेक्ष्यामि न चेत् पश्यामि जानकीम् ॥ ४३ ॥

अगच्छति गमनरहिते । आशया सीतावृत्तान्तश्रवणप्रत्याशया धरिष्येते प्राणानिति शेषः ॥ ३९ ॥

हस्तादानः हस्तपतितफलादिग्राहकस्तद्भोजीति यावत् । एवं मुखादानो मुखपतितभोजी । नियतो नियतेन्द्रियः वृक्षमूलिको वृक्षमूलनिवासी ॥ ४० ॥

अरणीसुतमग्निम् ॥ ४१ ॥

उपविष्टस्य प्रायमुपविष्टस्य । लिङ्गिनं प्राणलिङ्गिनं लिङ्गशरीरवन्तं वा । आत्मानं साधयिष्यतः शरीरेण वियोजयिष्यतः । लिङ्गिनीमिति पाठे प्राणलिङ्गिनीं चितिस्चैतन्यमित्यर्थः ॥ ४२ ॥

इदं वक्ष्यमाणम् आपः अप इत्यर्थः ॥ ४३ ॥

सुजातमूला सुभगा कीर्त्तिमाला यशस्विनी।
प्रभग्ना चिररात्राय मम सीतामपश्यतः॥ ४४॥
तापसो वा भविष्यामि नियतो वृक्षमूलिकः।
नेतः प्रतिगमिष्यामि तामदृष्ट्वासितेक्षणाम्॥ ४५॥
यदि तु प्रतिगच्छामि सीतामनधिगम्य ताम्।
अङ्गदः सहितः सर्वैर्वानरैर्न भविष्यति॥ ४६॥
विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम्।
तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति सङ्गमः॥ ४७॥

सीतामपश्यतो मम यशस्विनी यशःसम्पादिका मतस्य ख्यातिर्यशः। सुजातमूला सुजातकारणवती कीर्त्तिरूपा माला जीवतः सा कीर्त्तिः चिररात्रायेत्यव्ययं चिरायेत्यर्थः। चिराय भग्ना। आत्यन्तिकक्षयं गतेत्यर्थः। तीर्थस्तु चिररात्रीयं ममेति पाठं प्रकल्प्य सीतान्वेषणोपयुक्तत्वेन शोभनमूला सीतान्वेषणसौकार्य्योपादकचन्द्रिकया सुभगा सीतान्वेषणसहकारिणीति सर्वैः क्रियमाणा कीर्त्तिरिव माला यस्याः सेयं चिररात्री चिरकालविशिष्टा दीर्घा रात्रिः तस्य लङ्काप्रवेशरात्रिः प्रभग्ना निष्फला जाता इत्यर्थः। अनेन रामकार्य्यसहकारिणी सेच्छया रात्रिरप्यात्मानं वञ्चितवतीति सूच्यत इत्याह॥ ४४॥

तापसः जटाकाषायादिचिह्नो यतिः॥ ४५॥

अदृष्ट्वा गमने निश्चितमासन्नं दोषमाह,—यदीत्यादि। न भविष्यति॥ ४६॥

एवमगमने निश्चिते मरणजीवितयोः किं श्रेयस्तत्राह,—विनाश

एवं बहुविधं दुःखं मनसा धारयन् बहु ।
नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ॥ ४८ ॥
ततो विक्रममासाद्य धैर्य्यवान् कपिकुञ्जरः ।
रावणं वा वधिष्यामि दशग्रीवं महाबलम् ॥ ४९ ॥
काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ॥ ५० ॥
अथवैनं समुत्क्षिप्य उपर्य्युपरि सागरम् ।
रामायोपहरिष्यामि पशुं पशुपतेरिव ॥ ५१ ॥

इति । दोषाः बहवः प्रागुक्ताः चिरं मद्गमने सीताविनाशनिश्चयेन रामादयो न स्युरेव आत्मघातादयश्च । जीवंस्तु ममात्मा भद्रकं प्राप्नोति । वक्ष्यमाणनानाविधोपायाश्रयणेन तस्मात् प्राणान् धरिष्यामि । यतो मयि जीवति सति सङ्गमः सुखसङ्गमो रामादीनां ध्रुवः सम्भावित इत्यर्थः । काव्यलिङ्गमलङ्कारः । तीर्थस्तु जीवितसङ्गम इति पाठं कल्पयामास ॥ ४७ ॥

इतःपरं कविवाक्यम् । एवमित्यादि ॥ ४८ ॥

कपिकुञ्जर इत्यस्य इति चिन्तयामासेति शेषः ध्रुवो जीवति सङ्गम इत्युक्ताशयं स्फुटमानाह,—रावणं वेति ॥ ४९ ॥

ननु रावणवधेन किं साधितं स्यात्तत्राह,—प्रत्याचीर्णं वैरनिर्य्यातनं कृतं भविष्यतीत्यर्थः । एवं कृत्वा गमने सर्वेषां सुखमित्याशयः ॥ ५० ॥

ननु मया हृत इतीदं वचोऽविश्वसनीयं स्यात् सीताऽलाभेन रामदुःखानिवृत्तिश्चेत्यतः पक्षान्तरमथवेति । एवं सति तल्लाभेऽपि सम्भाव्यत इत्याशयः ॥ ५१ ॥

इति चिन्तासमापन्नः सीतामनधिगम्य ताम्।
ध्यानशोकपरीतात्मा चिन्तयामास वानरः ॥ ५२ ॥
यावत् सीतां न पश्यामि रामपत्नीं यशस्विनीम्।
तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ॥ ५३ ॥
सम्पातिवचनाच्चापि रामं यद्यानयाम्यहम्।
अपश्यन् राघवो भार्य्यां निर्द्दहेत् सर्ववानरान् ॥ ५४ ॥
इहैव नियताहारो वत्स्यामि नियतेन्द्रियः।
न मत्कृते विनश्येयुः सर्वे ते नरवानराः ॥ ५५ ॥
अशोकवनिका चापि महतीयं महाद्रुमा।
इमामधिगमिष्यामि नहीयं विचिता मया ॥ ५६ ॥

रावणस्य बध्वानयनेऽपि सीतां राक्षसा हन्युरिति तद्भाव एवेत्यतः शोकपरीतः पश्चान्तरं चिन्तयामास। यावत् सीतामिति। वर्त्तमानसमीपे लट् ॥ ५२ ॥ ५३ ॥

नन्वत्रार्थिविनिश्चये पुनःपुनरन्वेषणं सफलं स्यादत आह,—सम्पातिवचनादिति। तद्वचनविश्वासादेवेत्यर्थः। ननु तत्प्रत्यक्षप्ररोहाभिलषितं प्रमाणम्। न तु तद्वचनविश्वासादेव। रामं प्रति सीतावार्त्ती-त्युक्त्वा शीघ्रं स एवानेयः। किमनेन कालविलम्बेनेत्यपाह,—रामं यदीति। रावणे हतेऽपि मयैव अन्विष्यमाणा न दृश्येत रामेणापि। तददर्शने रामः सर्ववानरनाशं करिष्यतीति भावः ॥ ५४ ॥

तस्मादिहैव नियताहारो वत्स्यामि। विनश्येयुः सीतामदृष्ट्वा मद्गमनानन्तरमिति भावः ॥ ५५ ॥

वसून् रुद्रांस्तथादित्यानश्विनौ मरुतोऽपि च।
नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्द्धनः॥ ५७॥
जित्वा तु राक्षसान् देवीमिक्ष्वाकुकुलनन्दिनीम्।
सम्प्रदास्यामि रामाय सिद्धीमिव तपस्विने॥ ५८॥
स मुहूर्त्तमिव ध्यात्वा चिन्ताविग्रथितेन्द्रियः।
उदतिष्ठन् महाबाहुर्हनुमान् मारुतात्मजः॥ ५९॥

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्राग्निमरुद्गणेभ्यः॥ ६०॥

एवं चिन्ताकुलोऽनन्विष्टं देशं दृष्ट्वा सम्पातिवचनात्तत्र सीतास्थितिं निश्चिन्वान आशाशेते ॥ ५६ ॥

तथाप्यप्राप्तिशङ्कया तद्दर्शनप्रतिबन्धकदुरितक्षयाय देवानुकूल्यं सम्पादयति। वसूनिति। चात् रामादीन् ॥ ५७ ॥

तपस्विने सिद्धीमिव तपःफलमिव तपःप्रसन्ना देवतेति शेषः ॥ ५८ ॥

चिन्तया विग्रथितानि सम्बद्धानि आकुलानि इन्द्रियाणि यस्य सः ॥ ५९ ॥

प्रतिज्ञातं नमस्कारमनुतिष्ठति। नमोऽस्तु रामायेति। अनेन रामस्य भगवदवतारत्वं सूचितम्। ब्रह्मादिनमस्कारेण विराजो भगवतो नतिः ॥ ६० ॥

स तेभ्यस्तु नमस्कृत्वा सुग्रीवाय च मारुतिः।
दिशः सर्वाः समालोक्य सोऽशोकवनिकां गतः॥ ६१॥
स गत्वा मनसा पूर्वमशोकवनिकां शुभाम्।
उत्तरं चिन्तयामास वानरो मारुतात्मजः॥ ६२॥
ध्रुवन्तु रक्षोबहुला भविष्यति वनाकुला।
अशोकवनिका पुण्या सर्वसंस्कारसंस्कृता॥ ६३॥
रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान्।
भगवानपि विश्वात्मा नातिक्षोभं प्रवायति॥ ६४॥
संक्षिप्तोऽयं मयात्मा च रामार्थे रावणस्य च।
सिद्धिं दिशन्तु मे सर्वे देवाः सर्षिगणास्त्विह॥ ६५॥

स्वामित्वात् सूर्य्यांशत्वाच्च सुग्रीवनतिः। अशोकवनिकां गतः मनसेति शेषः। अशोकवनिकां प्रतीति पाठे गत इत्यध्याहारः॥ ६१॥

उत्तरं गमनोत्तरकर्त्तव्यकृत्यम्॥ ६२॥

चिन्ताहेतुं दर्शयति। ध्रुवमिति। वनाकुला काननाकुला संस्काराः खननसेकादिरूपवृक्षसंस्काराः। अत ध्रुवं रक्षोबहुले-त्युक्तेलया चन्द्राक्षः सुचिवः। अन्यथा तत्प्रकाशेन निश्चय एव स्यात्॥ ६३॥

अत्राशोकवनिकायां विहिताः नियुक्ताः। विश्वात्मा वायुः॥ ६४॥

मया आत्मा शरीरमित्यर्थः। रावणस्य अर्थे हतानुमर्थः। रावण-कर्त्तृकदर्शनपरिहारायेत्यर्थः॥ ६५॥

ब्रह्मा स्वयम्भूर्भगवान् देवाश्चैव तपस्विनः।
सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रभृत्॥ ६६॥
वरुणः पाशहस्तश्च सोमादित्यौ तथैव च।
अश्विनौ च महात्मानौ मरुतः सर्व एव च॥ ६७॥
सिद्धिं सर्वाणि भूतानि भूतानाञ्चैव यः प्रभुः।
दास्यन्ति मम ये चान्येऽप्यदृष्टाः पथिगोचराः॥ ६८॥

तदुन्नसम्पाण्डुरदन्तमव्रणं
शुचिस्मितं पद्मपलाशलोचनम्।
द्रक्ष्ये कदाग्यावदनं कदान्वहं
प्रसन्नताराधिपतुल्यवर्चसम्॥ ६९॥

पुनः सर्वात्मना कार्य्यसिद्धये स्मरति। ब्रह्मेत्यादि। देवा भगवदवयवदेवाः। तानेव दर्शयति। अग्निश्चेत्यादि। सिद्धिं दिशन्त्वित्यन्वयः॥ ६६॥ ६७॥

भूतानां प्रभुः प्रजापतिः॰ दास्यन्ति तेषामप्यस्यार्थस्येष्टत्वादिति भावः। पूर्वं प्रार्थना इदानीं तु तन्निश्चयः। पथिगोचरा अदृष्टा अपि पथि मार्गे गोचरत्वेन सिद्धिदत्वेन प्राप्तेष्टदृष्टाः अनुक्ताः अग्निना दृष्टाश्च ये तेऽपि सिद्धिं दास्यन्ति॥ ६८॥

उन्नता नासा यस्मिंस्तत् पाण्डुरं वियोगवशात् अव्रणमनघम्॥ ६९॥

क्षुद्रेण हीनेन नृशंसमूर्त्तिना
सुदारुणालङ्कृतवेषधारिणा।
बलाभिभूता ह्यबला तपस्विनी
कथं नु मे दृष्टिपथेऽद्य सा भवेत् ॥ ७० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
त्रयोदशः सर्गः ॥ १३ ॥

सुदारुणोऽप्यलङ्कृतवेषधारी विश्वसनीयवेषधारी तेन ॥ ७० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः।



स मुहूर्त्तमिव ध्यात्वा मनसा चाधिगम्य ताम्।
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः॥१॥
स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः।
पुष्पिताग्रान् वसन्तादौ ददर्श विविधान् द्रुमान्॥२॥
सालानशोकान् भव्यांश्च चम्पकांश्च सुपुष्पितान्।
उद्दालकान् नागवृक्षांश्चूतान् कपिमुखानपि॥३॥
तथाम्रवणसम्पन्नाम् लताशतसमन्विताम्।
ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम्॥४॥

ध्यात्वा उत्प्लवनं निश्चित्य तां सीतां मनसाऽधिगम्य ध्यात्वा तस्य रावणस्य वेश्मनः वेश्मप्राकारात्। प्राकारं वनप्राकारम् अवप्लुतः उत्प्लवनेन प्राप्तः॥१॥

संहृष्टसर्वाङ्गः पुलकितसर्वाङ्गः। वसन्तादौ वसन्तादिसर्वर्तुषु सन्निहितैः पुष्पैः पुष्पिताग्रान्॥२॥

भव्यान् न्युब्जफलान्। उद्दालका वृक्षविशेषाः। नागवृक्षान् नागकेसरवृक्षान् कपिमुखान् कपिमुखाकारफलवतः। चूतविशेषणमेतत्॥३॥

ज्यामुक्तः रामेणेति शेषः॥४॥

स प्रविश्य विचित्रान्तां विहगैरभिनादिताम्।
राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम्॥ ५॥
विहगैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम्।
उदितादित्यसङ्काशां ददर्श हनुमान् बली॥ ६॥
वृतैर्नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः।
कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम्॥ ७॥
प्रहृष्टमनुजां काले मृगपक्षिमदाकुलाम्।
मत्तबर्हिणसङ्घुष्टां नानाद्विजगणायुताम्॥ ८॥
मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम्।
सुखप्रसुप्तान् विहगान् बोधयामास वानरः॥ ९॥
उत्पतद्भिर्द्विजगणैः पक्षवातैः समाहताः।

विचित्रान्तां विचित्रपर्य्यन्ताम्। राजतैः राजतादिसंस्कृतैस्तद्वर्णैर्वा॥ ५॥

चित्रकाननां चित्रद्रुमखण्डाम्। उदितादित्यसङ्काशां पुष्पैरिति शेषः॥ ६॥

पुष्पोपगफलोपगैः पुष्पफलयुतैः॥ ७॥

काले सर्वस्मिन्नपि। प्रहृष्टमनुजां मुखविकासादिलिङ्गकहर्षव्यञ्जनां मृगादीन् मदेनाकुलयति ताम्। प्रहृष्टमनुजे काले इति पदद्वये सप्तम्यन्तपाठे तादृक्काले वसन्तप्राग्भवे तत्सन्निहिते काले इत्यर्थः॥ ८॥

बोधयामास शाखासंक्रमणेनेति भावः॥ ९॥

अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः ॥ १० ॥
पुष्पावकीर्णः शुशुभे हनूमान् मारुतात्मजः ।
अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ॥ ११ ॥
दिशः सर्वाभिधावन्तं वृक्षखण्डगतं कपिम् ।
दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ॥ १२ ॥
वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः ।
रराज वसुधा तत्र प्रमदेव विभूषिता ॥ १३ ॥
तरस्विना ते तरवस्तरसा बहुकम्पिताः ।
कुसुमानि विचित्राणि ससृजुः कपिना तदा ॥ १४ ।
निर्धूतपत्रशिखराः शीर्णपुष्पफलद्रुमाः ।
निक्षिप्तवस्त्राभरणा धूर्त्ता इव पराजिताः ॥ १५ ॥
हनूमता वेगवता कम्पितास्ते नगोत्तमाः ।
पुष्पपत्रफलान्याशु मुमुचुः फलशालिनः ॥ १६ ॥

पश्चैरुत्पतद्भिरित्यन्वयः । समाहताः वृक्षा इति शेषः । पुष्पवृष्टयः पुष्पवृष्टीः ॥ १० ॥ ११ ॥

सर्वाभिधावन्तमिति सन्धिरार्षः । वसन्त इति मेनिरे इति अन्यस्येह वनेऽप्रवेश्यत्वादसन्त इव वसन्तसखारोचितं कामरूपमास्थाय चरतीति मेनिरे इत्यर्थः । एतेन प्रहृष्टा तस्मिन्विमतिनिवृत्तिरीश्वरानुग्रहादिति सूचितम् ॥ १२ ॥ १३ ॥

बहुप्रकारं कम्पिताः ॥ १४ ॥

विहङ्गसङ्घैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः ।
बभूवुरगमाः सर्वे मारुतेन विनिर्धुताः ॥ १७ ॥
विधूतकेशी युवतिर्यथा मृदितवर्णका ।
निपीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥ १८ ॥
तथा लाङ्गूलहस्तैस्तु चरणाभ्यां च मर्दिता ।
तथैवाशोकवनिका प्रभग्नवरपादपा ॥ १९ ॥
महालतानां दामानि व्यधमत्तरसा कपिः ।
यथा प्रावृषि वेगेन मेघजालानि मारुतः ॥ २० ॥
स तत्र मणिभूमीश्च राजतीश्च मनोरमाः ।
तथा काञ्चनभूमीश्च विचरन् ददृशे कपिः ॥ २१ ॥
वापीश्च विविधाकाराः पूर्णाः परमवारिणा ।
महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२ ॥

निर्धूतपत्राणि शिखराण्यग्राणि च येषां ते । धूर्त्ता वञ्च-धूर्त्ताः ॥ १५ ॥ १६ ॥

स्कन्धमात्रस्याश्रयाः ननु पुष्पादीनाम् । अतएवागमाः असेव्याः मारुतेन तत्पुत्रेण हनूमता विनिर्धुता इति क्तः आर्षः इति कतकस्तत् वृथा क्तस्यापि धुनः सत्वात् ॥ १७ ॥

वर्णको विलेपनं निपीतः शुभदन्तयुक्तः ओष्ठो यस्याः सा ॥ १८ ॥

लाङ्गूलहस्तैरित्यत्रैकवत्त्वाभाव आर्षः ॥ १९ ॥

दामानि जालानि ॥ २० ॥ २१ ॥

मुक्ताप्रवालसिकताः स्फाटिकान्तरकुट्टिमाः ।
काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३ ॥
बुद्धपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ।
नत्यूहरुतसंघुष्टा हंससारसनादिताः ॥ २४ ॥
दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः ।
अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः ॥ २५ ॥
लताशतैरवतताः सन्तानकुसुमावृताः ।
नानागुल्मावृतवनाः करवीरकृतान्तराः ॥ २६ ॥
ततोऽम्बुधरसङ्काशं प्रवृद्धशिखरं गिरिम् ।
विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७ ॥
शिलागृहैरवततं नानावृक्षसमावृतम् ।

उच्यमानविशिष्टा वापीर्ददर्श । श्लोकपञ्चकमेकवाक्यम् ॥ २२ ॥

मुक्ताप्रवालरूपा एव सिकता यासाम् । स्फान्तरकुट्टिमाः अभ्यन्तरनिबद्धभूमियुताः ॥ २३ ॥

नत्यूहो दात्यूहः ॥ २४ ॥

द्रुमयुक्ताभिः तीरद्रुमयुक्ताभिः वापीनां सरिदुपस्कृतत्वं नित्यं पूर्णजलत्वाय ॥ २५ ॥

सन्तानः कल्पवृक्षः गुल्मावृतवनाः वनं जलं करवीरैः कृतमन्तरं गवाक्षस्थानीयं यासां ताः ॥ २६ ॥

ततो वापीदर्शनानन्तरम् ॥ २७ ॥

ददर्श कपिशार्दूलो रम्यं जगति पर्वतम् ॥ २८ ॥
ददर्श च नगात्तस्मान्नदीं निपतितां कपिः।
अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ॥ २९ ॥
जले निपतिताग्रैश्च पादपैरुपशोभिताम्।
वार्य्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥ ३० ॥
पुनरावृत्ततोयाञ्च ददर्श स महाकपिः।
प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥ ३१ ॥
तस्याद्दूरात् स पद्मिन्यो नानाद्विजगणायुताः।
ददर्श कपिशार्दूलो हनूमान् मारुतात्मजः ॥ ३२ ॥

जगति लोके रम्यं सुन्दरवस्तुभ्योऽपि परमसुन्दरम्। तीर्थस्तु जगती पर्वतमित्यर्थः कस्य आर्षः सत्पर्वतमिति यावदिति व्याचष्टाञ्च उपेक्ष्य एव ॥ २८ ॥

निपतितां निःसृताम्। समुत्पत्य कोपादुत्थाय पतितां भूमिशयितां ॥ २९ ॥

जलेन पतिताग्रैः पादपैः परिशाखप्रादभः प्रकृतशाखाद्वारेण जलनिपतिताग्रत्वं वृक्षाणां कूलात् पातेन वा प्रियं प्रति क्रुद्धां प्रियसमीपादन्यत्र जिगमिषुं प्रियबन्धुभिः सखीभिर्वार्य्यमाणां प्रमदामिव ॥ ३० ॥

अतएव कान्तस्य प्रसन्नां पुनरुपस्थितां कान्तामिव पुनरावृत्ततोयां वृक्षाग्रप्रतिघातात् परावृत्तजलां ददर्श ॥ ३१ ॥

कृत्रिमां दीर्घिकाञ्चापि पूर्णां शीतेन वारिणा।
मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥ २३ ॥
विविधैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम्।
प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ॥ २४ ॥
काननैः कृत्रिमैश्चापि सर्वतः समलङ्कृताम्।
ये केचित् पादपास्तत्र पुष्पोपगफलोपगाः ॥ २५ ॥
सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः।
लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् ॥ २६ ॥
काञ्चनीं शिंशपामेकां ददर्श स महाकपिः।
वृतां हेममयीभिस्तु वेदिकाभिः समन्ततः ॥ २७ ॥
सोऽपश्यत् भूमिभागांश्च नगप्रस्रवणानि च।
सुवर्णवृक्षानपरान् ददर्श शिखिसन्निभान् ॥ २८ ॥

तस्य पर्वतस्य पद्मिन्यः पद्मिनीः अकृत्रिमदीर्घिकाः ॥ २२ ॥

उच्यमानविशेषवतीं कृत्रिमां दीर्घिकामपि ददर्श। सिकतशोभिताभित्यत्र ह्रस्व आर्षः ॥ २३ ॥

प्रासादैरित्यस्य युतामिति शेषः ॥ २४ ॥

ये केचित्तत्र वृक्षास्ते सर्वेऽपि पुष्पफलोभययुता इत्यर्थः ॥ २५ ॥

सच्छत्राः छत्राकारसंस्थानवन्तः। तेन शीतलच्छायत्वं सूचितम्। सवितर्दीकाः सवेदिकाः। सौवर्णवेदिकाः। राजतादिमहावेदिकोपरिस्थितसौवर्णवेदिका इत्यर्थः। लतेत्यर्द्धमुत्तरान्वयि ॥ २६ ॥

तेषां द्रुमाणां प्रभया मेरोरिव महाकपिः।
अमन्यत तदा वीरः काञ्चनोऽस्मीति सर्वतः॥ ३९॥
तान् काञ्चनान् वृक्षगणान् मारुतेन प्रकम्पितान्।
किङ्किणीशतनिर्घोषान् दृष्ट्वा विस्मयमागमत्॥ ४०॥
सुपुष्पिताग्रान् रुचिरांस्तरुणाङ्कुरपल्लवान्।
तामारुह्य महावेगः शिंशपां पर्णसंवृताम्॥ ४१॥
इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम्।
इतश्चेतश्च दुःखार्त्तां सम्पतन्तीं यदृच्छया॥ ४२॥
अशोकवनिका चेयं दृढं रम्या दुरात्मनः।

एकां मुख्यां वृक्षान्तरसम्बन्धरहिताञ्च। काञ्चनीं तद्वर्णां शिंशपाम्। पिच्छलागुरुशिंशपा इति कोशः॥ ३७॥ ३८॥

मेरोः प्रभया दिवाकर इव। तेषां द्रुमाणां प्रभया काञ्चनोऽस्मीत्यमन्यत। काञ्चनवर्णमात्मशरीरं वीक्षतेस्मेत्यर्थः॥ ३९॥

तान् काञ्चनानिति। किङ्किण्यस्तेषु फलादिवत् सहजाः। अतएव विस्मयमागमत्॥ ४०॥

तेषां तरुधर्ममप्याह,—सुपुष्पिताग्रानिति। तरुणाः कोमलाः अङ्कुराः पल्लवाश्च येषां तान् दृष्ट्वा विस्मयं प्राप इत्यन्वयः। तां यस्याः पर्यन्त-वृत्ता एवम्भूतास्तामारुह्य चिन्तयामासेति शेषः॥ ४१॥

इत इति। आगतामिति शेषः। तदेव स्पष्टयति इतश्चेत-श्चेति॥ ४२॥

चन्दनैश्चम्पकैश्चापि बकुलैश्च विभूषिता ॥ ४३ ॥
इयञ्च नलिनी रम्या द्विजसङ्घनिषेविता।
इमां सा राजमहिषी नूनमेष्यति जानकी ॥ ४४ ॥
साऽरामा राजमहिषी राघवस्य प्रिया सदा।
वनसञ्चारकुशला ध्रुवमेष्यति जानकी ॥ ४५ ॥
अथवा मृगशावाक्षी वनस्यास्य विचक्षणा।
वनमेष्यति साऽद्येह रामचिन्तासुकर्शिता ॥ ४६ ॥
रामशोकाभिसन्तप्ता सा देवी वामलोचना।
वनवासरता नित्यमेष्यते वनचारिणी ॥ ४७ ॥
वने चराणां सततं नूनं स्पृहयते पुरा।

रम्येयमशोकवनिका दुरात्मनो रावणस्यैव दृढं ध्रुवं राक्षसान्तरस्यैवंविधतरसम्भवात् ॥ ४३ ॥

नलिनी चेयं रम्या सा च राजमहिषीत्वाद्रम्यप्रिया अतएवेमां नलिनीं नूनमेष्यति ॥ ४४ ॥

अरामा रामवियुक्ता। राजमहिषीत्वादेव उद्यानवनसञ्चारकुशला ॥ ४५ ॥

अयमेवार्थ आदरेण बुद्धिस्थैर्य्यार्थं चिरावर्त्त्यते अथवेति सर्वथेत्यर्थः। न तु पक्षान्तरमिदं तत्त्वासम्भवात् ॥ ४६ ॥

अशोकवनिकान्तःशिंशपाप्रदेशे सीताया आगमने हेत्वन्तरमुन्नयति ॥ ४७ ॥

रामस्य दयिता भार्य्या जनकस्य सुता सती ॥ ४८ ॥
सन्ध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी ।
नदीञ्चेमां शुभजलां सन्ध्यार्थे वरवर्णिनी ॥ ४९ ॥
तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा ।
शुभायाः पार्थिवेन्द्रस्य पत्नी रामस्य सम्मता ॥ ५० ॥
यदि जीवति सा देवी ताराधिपनिभानना ।
आगमिष्यति साऽवश्यमिमां शीतजलां नदीम् ॥ ५१ ॥
एवन्तु मत्वा हनुमान् महात्मा
प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ।

वनेचराणामिति । मृगपक्ष्यादीनामित्यर्थः ॥ ४८ ॥

सन्ध्या दिनरात्र्योः सन्धिकृत्यानुष्ठानकालो यस्य कर्मणस्तत्र मनो यस्याः सा । तथा सन्ध्यार्थे सन्ध्याकालक्रियमाणस्नानाद्यर्थं पूर्ववदेवा-त्रापि उक्तस्यैवार्थस्यावृत्तिः । रात्रिशेषे हनुमतोऽस्य वचसः प्रवृत्तेः सन्ध्याशब्देनात्र प्रातःकालो विवक्षितः । तत्र कर्त्तव्यस्नानादौ चाद्यैव स्त्रीणामप्यधिकार इति कथं स्त्रीणां सन्ध्यावन्दनमिति परास्तं वेदि-तव्यम् । किञ्च सम्यक् भगवत्ध्यानस्यैव सन्ध्यापदार्थत्वेनास्त्वेव तत्र स्त्रिया अधिकारः । गायत्रीमन्त्रेण तदुच्चारणपूर्वकध्याने तु द्विज-स्यैवाधिकार इत्यन्यत् ॥ ४९ ॥

या रामस्य पत्नी सम्मता च पतिव्रतेति सर्वजनस्य । तस्याः शुभायाः इयं नदी अशोकवनिका च अनुरूपा योग्या ॥ ५० ॥ ५१ ॥

अवेक्षमाणश्च ददर्श सर्वं
सुपुष्पिते पर्णघने निलीनः ॥ ५२ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चतुर्दशः सर्गः ॥ १४ ॥

प्रतीक्षमाणः सीता आगमनमिति शेषः। अवेक्षमाणः इतस्ततोऽवलोकयन्। पर्णघने सुपुष्पिते शिंशपावृक्षे निलीनः सन् सर्वं वनं ददर्शेत्यन्वयः ॥ ५२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

## पञ्चदशः सर्गः

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥ १ ॥

सन्तानकलताभिश्च पादपैरुपशोभिताम् ।
दिव्यगन्धरसोपेतां सर्वतः समलङ्कृताम् ॥ २ ॥

तां स नन्दनसङ्काशां मृगपक्षिभिरावृताम् ।
हर्म्यप्रासादसम्बाधां कोकिलाकुलनिःस्वनाम् ॥ ३ ॥

काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम् ।
बह्वासनकुथोपेतां बहुभूमिगृहायुताम् ॥ ४ ॥

वीक्षमाणः इतस्ततोऽवलोकयन् । तत्रस्थः शिंशपास्थः । मार्गमाणः मैथिलीहेतुनाऽधोदृष्ट्या महीमवेक्षमाणः सर्वां ताम् अशोकवनिकामन्ववैक्षत ॥ १ ॥

तां विशिनष्टि । सन्तानकलताभिः सहितैः पादपैरित्यर्थः ॥ २ ॥

तां स ददर्शेत्यन्वयः । नन्दनसङ्काशां तद्वन्नन्दनादनेकोपादेयवस्तुमतीम् ॥ ३ ॥

बह्वासनैः कुथैरास्तरणैश्चोपेताम् । उपर्युपरि भूमियुक्ता गृहा बहुभूमिगृहाः ॥ ४ ॥

सर्वर्त्तुकुसुमैरम्यैः फलवद्भिश्च पादपैः।
पुष्पितानामशोकानां श्रिया सूर्य्योदयप्रभाम् ॥ ५ ॥
प्रदीप्तामिव तत्रस्थो मारुतिः समुदैचत।
निष्पत्रशाखां विहगैः क्रियमाणामिवासकृत् ॥ ६ ॥
विनिष्पतद्भिः शतशश्चित्रैः पुष्पावतंसकैः।
समूलपुष्परचितैरशोकैः शोकनाशनैः ॥ ७ ॥
पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदिनीम्।
कर्णिकारैः कुसुमितैः किंशुकैश्च सुपुष्पितैः ॥ ८ ॥
स देशः प्रभया तेषां प्रदीप्त इव सर्वतः।
पुन्नागाः सप्तपर्णाश्च चम्पकोद्दालकास्तथा ॥ ९ ॥
विवृद्धमूला बहवः शोभन्ते स्म सुपुष्पिताः।
शातकुम्भनिभाः केचित् केचिदग्निशिखप्रभाः ॥ १० ॥

सर्वर्त्तुषु कुसुमानि येषां तैः पादपैर्युतां सूर्य्योदयप्रभाम् उद्यत्सूर्य्यसमकान्तिम् ॥ ५ ॥

तत्रस्थः शिंशपास्थो मारुतिरशोकपुष्पैः प्रदीप्तामिवोदैचतेत्युत्प्रेचा। असकृच्छ्रेतशो विनिष्पतद्भिश्चित्रैः पुष्पाख्यवतंसवत्प्रतीयमानानि येषां तैर्विहगैर्निबिडशाखामपि निष्पत्रशाखां क्रियमाणां बहुपचिपचप्रिहितपर्णतया पत्ररहितशाखामिवेत्यर्थः ॥ ६ ॥

तथा उच्यमानविशेषणैरशोकैः पुष्पभारैः पुष्पसमूहेन जनितातिभारैरतएवातिभारवशादतिप्रह्वशाखतया भूमिं स्पृशद्भिः कर्णिकारैः किंशुकैश्च युतः स देशस्तेषां प्रभया प्रदीप्त इव ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

नीलाञ्जननिभाः केचित्तत्राशोकाः सहस्रशः ।
नन्दनं विबुधोद्यानं चित्रं चैत्ररथं यथा ॥ ११ ॥
अतिवृत्तमिवाचिन्त्यं दिव्यं रम्यश्रियायुतम् ।
द्वितीयमिव चाकाशं पुष्पज्योतिर्गणायुतम् ॥ १२ ॥
पुष्परत्नशतैश्चित्रं पञ्चमं सागरं यथा ।
सर्वर्त्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ॥ १३ ॥
नानानिनादैरुद्यानं रम्यं मृगगणद्विजैः ।
अनेकगन्धप्रवहं पुण्यगन्धं मनोहरम् ॥ १४ ॥
शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् ।
अशोकवनिकायान्तु तस्यां वानरपुङ्गवः ॥ १५ ॥
स ददर्शाविदूरस्थं चैत्यप्रासादमूर्जितम् ।

नीलाञ्जननिभा इति । एवमुक्त्याऽशोकानामनेकवर्णपुष्पवत्त्वं सूचितम् । विबुधोद्यानं नन्दनं यथा नन्दनम् आह्लादकं चैत्ररथं कुबेरवनं यथा चित्रं तद्वच्चित्रम् ॥ ११ ॥

तदुभयमप्यतिवृत्तमिव अतिक्रम्येवावस्थितं पुष्परूपज्योतिर्गणैरायुतम् ॥ १२ ॥

पुष्परूपैः रत्नशतैः ॥ १३ ॥

मृगादिभिः स्वीयैर्नानाविधैः शब्दै रम्यं कृतम् । एवं विशेषणकम् उद्यानमशोकवनिकान्तर्गतं ददर्शेत्यनुकर्षः ॥ १४ ॥

शैलेन्द्रो हिमवान् तस्यां पूर्ववर्णितायाम् ॥ १५ ॥

मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ॥ १६ ॥
प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम्।
मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ॥ १७ ॥
निर्मलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम्।
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥ १८ ॥
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥ १९ ॥
मन्दप्रख्यायमानेन रूपेण रुचिरप्रभाम्।
पिनद्धां धूमजालेन शिखामिव विभावसोः ॥ २० ॥
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा।
सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ॥ २१ ॥

चैत्यं वर्तुलाकारत्वात् बुधायतनमिव प्रासादं स्तम्भसहस्रेणाधारभूतेन स्थितम् ॥ १६ ॥ १७ ॥

प्रांशुभावत्वादुच्चभावत्वात्। ततस्तद्दर्शनानन्तरम्। मलिनवासःसंवीतत्वादिविशेषणवतीं सीतां दूरादेव तन्मूलस्थां ददर्शेत्यनुकर्षः ॥ १८ ॥ १९ ॥

मन्दप्रख्यायमानेन इदमिदमिति इदं तदिति वा कथञ्चिदूह्यमानेन रूपेण स्वरूपेणोपलक्षिताम् ॥ २० ॥

क्लिष्टेन जीर्णेन पांशुव्याप्तत्वेन वा क्लिष्टेन सपङ्कां मलवच्छरीराम्। पद्मिनी नलिनीलता च ॥ २१ ॥

पीड़ितां दुःखसन्तप्तां परिक्षीणां तपस्विनीम्।
ग्रहेणाङ्गारकेणेव पीड़ितामिव रोहिणीम्॥ २२॥
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च।
शोकध्यानपरां दीनां नित्यदुःखपरायणाम्॥ २३॥
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम्।
स्वगणेन मृगीं हीनां श्वगणेनावृतामिव॥ २४॥
नीलनागाभया वेण्या जघनं गतयैकया।
नीलया नीरदापाये वनराज्या महीमिव॥ २५॥
सुखार्हां दुःखसन्तप्तां व्यसनानामकोविदाम्।
तां विलोक्य विशालाक्षीमधिकं मलिनां कृशाम्॥ २६॥
तर्कयामास सीतेति कारणैरुपपादिभिः।

अङ्गारकेणेव समुत्थेन ग्रहेण केतुना पीड़ितां रोहिणीमिव॥ २२॥ २३॥

प्रियं जनं रामलक्ष्मणरूपं जनम्। स्वगणेन मृगां गणेन॥ २४॥

जघनं पृष्ठभागं तं प्राप्तयैकया हरणदिनकृतैकसंस्कारवत्या यद्वा पुरोभागीयवेणीद्वयराहित्येन पृष्ठलम्बयैकया वेण्या नीलनागाभया नीलसर्पतुल्यया वेण्योपलक्षिताम्। अनेन तत्स्पर्शः मरणमेवेति सूचितम्। मेघापाये नीलया वनराज्योपलक्षितां महीमिव स्थिताम्॥ २५॥ २६॥

ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ॥ २७ ॥
यथारूपा हि दृष्टा सा तथा रूपेयमङ्गना ।
पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ॥ २८ ॥
कुर्वतीं प्रभया देवीं सर्वा वितिमिरा दिशः ।
तां नीलकण्ठीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥ २९ ॥
सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ ३० ॥
भूमौ सुतनुमासीनां नियतामिव तापसीम् ।
निःश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥ ३१ ॥

उपपादिभिः सीतात्वनिश्चयोपपादनसमर्थैः । तत्कारणं प्रत्यभिज्ञानमाह,—ह्रियमाणेति । यथारूपा दृष्टा यादृग्वेषवर्णादिमती अनुभूता तथारूपेयम् । भेदे हि प्रत्यभिज्ञानमनुपपन्नमिति भावः ॥ २७ ॥

पूर्णचन्द्राननत्वादिगुणवतीं निरीक्ष्य तस्य बुद्धिः सन्दिदिहे इत्यष्टचिंशत् श्लोकेनान्वयः । सुभ्रूं सुभ्रुवम् ॥ २८ ॥

सर्वा दिशो वितिमिराः कुर्वन्तीम् । नीलकण्ठीं सौभाग्यसूचकेन्द्रनीलमणिमयकण्ठभूषणप्रभया तद्वर्णकण्ठाम् । सुप्रतिष्ठितां सुप्रतिष्ठितसर्वावयवसंस्थानाम् ॥ २९ ॥

चन्द्रप्रभासादृश्यं सर्वानन्दकारत्वेन ॥ ३० ॥

नियतां भूशयनादिरूपनियमवतीम् । तापसीमिव भूमावासीनाम् । भुजगेन्द्रवधूसादृश्यं दुष्प्रधृष्यत्वेन रक्षःकुलनाशकत्वेन च ॥ ३१ ॥

शोकजालेन महता विततेन न राजतीम्।
संसक्तां धूमजालेन शिखामिव विभावसोः ॥ ३२ ॥
तां स्मृतीमिव सन्दिग्धां ऋद्धिं निपतितामिव।
विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥ ३३ ॥
सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव।
अभूतेनापवादेन कीर्त्तिं निपतितामिव ॥ ३४ ॥
रामोपरोधव्यथितां रक्षोगणनिपीड़िताम्।
अबलां मृगशावाक्षीं वीक्ष्यमाणान्ततस्ततः ॥ ३५ ॥
बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा।
वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः ॥ ३६ ॥
मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम्।

न राजतीम् अराजतीं विभावसोः शिखामिव यातिरश्यतेजसा ज्वलन्तीम् ॥ ३२ ॥

स्मृतीमिवेति दीर्घं आर्षः। सन्दिग्धामर्थसन्देहवतीम्। ऋद्धिमैश्वर्य्यं निपतितामन्यायवशादिति भावः। विहतां नास्तिकबुद्ध्येति भावः। प्रतिहतां स्वविषयालाभादिति भावः ॥ ३३ ॥

सोपसर्गां सविघ्नां सकलुषां रागद्वेषादिकालुष्यवतीम्। अभूतेनापवादेन केवलमारोपितेन कलङ्केन ॥ ३४ ॥

रामोपरोधः रामसेवाप्रतिबन्धः ॥ ३५ ॥

कृष्णानि वक्राणि च अक्षिपक्ष्माणि यस्य तेन ॥ ३६ ॥

प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥ ३७ ॥
तस्य सन्दिदिहे बुद्धिस्तथा सीतां निरीक्ष्य च।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ३८ ॥
दुःखेन बुबुधे सीतां हनूमाननलङ्कृताम्।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥ ३९ ॥
तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम्।
तर्कयामास सीतेति कारणैरुपपादयन् ॥ ४० ॥
वैदेह्या यानि चाङ्गेषु तदा रामोन्वकीर्त्तयत्।
तान्याभरणजालानि गात्रशोभीन्यलक्षयत् ॥ ४१ ॥

संस्कारस्नानराहित्यान्मलपङ्कधरत्वम्। त्वगादिमलरूपः पङ्कः। नक्षत्रराजश्चन्द्रः ॥ ३७ ॥

सन्दिदिहे प्रत्यभिज्ञाबाधकत्वात् कार्श्यमालिन्यादितिरोहितरूपत्वात् सन्देह। आम्नायोऽभ्यासः ॥ ३८ ॥

बाधकस्याकिञ्चित्करत्वमाह,—दुःखेनेति। दुःखबोध्यत्वे हेतुरनलङ्कृतामिति। संस्कारेणेति। स्नानानुलेपनादिरङ्गसंस्कारः वाचो व्याकरणज्ञानादिजः संस्कारः देव्या अर्थान्तरगतत्वं देशान्तरगतत्वं वाचस्तु विवक्षितार्थादन्यार्थबोधकत्वं वाचोऽर्थो यथा व्याकरणाद्यभ्यासदुःखेन व्युत्पत्तिं सम्पाद्य बुध्यते तद्वत् सीतां कष्टेन बुबुधे ॥ ३९ ॥

कारणैरुपपादयन् सीतानिश्चयहेतुभिरुपपत्तिमन्तं सम्पादयन् ॥ ४० ॥

इदानीं सीतात्वोपपादकमाह,—वैदेह्या इति। तदा वनप्रस्थानसमये। गात्रशोभीनीति पाठः कतकसम्मतः। येष्वङ्गेषु यान्याभरणा-

सुकृतौ कर्णवेष्टौ च श्वदंष्ट्रौ च सुसंस्थितौ।
मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ॥ ४२ ॥
श्यामाणि चिरयुक्तत्वात्तथा संस्थानवन्ति च।
तान्येवैतानि मन्येऽहं यानि रामोऽन्वकीर्त्तयत् ॥ ४३ ॥
तत्र यान्यवहीनानि तान्यहं नोपलक्षये।
यान्यस्या नावहीनानि तानीमानि न संशयः ॥ ४४ ॥

जालान्यकीर्त्तयत् तान्याभरणजालानि तत्तद्गात्रशोभीन्यलक्षयदिति प्रत्यभिज्ञाप्रामाण्यं सिद्धम्। तीर्थस्तु शाखाशोभीनीति पाठं प्रकल्प्य रामविश्लेषसमये भूषणधारणस्यानुचितत्वादिदं श्लाभूषणानि स्वाङ्गेभ्य उन्मुच्य शाखायां न्यस्तानीति गम्यत इति व्याचख्यौ। तत्तु उत्तरश्लोकयोर्हस्तेष्विति तथा श्यामानि चिरयुक्तत्वादिति पदस्वरसविरुद्धम्। किञ्चैवं तदङ्गे रामोक्ताभरणाभावादसीतात्वमेव स्यात् ॥ ४१ ॥

अथ कस्मिन् गात्रे किमाभरणं दृश्यते तत्राह,—सुकृतौ निर्मितौ कर्णवेष्टौ कुण्डले। श्वदंष्ट्रौ कर्णाभरणविशेषौ त्रिकर्णकापरनामानौ सुसंस्थितौ कर्णस्वपाङ्गे सुप्रतिष्ठितौ उपलक्षये इति शेषः। हस्तेषु हस्तावयवेषु च यानि मणिविद्रुमचित्राण्याभरणानि रामेणोक्तानि तथैव सुस्थितानि उपलक्षये ॥ ४२ ॥

चिरयुक्तत्वात्। चिरकालमसंस्कृतदेहस्थितत्वेनासंस्कृतत्वात् श्यामान्यपि श्यामवर्णान्यपि तथा संस्थानवन्ति रामोक्तसन्निवेशवन्ति। यानि रामोऽन्वकीर्त्तयत्। तान्येवेमानीति मन्ये ॥ ४३ ॥

इतोऽप्येवमित्याह,—तत्रेति। रामोपदिष्टेषु यान्याभरणानि अवहीनानि पतितानि ऋष्यमूकादाविलयर्थः ॥ ४४ ॥

पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम्।
उत्तरीयं नगासक्तं तदा दृष्टं प्लवङ्गमैः॥ ४५॥
भूषणानि च मुख्यानि दृष्टानि धरणीतले।
अनयैवापविद्धानि स्वनवन्ति महान्ति च॥ ४६॥
इदं चिरगृहीतत्वात् वसनं क्लिष्टवत्तरम्।
तथाप्यनूनं तद्वर्णं तथा श्रीमद्यथेतरत्॥ ४७॥
इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया।
प्रणष्टापि सती यस्य मनसो न प्रणश्यति॥ ४८॥
इयं सा यत् कृते रामश्चतुर्भिरिह तप्यते।
कारुण्येनानृशंस्येन शोकेन मदनेन च॥ ४९॥

कानि त्यक्तानीति त्वयावगतानि तत्राह,—पीतमिति। कनकपट्टाभत्वेन स्वर्णतन्तुमायनिष्पन्नत्वं तस्य सूच्यते नागासक्तं वृक्षासक्तम्॥ ४५॥

ऋष्यमूके वस्त्रभूषणत्यागोऽप्यनयैव कृत इत्याह,—अनयैवेति॥ ४६॥

इदं वसनम् अन्तरीयवस्त्रमित्यर्थः। चिरधृतत्वात् क्लिष्टवत्तरं शयनादिना मर्दितं तथापि तद्वर्णं सपीतो रागः अनूनमप्रच्युतम्। श्रीमत्त्वमात्रम्। आर्द्रत्वादिवां वर्णशब्दः। तथा श्रीमत्शोभावद्यथेतरत् अस्मद्गृहीतमुत्तरीयमित्यर्थः॥ ४७॥

एवं आर्तनिश्चय आह,—इयमिति। प्रणष्टा दर्शनप्राप्तापि यस्य रामस्य मनसस्तु न प्रणश्यति नादृष्टा भवति। नित्यं सन्निहिता भवतीत्यर्थः॥ ४८॥

स्त्रीप्रणष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च॥ ५०॥
तस्या देव्या यथा रूपमङ्गप्रत्यङ्गसौष्ठवम्।
रामस्य च यथा रूपं तस्येयमसितेक्षणा॥ ५१॥
अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम्।
तेनेयं स च धर्मात्मा मुहूर्त्तमपि जीवति॥ ५२॥

सा इयमेव। के चत्वारस्तत्राह,—कारुण्येनेति। परितापहेतु-कारुण्यादि स्वयमेव दर्शयति॥ ४९॥

स्त्रीति। प्रणष्टा परेण पीड़िता मया च सती सा न रक्षिता। आपदि स्त्रियो रक्ष्याः इत्युक्तस्तदकरणकृतकारुण्यात् परितापः। वनं प्रस्थितमपि मामाश्रिता सा च न रक्षितेति आनृशंस्यतः। आश्रित-संरक्षणस्वभावत्वेन तदकरणात् परितापः। पत्नी सर्वधर्मसाधनभूता नष्टेति धर्मनाशचिन्ताशोकेन परितापः। प्रियेति परमरूपलावण्या-दिमती परमसुखसाधनभूता नष्टेति पूर्वसम्भोगादिस्मरणजमदनेन सर्व-सिद्धसर्वेन्द्रियपरिताप॥ ५०॥

अस्या यथा रूपादि तथा, रामस्य यथा रामस्य रूपादि तथा अस्या अपि अतः सोऽस्या योग्यः। इयञ्च तस्य योग्येत्यर्थः। अनेनो-भयोरन्योऽन्यमानुरूप्यं दर्शितम्॥ ५१॥

अथान्योऽन्यानुरागमाह,—अस्या देव्या इति। येनास्याश्चित्तं रामे सक्तं तस्य चास्यां तेनेयं स च जीवति चित्तसन्निधानेन वियोगा-भावादिति भावः। मुहूर्त्तमपि इत्यस्यान्यथेत्यादिः न जीवेदिति च शेषः॥ ५२॥

दुष्करं कृतवान् रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५३ ॥
एवं सीतां तथा दृष्ट्वा हृष्टः पवनसम्भवः ।
जगाम मनसा रामं प्रशशंस च तं प्रभुः ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
पञ्चदशः सर्गः ॥ १५ ॥

दुष्करमिति । अथ तेनेति वर्त्तते तेन चित्तसन्निधानेन दुष्करं किं कृतवान् तत्राह,—धारयतीति वर्त्तमानसामीप्ये लट् दधारेत्यर्थः ॥ ५३ ॥

सीतामेवमेवं गुणां तथा मलिनवासःसंवीतत्वोपवासकृशत्वशोकध्यानपरायणत्वादिपातिव्रत्यधर्मवतीं दृष्ट्वा हृष्टः सन् रामं सस्मार स्मृतञ्च तं प्रशशंस । एवं पातिव्रत्यगुणवत् पत्नीलाभेन भाग्योत्तरो रामः । ईदृश्या वियोगेनेदृशी पीड़ा ईदृशी प्राप्तये उद्यमस्तोचित एवेति । यात् सीताञ्च प्रशशंस । बलवता भयेन प्रभुणा हृतापि या एवं पातिव्रत्या तदुभैव सर्वोत्तमेत्येवं प्रशशंस ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

# षोडशः सर्गः ।

प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुङ्गवः ।
गुणाभिरामं रामञ्च पुनश्चिन्तापरोऽभवत् ॥ १ ॥
स मुहूर्त्तमिव ध्यात्वा बाष्पपर्य्याकुलेक्षणः ।
सीतामाश्रित्य तेजस्वी हनूमान् विललाप ह ॥ २ ॥
मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया ।
यदि सीता हि दुःखार्त्ता कालो हि दुरतिक्रमः ॥ ३ ॥

सीतां प्रशस्य प्रशंसा च प्रागुक्तरूपा । चिन्तापरः सीताविषयदुःखेनेति भावः ॥ १ ॥

सीतामाश्रित्य सीतामुद्दिश्य ॥ २ ॥

गुरुभिर्विनीतस्य शिक्षितस्य लक्ष्मणस्य गुरुप्रिया गुरोः रामस्य पत्नीत्वात् । तद्वदेव परमोपास्यत्वेनाभीष्टा सीता अयोनिजा निःसीमपातिव्रत्या रामपत्न्यपि यदि दुःखार्त्ता दुःखपीड़िता तर्हि कालो हि दुरतिक्रम इति हि निश्चितमित्यर्थः । दुःखोपायघटकत्वादिति भावः ननु न दुखं सुखं वा कालमात्रजन्यम् । कर्मानुष्ठानसापेक्षत्वात् । तत् सापेक्षकालजन्यत्वेऽपि ईश्वरावतारसीतारामयोः कर्माभावात् कथं दुःखमिति चेन्न । वस्तुतस्तु तयोर्दुःखाभावेऽपि लोकानुग्रहाय गृहीतमनुष्यदेहयोस्तेषां मनुष्यत्वाभावबुद्धिप्रतिबन्धाय नटवत्व्यवहार-

रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः ।
नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे ॥ ४ ॥
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् ।
राघवोऽर्हति वैदेहीं तञ्चेयमसितेक्षणा ॥ ५ ॥
तां दृष्ट्वा नवहेमाभां लोककान्तामिव श्रियम् ।
जगाम मनसा रामं वचनञ्चेदमब्रवीत् ॥ ६ ॥

मभिनयतोः सुखदुःखादिकालिकमुखविकासाद्यभिनयेन तन्मायामोहित-स्यैव देवांशस्य हनूमतोऽभिनीतकार्यदर्शनेन तत्कारणानुमानात् दुःखान्तत्वाद्युक्तेः सामञ्जस्यात् । यथा च परोक्षाद्बोधनं विना हनूमतः स्वबलपराक्रमांशे मोहस्तथाऽनयोर्भगवत्स्वरूपत्वे इदानीं तस्य मोह इति वक्तुं शक्यत्वात् पश्चात् भगवदिच्छयैव तस्य तयोः स्वरूपज्ञानेऽपि न किञ्चिदनुपपन्नम् ॥ ३ ॥

नन्वेवंविधदुःखातिशये जीवनहानिरेवस्यादत आह,—रामस्येति । मल्लक्षणो राम एवंविधे दुर्गे स्थितामपि मां विक्रान्तैः समुद्रमपि येन केनाप्युपायेनोल्लङ्घ्यागत्यानायास्यतीति । तस्य व्यवसायज्ञा परा-क्रमज्ञा सती नात्यन्तं क्षुभ्यते नैराश्यमूलकं प्राणत्यागसम्पादकक्षोभं न प्राप्नोतीत्यर्थः । जलदागमे वर्षाकालेऽपि गङ्गा यथा इतर क्षुद्र-नदीव दुर्धरवेगं न प्राप्नोति तद्वत् ॥ ४ ॥

तुल्यशीलवयोवृत्तां रामतुल्यस्वभाववयश्चारित्राम् । अभिजनः कुलं लक्षणं सामुद्रिकोक्तम् । अतएव सीताया रामस्य मुखशान्तरे स्वान्तरे चासक्तिः स्वभावमूलेति सूचितम् ॥ ५ ॥

अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः।
रावणप्रतिमो वीर्य्ये कबन्धश्च निपातितः॥ ७॥
विराधश्च हतः सङ्ख्ये राक्षसो भीमविक्रमः।
वने रामेण विक्रम्य महेन्द्रेणेव शम्बरः॥ ८॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम्।
निहतानि जनस्थाने शरैरग्निशिखोपमैः॥ ९॥
खरश्च निहतः संख्ये त्रिशिराश्च निपातितः।
दूषणश्च महातेजा रामेण विदितात्मना॥ १०॥
ऐश्वर्य्यं वानराणाञ्च दुर्लभं वालिपालितम्।
अस्या निमित्ते सुग्रीवः प्राप्तवान् लोकविश्रुतः॥ ११॥
सागरश्च मयाक्रान्तः श्रीमान् नदनदीपतिः।
अस्या हेतोर्विशालाक्ष्याः पुरीचेयं निरीक्षिता॥ १२॥

मनसा रामं जगाम। अस्या' स एवानुरूप इति सस्मारेत्यर्थः। नवहेमाभां नवां तरुणीं हेमाभाञ्चेत्यर्थः॥ ६॥

अस्या हेतोः सर्वात्मना ससहस्राः प्रार्थ्यमित्यर्थः॥ ७॥

दूषणान्तरक्षोनिपातश्चैतदासत्त्या शूर्पणखानिरसनमूलत्वादन्योन्य-प्रतिबन्धसम्भावनामूलत्वाच्चैतन्मूल एव। शम्बरोऽत्र प्रद्युम्नहतादन्य एव। महेन्द्रपदेन तत्तुल्यप्रद्युम्ने लक्षणा वा॥ ८॥ ९॥ १०॥

अस्या निमित्ते सप्तम्यर्थे षष्ठी। अस्यां निमित्तभूतायां सत्या-मित्यर्थ इति तीर्थः॥ ११॥ १२॥

यदि रामः समुद्रान्तां मेदिनीं परिवर्त्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ १३ ॥
राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा ।
त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात् कलाम् ॥ १४ ॥
इयं सा धर्मशीलस्य जनकस्य महात्मनः ।
सुता मैथिलराजस्य सीता भर्त्तृदृढ़व्रता ॥ १५ ॥
उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते ।
पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः ॥ १६ ॥
विक्रान्तस्यार्य्यशीलस्य संयुगेष्वनिवर्त्तिनः ।
स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी ॥ १७ ॥
धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः ।

परिवर्त्तयेत् अधरोत्तरं कुर्य्यात् संहरेदिति यावत् ॥ १३ ॥

एवं मतेयुक्तत्वमुपपादयति । राज्यमिति । त्रैलोक्यराज्यसीताप्राप्त्योः कतरत् उत्कृष्टमिति विचारे आद्यं द्वितीयकोटिगतांशेन साहश्यमपि नार्हतीत्यर्थः ॥ १४ ॥

आधिक्यमेवोपपादयति इयमिति । अनेन कुलम् । भर्त्तृदृढव्रतेत्यनेन चारित्र्यातिशयः । मेदिनीं भित्त्वेत्यनेनायोनिजतयाऽमानुषदिव्यरूपत्वं दर्शितम् ॥ १५ ॥ १६ ॥

आर्य्यशीलस्य पूज्यशीलस्य । अनेन महाकुलीनपाणिग्रहत्वं दर्शितम् ॥ १७ ॥

इयं सा दयिता भार्य्या राक्षसीवशमागता ॥ १८ ॥
सर्व्वान् भोगान् परित्यज्य भर्तृस्नेहबलात्कृता।
अचिन्तयित्वा कष्टानि प्रविष्टा निर्जनं वनम् ॥ १९ ॥
सन्तुष्टा फलमूलेन भर्तृशुश्रूषणापरा।
या परां भजते प्रीतिं वनेऽपि भवने यथा ॥ २० ॥
सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी।
सहते यातनामेतामनर्थानामभागिनी ॥ २१ ॥
इमान्तु शीलसम्पन्नां द्रष्टुमिच्छति राघवः।
रावणेन प्रमथितां प्रपामिव पिपासितः ॥ २२ ॥
अस्या नूनं पुनर्लाभात् राघवः प्रीतिमेष्यति।
राजा राज्यपरिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥ २३ ॥

यच्छेषतयैवं प्राशस्त्यं दर्शितं तस्य कालस्य दुरतिक्रमत्वमाह,—इयं सेति राक्षसीवशमागता कालप्राबल्यादिति भावः। फलमत उपपत्तेरिति व्याससूत्रेणापि काळात्मनो भगवतः एव कर्मफलप्रापण-सामर्थ्यं दर्शितम् ॥ १८ ॥

भर्तृस्नेहबलात्कृता बलात् प्रवर्त्तिता ॥ १९ ॥

भर्तृशुश्रूषणापरा। समन्तात् स्वार्थे शिचित्यासम्श्रेति युक् ॥ २० ॥

पूर्ववदेवाह,—सेयमिति यातनां राक्षसीभिः सम्पाद्यमानतीव्र-दुःखम् अनर्थानामापदाम् ॥ २१ ॥

शीलसम्पन्नाम् ईदृशदुःखेऽपि चारित्र्यप्रच्यवरहितां प्रमथितां प्रम-थितामपि। प्रपा पानीयशाला ॥ २२ ॥ २३ ॥

कामभोगैः परित्यक्ता हीना बन्धुजनेन च ।
धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी ॥ २४ ॥
नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् ।
एकस्थहृदया नूनं राममेवानुपश्यति ॥ २५ ॥
भर्त्ता नाम परं नार्य्याः शोभनं भूषणादपि ।
एषा हि रहिता तेन शोभनार्हा न शोभते ॥ २६ ॥
दुष्करं कुरुते रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ २७ ॥
इमामसितकेशान्तां शतपत्रनिभेक्षणाम् ।
सुखार्हां दुःखितां ज्ञात्वा ममापि व्यथितं मनः ॥ २८ ॥
क्षितिक्षमा पुष्करसन्निभेक्षणा

काम्यन्त इति कामाः भुज्यन्त इति भोगाः स्रक्चन्दनादयस्तै-स्त्यक्ता। तत्समागमकाङ्क्षिणो इति जीवन्तमानन्दो वर्षशतादपीति न्यायेनेति भावः ॥ २४ ॥

राक्षस्यः राक्षसीरित्यर्थः। एकस्मिन् लक्ष्ये तिष्ठति तादृशं हृदयं यस्याः सा किं तदेकं लक्ष्यं तत्राह,—नूनं राममेवेति ॥ २५ ॥

राममेवेत्यत्र बीजमाह,—भर्त्ता नामेति। शोभनं शोभा ॥ २६ ॥

एतदेकहृदयत्वज्ञानादेव रामः प्रभुर्यज्जीवनरूपं दुःखेनावसादना-भावरूपञ्च दुष्करं कुरुते ॥ २७ ॥

ममापि तिर्य्यग्योनेरपि विषयानभिज्ञस्यापि ॥ २८ ॥

या रक्षिता राघवलक्ष्मणाभ्याम्।
सा राक्षसीभिर्विकृतेक्षणाभिः
संरक्ष्यते संप्रति वृक्षमूले ॥ २९ ॥
हिमहतनलिनीव नष्टशोभा
व्यसनपरम्परया निपीड्यमाना।
सहचररहितेव चक्रवाकी
जनकसुता कृपणां दशां प्रपन्ना ॥ ३० ॥
अस्या हि पुष्पावनताग्रशाखाः
शोकं दृढं वै जनयन्त्यशोकाः।
हिमव्यपायेन च शीतरश्मि-
रभ्युत्थितो नैकसहस्ररश्मिः ॥ ३१ ॥

क्षितितुल्या क्षमा यस्याः सा। दृष्टिमात्रेण रावणस्याभस्मी-
करणात्। संरक्ष्यते परैरनपहाराय गोप्यत इत्यर्थः ॥ २९ ॥

कृपणां शोच्याम् ॥ ३० ॥

न केवलमशोका एव शोकजनकाः, अन्योऽपीत्याह,—हिमव्यपायेन
वसन्तसमीपप्राकालेनोपलक्षितः,। यद्वा लङ्कायां हिमव्यपायेन शीता-
भावेनाभ्युत्थितोऽतिप्रकाशतया स्थितः। अतएव नैकसहस्ररश्मिः।
अभ्युत्थितः उदयं प्राप्तः। शीतरश्मिश्च शोकं जनयति इत्यनु-
कर्षः ॥ ३१ ॥

इत्येवमर्थं कपिरन्ववेक्ष्य
सीतेयमित्येव तु जातबुद्धिः ।
संश्रित्य तस्मिन्निषसाद वृक्षे
बली हरीणामृषभस्तरस्वी ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षोड़शः सर्गः ॥ १६ ॥

सीतेयमित्येव इयं सीतैवेति जातबुद्धिस्तामेव बुद्धिं संश्रित्य ततः परानुष्ठेयचिकीर्षया तस्मिन् शिंशपावृक्षे एव निषसाद । तद्रात्रिशेषं परदिनञ्च स्थित इत्यर्थः । एवञ्च स रावणान्तःपुरा सर्वापि लङ्का यामत्रयेण समुद्रलङ्घनदिनरात्रावेव विचिता । तुर्य्ये यामेऽशोकवनिकाप्रवेश इति बोध्यम् । ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षोड़शः सर्गः ॥ १६ ॥



## सप्तदशः सर्गः ।



ततः कुमुदखण्डाभो निर्मलं निर्मलोदयः ।
प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥ १ ॥
साचिव्यमिव कुर्वन् स प्रभया निर्मलप्रभः ।
चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनात्मजम् ॥ २ ॥
स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम् ।
शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ॥ ३ ॥
दिदृक्षमाणो वैदेहीं हनूमान् मारुतात्मजः ।
स ददर्श विदूरस्था राक्षसीर्घोरदर्शनाः ॥ ४ ॥

ततस्तद्दिनापगमोत्तरं कुमुदखण्डं कुमुदसमूहस्तदाभः श्वैत्येन निर्मलं नभो जगाम । नभसो निर्मलत्वं स्वच्छनीलवर्णत्वम् अतएवाह,—हंसो नीलमुदकमिवेति । नभसो नीलत्वं प्रतीत्या कविसम्प्रदायेन च बोध्यम् । नभो जगाम किञ्चिन्नभउपरिभागं जगामेत्यर्थः ॥ १ ॥

साचिव्यमिव । सीतादर्शनादौ प्रभया स्वकान्त्या साचिव्यमिव साहायकमिव । दिवाभागे क्वचिदेकान्तप्रदेशे स्थितत्वान्निद्राव्याकुलत्वाच्च न सम्यक् राक्षसीनां सीतायाश्च दर्शनं रात्रौ चन्द्रोदये सति तु पुनः समीपदेशे आगत्य स्थितस्य सम्यक् सर्वदर्शनम् ॥ २ ॥

शोकभारैर्न्यस्ताम् अधो नीतामिव निमज्जमानामिव ॥ ३ ॥

एकाक्षीमेककर्णाञ्च कर्णप्रावरणां तथा ।
अकर्णां शङ्कुकर्णाञ्च मस्तकोच्छ्वासनासिकाम् ॥ ५ ॥
अतिकायोत्तमाङ्गीञ्च तनुदीर्घशिरोधराम् ।
ध्वस्तकेशीं तथा केशीं केशकम्बलधारिणीम् ॥ ६ ॥
लम्बकर्णललाटाञ्च लम्बोदरपयोधराम् ।
लम्बोष्ठीं चिबुकोष्ठीञ्च लम्बास्यां लम्बजानुकाम् ॥ ७ ॥
ह्रस्वां दीर्घाञ्च कुब्जाञ्च विकटां वामनां तथा ।
करालां भुग्नवक्त्राञ्च पिङ्गाक्षीं विकृताननाम् ॥ ८ ॥
विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः ।
कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९ ॥
वराहमृगशार्दूलमहिषाजशिवामुखाः ।

दिदृक्षमाणः प्रकटतया तां द्रष्टुमिच्छुः ॥ ४ ॥

कर्णप्रावरणामिति विशालकर्णीम् । मस्तकोच्छ्वासनासिकाम् ऊर्द्ध्वमुखनासाम् ॥ ५ ॥

अतिकायोत्तमाङ्गीम् अतिप्रवृद्धोपरिभागदेहवतीम् । तनुदीर्घशिरोधराम् अस्थूलदीर्घग्रीवामित्यर्थः । शरीरकेशैः कम्बलधारिणीमिव ॥ ६ ॥

चिबुके सम्बद्धः ओष्ठो यस्यास्ताम् ॥ ७ ॥

विकटां वक्रशरीराम् । करालां भयङ्करकृष्णवर्णाम् ॥ ८ ॥

विकृतत्वादिगुणाश्च या राक्षस्यस्तत्र स्थितास्ता ददर्शेति वक्ष्यमाणेनान्वयः । कूटोऽयस्कारकूटाभः आयुधविशेषः ॥ ९ ॥

गजोष्ट्रहयपादाश्च निखातशिरसोऽपराः ॥ १० ॥
एकहस्तैकपादाश्च खरकर्ण्यश्वकर्णिकाः ।
गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथापराः ॥ ११ ॥
अतिनासाश्च काश्चिच्च तिर्य्यक्‌नासा अनासिकाः ।
गजसन्निभनासाश्च ललाटोच्छ्वासनासिकाः ॥ १२ ॥
हस्तिपादा महापादा गोपादाः पादचूलिकाः ।
अतिमात्रशिरोग्रीवा अतिमात्रकुचोदरीः ॥ १३ ॥
अतिमात्रास्यनेत्राश्च दीर्घजिह्वाननास्तथा ।
अजामुखीर्हस्तिमुखीर्गोमुखीः सूकरीमुखीः ॥ १४ ॥
हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः ।
शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः ॥ १५ ॥
करालधूम्रकेशिन्यो राक्षसीर्विकृताननाः ।
पिबन्ति सततं पानं सुरामांससदाप्रियाः ॥ १६ ॥
मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः ।

निखातशिरसः कबन्धवदुरःप्रदेशगतशिरसः ॥ १० ॥
हरिकर्णीः सिंहकर्णीः ॥ ११ ॥
गजसन्निभनासाः शुण्डादण्डोपेतनासाः ॥ १२ ॥
पादचूलिकाः पादे संलग्ना चूडा शिरःकेशा यासां ताः । पादे वा चूडाकाराः केशा यासां ताः । अतिमात्रम् अतिप्रमाणम् ॥ १३ ॥ ॥ १४ ॥ १५ ॥

ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः ॥ १७ ॥
स्कन्धवन्तमुपासीनाः परिवार्य्य वनस्पतिम्।
तस्याधस्ताच्च तां देवीं राजपुत्रीमनिन्दिताम् ॥ १८ ॥
लक्षयामास लक्ष्मीवान् हनूमान् जनकात्मजाम्।
निष्प्रभां शोकसन्तप्तां मलसङ्कुलमूर्द्धजाम् ॥ १९ ॥
क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव।
चारित्रव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥ २० ॥
भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषिताम्।
राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ॥ २१ ॥
वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव।
चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् ॥ २२ ॥

सुरामांससदाप्रियाः सुरामांसे सदाप्रिये यसां ताः ॥ १६ ॥ १७ ॥

स्कन्धवन्तं प्रशस्तशाखोपशाखावन्तं वृक्षं शिंशपावृक्षम्। परिवार्य्य तन्मूलादीषद्दूरे आसीनाः स्थितास्तस्याधस्तात्तन्मूलसमीपे ॥ १८ ॥ १९ ॥

दिवश्च्युतां भूमौ पतितां तारामिव। चारित्रव्यपदेशः पातिव्रतज-कीर्त्तिः भर्तृदर्शनं दुर्गतं दुर्लभं यस्यास्ताम् ॥ २० ॥

उत्तमभूषणजशोभाक्षीणामपि भर्तृवात्सल्येन तत्प्रियत्वेन शोभा-वतीम्। विनाकृतां रहिताम् ॥ २१ ॥

पयोदान्ते वर्षान्ते अनेन दुःखस्यात्यल्पावशिष्टत्वं सूच्यते ॥ २२ ॥

क्लिष्टरूपा मसंस्पर्शादयुक्तामिव वल्लकीम् ।
स तां भर्तृहिते युक्तामयुक्तां रक्षसां वशे ॥ २३ ॥
अशोकवनिकामध्ये शोकसागरमाप्लुताम् ।
ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ॥ २४ ॥
ददर्श हनुमांस्तत्र लतामकुसुमामिव ।
सा मलेन च दिग्धाङ्गी वपुषा चाप्यलङ्कृता ।
मृणाली पङ्कदिग्धेव विभाति च न भाति च ॥ २५ ॥
मलिनेन तु वस्त्रेण परिक्लिष्टेन भामिनीम् ।
संवृतां मृगशावाक्षीं ददर्श हनुमान् कपिः ॥ २६ ॥
तां देवीं दीनवदनामदीनां भर्तृतेजसा ।
रक्षितां स्वेन शीलेन सीतामसितलोचनाम् ॥ २७ ॥
तां दृष्ट्वा हनुमान् सीतां मृगशावनिभेक्षणाम् ।
मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः ॥ २८ ॥

असंस्पर्शाद्भर्तृस्पर्शाभावात्। अतएवायुक्ताम्। वीणावादकवादनक्रियारहितां वल्लकीं वीणामिव स्थिताम्। अयुक्तां रक्षसां वशे रक्षोऽधीनत्वेऽयोग्याम् ॥ २३ ॥

शोकसागरमाप्लुतां तत्र मग्नाम्। ताभिः राक्षसीभिः सग्रहां क्रूरग्रहाविष्टाम् ॥ २४ ॥

अकुसुमलतासादृश्यमाभरणत्यागात्। वपुषा स्वरूपीयसहजसौन्दर्य्येण। कारकदीपकमात्रामलङ्कारः समुच्चयस्य ॥ २५ ॥ २६ ॥

भर्तृतेजसा भर्तृपराक्रमानुसन्धानेनादीनहृदयाम् ॥ २७ ॥ २८ ॥

दहन्तीमिव निःश्वासैर्वृक्षान् पल्लवधारिणः ।
सङ्घातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् ॥ २९ ॥
तां क्षामां सुविभक्ताङ्गीं विनाभरणशोभिनीम् ।
प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् ॥ ३० ॥
हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् ।
मुमोच हनुमांस्तत्र नमश्चक्रे च राघवम् ॥ ३१ ॥
नमस्कृत्वाथ रामाय लक्ष्मणाय च वीर्य्यवान् ।
सीतादर्शनसंहृष्टो हनुमान् संवृतोऽभवत् ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
सप्तदशः सर्गः ॥ १७ ॥

दुःखस्य दुःखसागरस्य अत्राधेयेनाधारनिगरणम् ॥ २९ ॥

क्षामां कृशाम् । विनाभरणशोभिनीम् आभरणानुग्रहमनपेक्ष्यैव सौन्दर्य्येण शोभमानाम् ॥ ३० ॥

राघवं नमश्चक्रे इति । भगवतो राघवस्यानुग्रहादेवेयं मया दृष्टेति पुनः पुनः कृत्वा नमस्कारः ॥ ३१ ॥

संवृतोऽभवत् । राक्षसीनां दर्शनपरिहाराय तत्कालपमवलम्ब्य वृक्षमूलसमीपशाखासु निलीनोऽभवत् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः ।

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ।
विचिन्वतश्च वैदेहीं किञ्चिच्छेषा निशाऽभवत् ॥ १ ॥
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषान् स विरात्रे ब्रह्मरक्षसाम् ॥ २ ॥
अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः ।
प्राबोध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ३ ॥
विबुध्य तु महाभागो राक्षसेन्द्रः प्रतापवान् ।
स्रस्तमाल्याम्बरधरो वैदेहीमन्वचिन्तयत् ॥ ४ ॥
भृशं नियुक्तस्तस्यां च मदनेन मदोत्कटः ।
न तु तं राक्षसः कामं शशाकात्मनि गूहितुम् ॥ ५ ॥
स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् ।

तथेति । किञ्चिच्छेषा अपररात्रमात्रशेषा । विचिन्वतस्तस्याः स्वदर्शनाय राक्षसोनिद्रावसरमन्वेषयतः ॥ १ ॥

विरात्रे रात्रिविपर्य्यासे अपररात्र इत्यर्थः । ब्रह्मरक्षसां ब्रह्मवेद-रक्षकराक्षसाम् । तदेव स्पष्टीकृतं षडङ्गेत्यादिना ॥ २ ॥ ३ ॥

निद्रावशादेव स्रस्तमाल्याम्बरधरः ॥ ४ ॥

तां नगैर्विविधैर्जुष्टां सर्वपुष्पफलोपगैः ॥ ६ ॥
वृतां पुष्करिणीभिश्च नानापुष्पोपशोभिताम् ।
सदा मत्तैश्च विहगैर्विचित्रां परमाद्भुतैः ॥ ७ ॥
ईहामृगैश्च विविधैर्वृतां दृष्टिमनोहरैः ।
वीथीः संप्रेक्षमाणश्च मणिकाञ्चनतोरणाम् ॥ ८ ॥
नानामृगगणाकीर्णां फलैः प्रपतितैर्वृताम् ।
अशोकवनिकामेव प्राविशत् सन्ततद्रुमाम् ॥ ९ ॥

भृशं नियुक्तः गाढाभिनिवेशितचित्तः । कामं कामवेगम् । ईदृशेषु तीर्थस्यान्यथा योजनं भ्रान्त्यैव । रजस्तमोगुणाविष्टस्य भगवन्माया-मोहितस्याकृत्येष्वेव प्रवृत्तेः । तथा क्रियमाणं भगवद्ध्यानमपि पापभोगो-त्तरं जन्मान्तरे उत्तमफलायेति बोध्यम् । अतएव ऋत्वाश्वमेधनाम्नो राज्ञो दानस्तावको ऋङ्मन्त्रः । न युष्मे वाजबन्धवो निनित्सुश्च न मर्त्यः । अवद्यमधि दीधरत् इति । तस्यार्थः वाजमित्यन्नं नाम अन्नदानेन ये सर्वेषां बन्धवस्तेषां सम्बोधनम् । हे वाजबन्धवः । युष्मे युष्मासु अधि सप्तम्यर्थानुवादी अधिः निनित्सुश्च निन्दनेच्छाशीलोऽपि मर्त्यः अवद्यं न दीधरत् न धारयति । भगवदनुसन्धानेनैव निष्पापत्वादिति । एवञ्च भगवतो निन्दाव्यवच्छेदभावेन ध्यानमपि नरकभोगोत्तरं जन्मान्तरे उत्तम-फलायातएवास्य मरणोत्तरं चतुर्थचतुर्युग्यां चैदिराजकुले जन्म । चतुर्विंशतिचतुर्युग्यां रामावतार इति हरिवंशोक्तेः । तावत्पर्यन्तञ्चै-तत्पापफलभोग इत्यर्थाज्ज्ञातमिति बोध्यम् ॥ ५ ॥ ६ ॥ ७ ॥

वीथीः अशोकवनिकामार्गगमनवीथीः ॥ ८ ॥ ९ ॥

अङ्गनाः शतमाचम्नु तं व्रजन्तमनुव्रजन् ।
महेन्द्रमिव पौलस्त्यं देवगन्धर्वयोषितः ॥ १० ॥
दीपिकाः काञ्चनीः काचिज्जगृहुस्तत्र योषितः ।
वालव्यजनहस्ताश्च तालवृन्तानि चापराः ॥ ११ ॥
काञ्चनैश्चैव भृङ्गारैर्जह्रुः सलिलमग्रतः ।
मण्डलाग्रा बृसीश्चैव गृह्यान्याः पृष्ठतो ययुः ॥ १२ ॥
काचिद्रत्नमयीं पात्रीं पूर्णां पानस्य भ्राजतीम् ।
दक्षिणा दक्षिणेनैव तदा जग्राह पाणिना ॥ १३ ॥
राजहंसप्रतीकाशं छत्रं पूर्णशशिप्रभम् ।
सौवर्णदण्डमपरा गृहीत्वा पृष्ठतो ययौ ॥ १४ ॥
निद्रामदपरीताक्ष्यो रावणस्योत्तमस्त्रियः
अनुजग्मुः पतिं वीरं घनं विद्युल्लता इव ॥ १५ ॥

अङ्गनाश्शतमाचम्नित्यवधारणे इति कतकः । देवादियोषितो महेन्द्रमिव पौलस्त्यं रावणम् अनुव्रजन् अडभाव आर्षः ॥ १० ॥

काञ्चनीः काञ्चनदण्डाः वालव्यजनहस्ता इत्यस्यान्वव्रजन्निति शेषः । तालवृन्तानीत्यस्य जगृहुरिति । अनेन लङ्कायां हेमन्तशिशिरयोरपि शीताभावो ध्वनितः ॥ ११ ॥

भृङ्गारैः कलशैः धत्तूरकुसुमसदृशजलपात्रैरित्यर्थः इति तीर्थः । मण्डलाग्राश्छत्रपर्य्यन्ताः बृसीरासनविशेषान् । तपस्विनामिमे इत्यादिना अस्य तु स्वर्णमेति विशेषः ॥ १२ ॥

व्याविद्धहारकयूराः समामृदितवर्णकाः ।
समागलितकेशान्ताः सस्वेदवदनास्तथा ॥ १६ ॥
घूर्णन्त्यो मदशेषेण निद्रया च शुभाननाः ।
स्वेदक्लिष्टाङ्गकुसुमाः सुमाल्याकुलमूर्द्धजाः ॥ १७ ॥
प्रयान्तं नैरृतपतिं नार्य्यो मदिरलोचनाः ।
बहुमानाच्च कामाच्च प्रियभार्य्यास्तमन्वयुः ॥ १८ ॥
स च कामपराधीनः पतिस्तासां महाबलः ।
सीतासक्तमना मन्दो मन्दाञ्चितगतिर्बभौ ॥ १९ ॥
ततः काञ्चीनिनादञ्च नूपुराणाञ्च निःस्वनम् ।
शुश्राव परमस्त्रीणां कपिर्मारुतनन्दनः ॥ २० ॥
तञ्चाप्रतिमकर्म्माणमचिन्त्यबलपौरुषम् ।
द्वारदेशमनुप्राप्तं ददर्श हनुमान् कपिः ॥ २१ ॥

पानस्य पूर्णां पानेन पूर्णां प्रेषे मही । भ्राजतीं देदीप्यमानाम् । दक्षिणा अनुकूला ॥ १३ ॥ १४ ॥ १५ ॥

व्याविद्धाः स्थानाद्दोलवलिताः । सम्यगामृदितोऽम्लुस्तो वर्णकोऽनुलेपनं यासां ताः ॥ १६ ॥

समाल्याः सपुष्पा आकुलाः मूर्द्धजा यासां ताः ॥ १७ ॥

मदिरलोचनाः मदकरवीक्षणाः बहुमानाद्बहुसम्मानात् । कामात् स्नेहात् ॥ १८ ॥

मन्दो दुर्मतिः मन्दं यथा तथाञ्चिता गतिर्यस्य ॥ १९ ॥ २० ॥

दीपिकाभिरनेकाभिः समन्तादवभासितम्।
गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः॥ २२॥
कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम्।
समक्षमिव कन्दर्पमपविद्धशरासनम्॥ २३॥
मथितामृतफेनाभमरजो वस्त्रमुत्तमम्।
सपुष्पमवकर्षन्तं विमुक्तं सक्तमङ्गदे॥ २४॥
तं पत्रविटपे लीनः पत्रपुष्पशतावृतः।
समीपमुपसंक्रान्तं विज्ञातुमुपचक्रमे॥ २५॥
अवेक्षमाणस्तु तदा ददर्श कपिकुञ्जरः।
रूपयौवनसम्पन्ना रावणस्य वरस्त्रियः॥ २६॥

द्वारदेशम् अशोकवनिकाप्राकारदेशम्॥ २१॥

दीपिकाभिर्भासितं रात्रिशेषसत्वात्। द्वादश्यां यामावशिष्टरात्रौ चन्द्रस्यास्तमनाच्च॥ २२॥

जिह्मादिगुणके ईक्षणे यस्य तम्। समक्षं प्रत्यक्षं कन्दर्पमिव स्थितम्। अपविद्धशरासनं त्यक्तधनुश्चापम्॥ २३॥

अमृतं पयः मथितपयः फेनवच्छुक्ला आभा यस्य तत्। अरजः धौतं सपुष्पं पुष्पमालासहितं विमुक्तं विशिष्टमुक्ताक्रान्तम्। यद्वा स्थानात् च्युतम् अङ्गदे सक्तं वस्त्रम् अवकर्षन्तम् अङ्गदादाकृष्य यथा-स्थाने स्थापयन्तम्। सपुष्पमवकर्षन्तमित्येव पाठः। तीर्थस्तु रतक्रीडागत्या सलीलमवकर्षन्तमिति पाठं कल्पयति॥ २४॥

ताभिः परिवृतो राजा सुरूपाभिर्महायशाः।
तन्मृगद्विजसङ्घुष्टं प्रविष्टः प्रमदावनम् ॥ २७ ॥
क्षीबो विचित्राभरणः शङ्कुकर्णो महाबलः।
तेन विश्रवसः पुत्रः स दृष्टो राक्षसाधिपः ॥ २८ ॥
वृतः परमनारीभिस्ताराभिरिव चन्द्रमाः।
तं ददर्श महातेजास्तेजोवन्तं महाकपिः ॥ २९ ॥
रावणोऽयं महाबाहुरिति सञ्चिन्त्य वानरः।
सोऽयमेव पुरा शेते पुरमध्ये गृहोत्तमे।
अवप्लुतो महातेजा हनूमान् मारुतात्मजः ॥ ३० ॥
स तथाऽप्युग्रतेजाः स निर्धूतस्तस्य तेजसा।
पत्रे गुह्यान्तरे सक्तो मतिमान् संवृतोऽभवत् ॥ ३१ ॥

पत्रनिटपे निबिडपत्रशाखायां विशातुम् अयममुक इति विशेषेण ज्ञातुम्। निध्यातुमिति पाठेऽप्ययमेवार्थः ॥ २५ ॥ २६ ॥

प्रमदानां क्रीडार्हं वनं प्रमदावनम् ॥ २७ ॥

शङ्कुकर्णनामा तदनुरक्षी राक्षसः तेन विश्रवसः पुत्रो राक्षसो रावणो दृष्टः। नान्येन केनापि पुरुषेणेत्यर्थः ॥ २८ ॥ २९ ॥

यः पुरमध्ये पुरा शेते शयितः। सोऽयमेवेत्यन्वय तस्माद्रा-वणोऽयमिति सञ्चिन्त्य अवप्लुतः स्वाश्रितशाखायाः अधूर्ध्वशाखान्तरे इति शेषः ॥ ३० ॥

यद्यपि सः समुद्रलङ्घनकर्त्ता स मारुतात्मजो हनूमान् उग्रतेजा-

स तामसितकेशान्तां सुश्रोणीं संहतस्तनीम्।
दिदृक्षुरसितापाङ्गीमुपावर्त्तत रावणः ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
अष्टादशः सर्गः ॥ १८ ॥

स्तथापि तस्य रावणस्य तेजसा निर्द्धूतः तस्य पुरोवस्थातुमशक्नुवन् पत्रे पत्रबहुले अतएव गुह्यान्तरे शाखान्तरे सक्तः स्थितस्तथाप्यत्यल्प शरीरतया संवृतो गूढोऽभवत्। सर्वमायातिरस्कारकमायावत स्तस्य दृष्ट्यग्रे मायया अल्पशरीरादिमत्त्वेन स्थातुमशक्यत्वादेवं करणम्॥ ३२ ॥

उपावर्त्तत समीपं प्राप्तः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे अष्टादशः सर्गः ॥ १८ ॥

# एकोनविंशः सर्गः

तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता ।
रूपयौवनसम्पन्नं भूषणोत्तमभूषितम् ॥ १ ॥
ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २ ॥
ऊरुभ्यामुदरं छाद्य बाहुभ्यां च पयोधरौ ।
उपविष्टा विशालाक्षी रुदन्ती वरवर्णिनी ॥ ३ ॥
दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः ।
ददर्श दीनां दुःखार्तां नावं सन्नामिवार्णवे ॥ ४ ॥
असंवृतायामासीनां धरण्यां संशितव्रताम् ।
छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ॥ ५ ॥

ततः हनूमतः प्रवेशानन्तरम् । तस्मिन्नेव काले अपररात्रेऽपि आगमनकाल एव रावणं दृष्ट्वा ततोऽनन्तरं प्रावेपत ॥ १ ॥ २ ॥

रुदत्युपविष्टात्स्मृतः । भीतस्वभावतया स्वभावोक्तिरयमलङ्कारः ॥ ३ ॥

सन्नां मग्नां प्राप्तनाशां नावमिवेत्यर्थः ॥ ४ ॥

असंवृतायाम् । आस्तरणरहितायां संशितव्रतां रावणवधाय तीक्ष्णव्रतमिव कुर्वाणाम् ॥ ५ ॥

मलमण्डनदिग्धाङ्गीं मण्डनार्हाममण्डनाम् ।
मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ ६ ॥
समीपं राजसिंहस्य रामस्य विदितात्मनः ।
सङ्कल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ७ ॥
शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् ।
दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥ ८ ॥
चेष्टमानामथाविष्टां पन्नगेन्द्रवधूमिव ।
धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥ ९ ॥
वृत्तशीले कुले जातामाचारवति धार्मिके ।
पुनःसंस्कारमापन्नां जातामिव च दुष्कुले ॥ १० ॥

मलेन मण्डनस्थानेषु दिग्धमङ्गीं रूषिताङ्गीम् । चित्राङ्गीमिति पठित्वा मलरूपेण मण्डनेन चित्राङ्गीं कर्बुरामित्यर्थं तीर्थ आह,—सत्रासित्वादुचितैव तस्य मलेऽपि मण्डनत्वबुद्धिः । ईदृशीं यां ददर्श सा पङ्कदिग्धा मृणालीव विभाति न वि[illegible] च स्वरूपशोभया विभाति मलावरणाच्च न विभातीत्यर्थः [illegible] ॥

सङ्कल्पस्तच्चिन्तनं तद्रूपाश्वसंयुक्तैर्मनोरथैः रामसमीपं यान्तीमिव ॥ ७ ॥

अपश्यन्तीं तामिव । ८ ॥

आविष्टां मन्त्राद्यवरुद्धाम् । धूप्यमानां सन्ताप्यमानाम् । धूमवर्णेन केतुना ॥ ९ ॥

सन्नामिव महाकीर्त्तिं श्रद्धामिव विमानिताम् ।
प्रज्ञामिव परिक्षीणामाशां प्रतिहतामिव ॥ ११ ॥
आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव ।
दीप्तामिव दिशं काले पूजामपहृतामिव ॥ १२ ॥
पौर्णमासीमिव निशां तमोग्रस्तेन्दुमण्डलाम् ।
पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव ॥ १३ ॥
प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ।
वेदीमिव परामृष्टां शान्तामग्निशिखामिव ॥ १४ ॥
उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरामृष्टामाकुलामिव पद्मिनीम् ॥ १५ ॥

वृत्तसमाचारः शीलं सत्स्वभावस्तद्युते । विहितकर्मानुष्ठानवति च कुले जातां तादृश एव कुले पुनः संस्कारं पाणिग्रहणसंस्कारमापन्ना-मपि दुष्कुले जातामुत्पन्नां तत्रैव प्राप्तसंस्कारामिव च मलिनां स्थिताम् । स्त्रीणां विवाहस्यैवोपनयनवत् द्वितीयजन्मस्थानत्वादिति भावः ॥ १० ॥

सन्ना क्षीणां विमानिताम् अनादृताम् ॥ ११ ॥

आयती धनादिप्राप्तिः आज्ञां राज्ञ इति शेषः । दिशं काले उत्पातकाले । पूजां देवपूजाम् ॥ १२ ॥

पौर्णमासीं तत्सम्बन्धिनीम् । तमः राहुः ॥ १३ ॥

प्रभां दीपिकाभाम् । तमोऽन्धकारः परामृष्टा [illegible]-राक्रान्ताम् ॥ १४ ॥

उत्कर्षितानि भ्रंशितानि पर्णानि कमलानि यस्याः सा ॥ १५ ॥

पतिशोकातुरां शुष्कां नदीं विस्राविताभिव।
परया मृजया हीनां कृष्णपक्षे निशामिव ॥ १६ ॥
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम्।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १७ ॥
गृहीतां लाड़ितां स्तम्भे यूथपेन विनाकृताम्।
निःश्वसन्तीं सुदुःखार्त्तां गजराजवधूमिव ॥ १८ ॥
एकया दीर्घया वेण्या शोभमानामयत्नतः।
नीलया नीरदापाये वनराज्या महीमिव ॥ १९ ॥
उपवासेन शोकेन ध्यानेन च भयेन च।
परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ॥ २० ॥
आयाचमानां दुःखार्त्तां प्राञ्जलीं देवतामिव।
भावेन रघुमुख्यस्य दशग्रीवपराभवम् ॥ २१ ॥

विस्राविता रोधोभङ्गादिना अन्यतः प्रापितजलाम् अतएव शुष्कां मृजया अङ्गशुद्ध्या हीनाम् ॥ १६ ॥ १७ ॥

गृहीतां धृतां पश्चात् स्तम्भे लाड़ितां बद्धाम्। कश्चित्तु गृहीतामालितामिति पठित्वा आलिताम् आलानितामित्यर्थमाह ॥ १८ ॥

अयत्नत इति। केशसंस्काराभावादयत्नतः सिद्धये इति शेषः ॥ १९ ॥

अल्पाहारां जलमात्राहाराम्। अज्ञातया अन्नस्य गृहीतुमशक्यत्वात्। देवराजतः पायसलाभेन तदनपेक्षणाच्च ॥ २० ॥

तपोधनत्वादेव रघुमुख्यस्य सकाशात् दशग्रीवपराभवम्। आयाच-

समीक्ष्यमाणां रुदतीमनिन्दितां
सुपक्ष्मताम्रायतशुक्ललोचनाम् ।
अनुव्रतां राममतीव मैथिलीं
प्रलोभयामास वधाय रावणः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकोनविंशः सर्गः ॥ १९ ॥

मामां प्रार्थयन्तीम् । अतएव भावेनान्तरध्यानेन दवतामिव । एवार्थे इव । स्वकुलदेवतामेवोद्दिश्य प्राञ्जलिं कृतनमस्काराम् ॥ २१ ॥

क्रोधेन रोदनेन वा ताम्रे प्रान्ते शुक्ले लोचने यस्यास्ताम् । वधाय तात्कालिकफलकमेव न तु स्वष्टफलकमिति तात्पर्य्यम् ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

---

## विंशः सर्गः ।

स तां परिवृतां दीनां निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ १ ॥
मां दृष्ट्वा नागनासोरु ! गूहमाना स्तनोदरम् ।
अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ २ ॥
कामये त्वां विशालाक्षि ! बहु मन्यस्व मां प्रिये ! ।
सर्वाङ्गगुणसम्पन्ने ! सर्वलोकमनोहरे ! ॥ ३ ॥
नेह किञ्चिन्मनुष्या वा राक्षसाः कामरूपिणः ।
व्यपसर्पतु ते सीते ! भयं मत्तः समुत्थितम् ॥ ४ ॥

परिवृतां राक्षसीभिरिति शेषः । साकारैः साभिप्रायैः आकार इङ्गिताकृती । न्यदर्शयत् साभिप्रायमिति शेषः ॥ १ ॥

नागो गजः स्तनोदरं गूहमाना भयादिव । भयादेवात्मानं स्वशरीरमदर्शनं नेतुमिच्छसि । तत् किमिति शेषः ॥ २ ॥

नैवं भीतिर्मत्तस्ते युक्तेत्याह,—कामये इत्यादि ॥ ३ ॥

किमिदानीं मदतिरिक्तपुरुषान्तरजं तव भयम् उत मम स्पर्शे धर्महानिजम् । नाद्य इत्याह,—नेहेति । मत्तः मदागमनात् समुत्थितं पुरुषान्तरागमनसम्भावनया जातं भयं व्यपसर्पतु । अन्येषामभावात् ॥ ४ ॥

स्वधर्म्मो रक्षसां भीरु ! सर्व्वदैव न संशयः ।
गमनं वा परस्त्रीणां हरणं सम्प्रमथ्य वा ॥ ५ ॥
एवञ्चैवमकामां त्वां न च स्प्रक्ष्यामि मैथिलि ! ।
कामं कामः शरीरे मे यथाकामं प्रवर्त्ततां ॥ ६ ॥
देवि ! नेह भयं कार्य्यं मयि विश्वसिहि प्रिये ! ।
प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ॥ ७ ॥
एकवेणी अधःशय्या ध्यानं मलिनमम्बरम् ।

ननु इत्याह,—स्वधर्म इति ॥ तं स्वधर्ममाह,—गमनं वेति । आनुकूल्यं सम्पाद्येति शेषः । सम्प्रमथ्य बलात्कृत्य एवं स्वधर्मत्वात् मम नाधर्मः । बलात्कारे चास्वतन्त्रत्वात् स्त्रिया अपि न दोष इति भावः ॥ ५ ॥

एवञ्च एवमपि बलात्कारपक्षे तव मम च दोषाभावेऽपि तस्य पक्षस्य रसाभाससम्पादकत्वात् । अतएव अकामां अनेन प्रकारेण मयि कामरहितां त्वां मद्विषयेच्छावतीञ्च न च ननु स्प्रक्ष्यामि । एवञ्चैत-दकामां त्वामिति पाठे एतदस्तोऽधर्मत्वम् एवञ्च एवमेव मदुक्तरीतिक-मेव तथाप्युक्तप्रकारेण त्वामकामां न स्प्रक्ष्यामीत्यर्थः । नन्वेवं सति दुःसहा कामपीड़ा तव स्यात्तत्राह,—काममिति । कामो मन्मथः यथा-कामं यथेच्छं कामं तद्विषयेच्छां प्रवर्त्ततां प्रवर्त्तयत्वित्यर्थः ॥ ६ ॥

अतः सर्वथा भयं न कार्य्यमित्याह,—देवीति । देवि सर्वान्तःपुर-पूज्ये इह मयि मद्विषये प्रणयस्व सम्मानानं कुरु । सम्मानने नयते-रात्मनेपदम् ॥ ७ ॥

अस्थानेष्युपवासश्च नैतान्यौपयिकानि ते ॥ ८ ॥
विचित्राणि च माल्यानि चन्दनान्यगुरूणि च ।
विविधानि च वासांसि दिव्यान्याभरणानि च ॥ ९ ॥
महार्हाणि च पानानि शयनान्यासनानि च ।
गीतं नृत्यञ्च वाद्यञ्च लभ मां प्राप्य मैथिलि ! ॥ १० ॥
स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम् ।
मां प्राप्य हि कथं वा स्यास्त्वमनर्हा सुविग्रहे ! ॥ ११ ॥
इदं ते चारुसञ्जातं यौवनं ह्यतिवर्त्तते ।
यदतीतं पुनर्नैति स्रोतः स्रोतस्विनामिव ॥ १२ ॥
त्वां कृत्वोपरतो मन्ये रूपकर्त्ता स विश्वकृत् ।
न हि रूपोपमा ह्यन्या तवास्ति शुभदर्शने ! ॥ १३ ॥

अधःशय्या भूशयनं नौपयिकानि न पुरुषार्थोपयुक्तानि ॥ ८ ॥
मां प्राप्य विचित्रमाल्यादीनि लभस्वेत्यर्थः ॥ ९ ॥ १० ॥
अनर्हा भूषणानामिति शेषः । सुविग्रहे इति सम्बुद्धिः ॥ ११ ॥
अतिवर्त्तते अतिक्रम्य गच्छति । स्रोतस्विनो जलप्रवाहाः । स्रोतः तेन प्रवृत्तजलम् । अतो भुंक्ष्व भोगानिति शेषः ॥ १२ ॥
रूपकर्त्ता दिव्यरूपस्रष्टा । त्वां कृत्वा निर्माय उपरतो दिव्यरूपनिर्माणाद्विरत इति मन्ये । उत्प्रेक्षायां हेतुः हि यतः तव रूपोपमा नास्ति । यदि पुनः स उत्तमरूपनिर्माणे यतेत न तथापि तवोपमेत्याशयः ॥ १३ ॥

त्वां समासाद्य वैदेहि! रूपयौवनशालिनीम्।
कः पुनर्नातिवर्त्तेत साक्षादपि पितामहः॥ १४॥
यद्यत् पश्यामि ते गात्रं शीतांशुसदृशानने!।
तस्मिंस्तस्मिन् पृथुश्रोणि! चक्षुर्मम निबध्यते॥ १५॥
भव मैथिलि! भार्य्या मे मोहमेतं विसर्जय।
बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव॥ १६॥
लोकेभ्यो यानि रत्नानि सम्प्रमथ्याहृतानि मे।
तानि ते भीरु! सर्वाणि राज्यञ्चैव ददामि ते॥ १७॥
विजित्य पृथिवीं सर्वां नानानगरमालिनीम्।
जनकाय प्रदास्यामि तव हेतोर्विलासिनि!॥ १८॥
नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत्।
पश्य मे सुमहद्वीर्य्यमप्रतिद्वन्द्वमाहवे॥ १९॥
असकृत् संयुगे भग्ना मया विमृदितध्वजाः।
अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः॥ २०॥

को नातिवर्त्तेत क्षुभ्येतेत्यर्थः। कः पुमानतिवर्त्ततेति पाठे काम-वश्यतामतिक्रम्य को वर्त्ततेत्यर्थः॥ १४॥

निबध्यते बद्धं जायते॥ १५॥

मोहं नैतद्वश्या भविष्यामीति बुद्धिम्॥ १६॥ १७॥

तव हेतोस्त्वत्प्रीत्यर्थम्॥ १८॥

प्रतिबलो युद्धे जेता॥ १९॥

इच्छ मां क्रियतामद्य प्रतिकर्म तवोत्तमम् ।
सुप्रभान्यवसज्जन्तां तवाङ्गे भूषणानि हि ॥ २१ ॥
साधु पश्यामि ते रूपं सुयुक्तं प्रतिकर्मणा ।
प्रतिकर्माभिसंयुक्ता दाक्षिण्येन वरानने ! ॥ २२ ॥
भुंक्ष्व भोगान् यथाकामं पिब भीरु ! रमस्व च ।
यथेष्टञ्च प्रयच्छ त्वं पृथिवीं वा धनानि च ॥ २३ ॥
ललस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च ।
मत्प्रसादाल्ललन्त्याश्च ललतां बान्धवस्तव ॥ २४ ॥
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे ! यशस्विनि ! ।
किं करिष्यसि रामेण सुभगे ! चीरवासिना ॥ २५ ॥
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः ।
व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ २६ ॥

प्रत्यनीकेषु प्रतिसैनिकभावेषु ॥ २० ॥

प्रतिकर्म प्रसाधनम् अलङ्करणमिति यावत् ॥ २१ ॥

प्रतिकर्मणा युक्तं ते रूपं पश्यामि भाविकमत्रालङ्कारः । दाक्षिण्येन मद्विषयकानुकम्पया प्रतिकर्माभिसंयुक्ता भवेति शेषः ॥ २२ ॥ २३ ॥

ललस्व इच्छां कुरु । मत्प्रसादात् मयि प्रसादात् ललन्त्याः मदीयाज्ञमितप्रभावेण वर्द्धमानायाः ॥ २४ ॥

ऋद्धिं पराक्रमादिसम्पदं श्रियं धनादिसम्पदम् ॥ २५ ॥

निक्षिप्तविजयः निरस्तविजयसाधनः । अतएव गतश्रीत्यादिगुणः । जीवनस्यैव सन्देहे पराक्रमादिसम्भावना दूरत इत्यर्थः ॥ २६ ॥

न हि वैदेहि! रामस्त्वां द्रष्टुं वाप्युपलभ्यते।
पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम्॥ २७॥

न चापि मम हस्तात्त्वां प्राप्तमर्हति राघवः।
हिरण्यकशिपुः कीर्त्तिमिन्द्रहस्तगतामिव॥ २८॥

चारुस्मिते! चारुदति! चारुनेत्रे! विलासिनि!।
मनो हरसि मे भीरु! सुपर्णः पन्नगं यथा॥ २९॥

क्लिष्टकौशेयवसनां तन्वीमप्यनलङ्कृताम्।
त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम्॥ ३०॥

अन्तःपुरनिवासिन्यः स्त्रियः सर्वगुणान्विताः।
यावत्यो मम सर्वासामैश्वर्य्यं कुरु जानकि!॥ ३१॥

मम ह्यसितकेशान्ते! त्रैलोक्यप्रवरस्त्रियः।
तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा॥ ३२॥

यानि वैश्रवणे सुभ्रु! रत्नानि च धनानि च।

द्रष्टुं वापि पामित्त् दूरतरेत्यर्थः उपलभ्यते। व्यत्ययेन श्यन् प्रत्ययः समर्था भवतीत्यर्थः। उपलप्स्यत इति पाठे समर्था भविष्यतीत्यर्थः। पुरोबलाकैः अग्रेसरबलाकैः। २७॥

इन्द्रहस्तगतां कीर्त्तिं कीर्त्तितुल्यां भार्य्यामिन्द्रहृतां नारदमुखेन प्रार्थनया यथा हिरण्यकशिपुः पापवान् नैनं त्वां रामः प्राप्स्यतीति भावः। इयञ्च कथा भागवते प्रसिद्धेति तीर्थः॥ २८॥ २९॥

स्वेषु दारेषु मन्दादर्य्यामपि॥ ३०॥

तानि लोकांश्च सुश्रोणि! मया भुंक्ष्व यथासुखम् ॥ ३३ ॥

न रामस्तपसा देवि! न बलेन च विक्रमैः।

न धनेन मया तुल्यस्तेजसा यशसापि वा ॥ ३४ ॥

पिब विहर रमस्व भुंक्ष्व भोगान्

धननिचयं प्रदिशामि मेदिनीञ्च।

मयि लल ललने! यथासुखन्त्वं

त्वयि च समेत्य ललन्तु बान्धवास्ते ॥ ३५ ॥

कुसुमिततरुजालसन्ततानि

भ्रमरयुतानि समुद्रतीरजानि।

कनकविमलहारभूषिताङ्गी

विहर मया सह भीरु! काननानि ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे

विंशः सर्गः ॥ २० ॥

ऐश्वर्य्यमाधिपत्यम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

प्रदिश देहि। अभितो मेदिनीमपि इष्टेभ्यो देहि। लल इच्छावती भव। ललन्तु प्राप्तसमस्तेप्सिता भवन्तु। प्रच्छिन्नोऽयम् ॥ ३५ ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके

सुन्दरकाण्डे विंशः सर्गः ॥ २० ॥

# एकविंशः सर्गः ।

---

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
आर्त्ता दीनस्वरा दीनं प्रत्युवाच ततः शनैः ॥ १ ॥
दुःखार्त्ता रुदती सीता वेपमाना तपस्विनी ।
चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥ २ ॥
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ।
निवर्त्तय मनो मत्तः स्वजने प्रीयतां मनः ॥ ३ ॥
न मां प्रार्थयितुं युक्तस्त्वं सिद्धिमिव पापकृत् ।

तस्येति । दीनमिति क्रियाविशेषणम् ॥ १ ॥

पतिमेव चिन्तयन्ती प्रत्युवाचेति सम्बन्धः ॥ २ ॥

तृणमन्तरतः कृत्वा । परपुरुषस्य साक्षात् सम्भाषणानर्हत्वात् । शुभ्रां किञ्चिदन्तर्धाय सूत्रादिविसर्जनवत् तृणान्तरेण तस्य मुखे प्रत्युत्तरदानम् । कथमस्य दुरात्मना रजस्तमोभूतस्य मयि दुराशेति शुचिस्मिता । प्रत्युवाचेति पुनरभिधानं प्रकारविशेषकथनार्थम् । एतेन तृणीकृतप्राणतया तृणतुल्यतया रावणस्य ग्रहणाच्च निर्भयप्रत्युत्तरदानमिति बोधितम् । तदेवाह—मत्तो मनो निवर्त्तय स्वजने प्रीयतां प्रीतिं कुरु । स्वजनः स्वभार्यादिः । कुक्षाक्षया मनः पदादेः पौनरुक्त्यदोषभाक् । वर्णनीयमर्थाभावाच्च कवेरपि तादृशं न दोषाय ॥ ३ ॥

अकार्य्यं न मया कार्य्यमेकपत्न्या विगर्हितम् ॥ ४ ॥
कुलं संप्राप्तया पुण्यं कुले महति जातया।
एवमुक्त्वा तु वैदेही रावणन्तं यशस्विनी ॥ ५ ॥
रावणं पृष्ठतः कृत्वा भूयो वचनमब्रवीत्।
नाहमौपयिकी भार्य्या परभार्य्या सती तव ॥ ६ ॥
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर।
यथा तव तथान्येषां रक्ष्या दारा निशाचर ॥ ७ ॥
आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम्।
अतुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम्।
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥ ८ ॥

सिद्धिं ब्रह्मलोकप्राप्तिम्। एकपत्न्या पतिव्रतया अकार्य्यं परपुरुषस्पर्शरूपम् ॥ ४ ॥

तं प्राप्तया विवाहसम्बन्धेनेति शेषः ॥ ५ ॥

पृष्ठतः कृत्वा पराङ्मुखं स्थित्वा। औपयिकी भोगभोग्या। तत्र हेतुः सती परभार्य्येति ॥ ६ ॥

धर्मं साध्विति पश्य साधूनां व्रतं चर यथा तव मन्दोदर्य्याः परपरिग्रहेण दुःखम् एवमन्येषामपि स्वदाराणां परपरिग्रहे दुःखमिति ज्ञात्वा अन्येषां दारा रक्ष्याः परिहार्य्याः ॥ ७ ॥

यथा स्वदाराणां स्वस्मिन्नेव रत्येषामुत्र सुखमिति स्वस्य निश्चयस्तथा परेषामपीत्यर्थं आत्मानमेव दृष्टान्तीकृत्य स्वेष्वेव रम्यताम्

इह सन्तो न वा सन्ति सतो वा नानुवर्त्तसे ।
यथा हि विपरीता ते बुद्धिराचारवर्जिता ॥ ६ ॥
वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः ।
राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ॥ १० ॥
अकृतात्मानमासाद्य राजानमनये रतम् ।
समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥ ११ ॥

अन्यथोभयोरपि धर्मलोप इति भावः । विपक्षे बाधकान्तरमप्याह,— अतुष्टमिति । निकृतिप्रज्ञं निकृतिर्न्यक्कारः साधुकृतधिक्कारस्तदास्पद-प्रज्ञम् । पराभवमजयरूपम् ॥ ८ ॥

इह लङ्कानगरे सन्तः इहलोकपरलोकहितकारिणो न वा सन्ति सत्सु वा तेषु तान्नानुवर्त्तसे तत्समीपं न गच्छसि गतोऽपि वा न पृच्छसि । यथा ते विपरीता बुद्धिः आचारवर्जिता विहितकर्मविमुखी अविहितसम्मुखी च ॥ ६ ॥

सतामुपदेशसत्त्वेऽपि समूलोन्मूलनचिकीर्षुदैववशात्त्वं न प्रत्यैषीत्याह,—वच इति । विचक्षणैर्भाविकार्य्यपर्य्यालोचनचतुरैः । पथ्यं हितोदर्कं वच उक्तमपि मिथ्याप्रणीतात्मा । तद्वचो मिथ्यावस्तु-भूतमसारभूतमित्यश्रद्धया प्रणीतः प्राप्त आत्मा बुद्धिर्येन तादृशः । राक्षसानामभावाय नाशाय न प्रतिपद्यसे न परित्यजसि ॥ १० ॥

ननु मया सज्जनोपदेशाग्रहे कुतो राक्षसनाशप्रसङ्ग इत्यत्रोत्तरं वक्तुं लोकस्थितिमाह,—अकृतेति । अकृतात्मानं सदुपदेशायाहि-बुद्धिम् ॥ ११ ॥

तथैव त्वां समासाद्य लङ्का रत्नौघसङ्कुला।
अपराधात्तवैकस्य न चिराद्विनशिष्यति ॥ १२ ॥
स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः।
अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ॥ १३ ॥
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः।
दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ॥ १४ ॥
शक्या लोभयितुं नाहमैश्वर्य्येण धनेन वा।
अनन्या राघवेणाहं भास्करेण यथा प्रभा ॥ १५ ॥
उपधाय भुजन्तस्य लोकनाथस्य सत्कृतम्।
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥ १६ ॥

तथैवेति। राजापराधतोऽशेषप्रजानाशस्य लोकप्रसिद्धत्वादिति भावः ॥ १२ ॥

किञ्च। सज्जनोपदेशमशृण्वतो नाशं सज्जनानुमोदत इत्याह,—स्वकृतैरिति। स्वकृतैर्दुष्कृतैर्हन्यमानस्यावश्यप्राप्तनाशस्यादीर्घदर्शिनो भाव्यनर्थदर्शनासमर्थस्य विनाशे उपस्थिते भूतानि सर्वप्राणिनो नन्दन्ति ॥ १३ ॥

एवं निराकृतास्त्वया क्लेशिताः सर्वे जनाः एतद्व्यसनं स्वबुद्धिप्राप्तनाशम् ॥ १४ ॥

ऐश्वर्य्यं कुरु इत्यादि यदुक्तं रावणेन प्रलोभनाय तत्प्रत्याख्याति। शक्येति। अनन्याभिन्नत्वाभाववती ॥ १५ ॥

अहमौपयिकी भार्य्या तस्यैव च धरापतेः।
व्रतस्नातस्य विद्येव विप्रस्य विदितात्मनः ॥ १७ ॥
साधु रावण! रामेण मां समानय दुःखिताम्।
वने वासितया सार्द्धं करेण्वेव गजाधिपम् ॥ १८ ॥
मित्रमौपयिकं कर्त्तुं रामः स्थानं परीप्सता।
बन्धञ्चानिच्छता घोरं त्वयासौ पुरुषर्षभः ॥ १९ ॥

प्रलोभनाशक्यत्वमेव स्पष्टयति। उपधायेति। उपधानं कृत्वेति। सह शयित्वेति यावत्। कस्यचिदतत्त्वभूतस्य ॥ १६ ॥

औपयिकी योग्या। व्रतस्नातस्य ब्रह्मचर्य्यव्रतपूर्वकं कृतसमावर्त्तनस्य। यथाशास्त्रं सत्याग्निग्रहणं कृतवतः विदितात्मनः ज्ञातनस्य तत्त्वज्ञात-पुरुषार्थसाधनस्य च तस्यैवाहं योग्या। विप्रस्य विद्येव ब्रह्मविद्येव ब्रह्मविद्या यथा ब्राह्मणस्यैवासाधारणं स्वं न्यायप्राप्तं तद्वत्। सन्न्यासे तस्यैवाधिकारात्। ब्रह्मविद्यायां ब्राह्मणस्यैवाधिकार इति भावः। अन्ये तु विप्रपदं त्रैवर्णिकपरं त्रैवर्णिकस्यैव ब्रह्मविद्यायामधिकारः अतएव धीरस्येति क्वचित्पाठ इत्याहुः ॥ १७ ॥

हे रावण मां रामेण समानय तदेव ते साधु। वने वासितया कामुकया करेण्वा यथा सार्द्धं गजाधिपमिव। उपमानोपमेयवाक्ययोर्वैषम्यन्तु क्रुद्धविरहिण्युक्तत्वान्न दोषावहम्। करेणुं गजाधिपेनेति तु वक्तुमुचितम् ॥ १८ ॥

वृत्तान्तरञ्चापदिशति। मित्रमिति। स्थानं परीप्सता लङ्कां चिर-स्थापयिषता आत्मनो बन्धञ्च घोरं सकलं कुटुम्बपीडाकरमनिच्छता त्वया पुरुषर्षभोऽसौ रामो मित्रं कर्त्तुमौपयिकं युक्तम् ॥ १९ ॥

विदितः सर्वधर्मज्ञः शरणागतवत्सलः।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि॥ २०॥
प्रसादयस्व त्वं चैनं शरणागतवत्सलम्।
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि॥ २१॥
एवं हि ते भवेत् स्वस्ति सम्प्रदाय रघूत्तमे।
अन्यथा त्वं हि कुर्वाणो परां प्राप्स्यसि चापदम्॥ २२॥
वर्जयेत् वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम्।
त्वद्विधं न तु संक्रुद्धो लोकनाथः स राघवः॥ २३॥
रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम्।
शतक्रतुविसृष्टस्य निर्घोषमशनेरिव॥ २४॥

कथमेवमपराद्धस्य मे तेन मैत्री तत्राह,—विदित इति। यतः सर्वधर्मज्ञ इति। शत्रुरपि शरणागतो रक्षणीय इति धर्मज्ञत्वेन शरणागतवत्सलत्वेन च विदितः प्रसिद्धः। अनस्तेन मैत्री भवतु तेन मैत्री प्राप्तकालेत्यर्थः॥ २०॥

अत एनं शरणागतवत्सलं त्वं प्रसादयस्व मां चास्मै निर्यातयितुं दातुमर्हसि॥ २१॥

सम्प्रदायेति मामिति शेषः॥ २२॥

मत्प्रत्यर्पणं विना सर्वथा तव जीवनं नास्तीत्याह,—वर्जयेदिति। त्वद्विधप्राणान्न नाशयेदित्यर्थः। राघवो न तु वर्जयेन्नाशयेदेव॥ २३॥

महास्वनं महान्तं नादम्। नादो हि कश्चिच्छब्दधर्मः प्रतिशब्दरूपः श्रोष्यसि यदि मां न ददासीति भावः॥ २४॥

इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ।
इषवो निपतिष्यन्ति रामलक्ष्मणलक्षिताः ॥ २५ ॥
रक्षांसि निघ्नन्तः पुर्य्यामस्यां न संशयः ।
असम्पातं करिष्यन्ति पतन्तः कङ्कवाससः ॥ २६ ॥
राक्षसेन्द्रमहासर्पान् स रामगरुड़ो महान् ।
उद्धरिष्यति वेगेन वैनतेय इवोरगान् ॥ २७ ॥
अपनेष्यति मां भर्त्ता त्वत्तः शीघ्रमरिन्दमः ।
असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ॥ २८ ॥
जनस्थाने हतस्थाने निहते रक्षसां बले ।
अशक्तेन त्वया रक्षः ! कृतमेतदसाधु वै ॥ २९ ॥
आश्रमं तत्तयोः शून्यं प्रविश्य नरसिंहयोः ।
गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम ! ॥ ३० ॥

रामलक्ष्मणलक्षितास्तन्नामाङ्का इत्यर्थः ॥ २५ ॥

कङ्कवाससो बाणाः असम्पातमनवकाशम् । असम्बाधमिति पाठे राक्षससम्मर्दरहितम् ॥ २६ ॥

राक्षसेन्द्ररूपान् महासर्पान् । उद्धरणांशेऽत्र उपमा वैनतेय इवेति ॥ २७ ॥

न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघव इत्यस्योत्तरमाह,—अपनेष्यतीति ॥ २८ ॥

हतस्थाने हतास्पदे ॥ २९ ॥

न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया।
शक्यं सन्दर्शने स्थातुं शुना शार्दूलयोरिव ॥ ३१ ॥
तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम्।
वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य विग्रहे ॥ ३२ ॥
क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह।
तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥ ३३ ॥
गिरिं कुवेरस्य गतोऽथवालयं
सभां गतो वा वरुणस्य राज्ञः।

नरसिंहयोः शून्यमाश्रमं प्रविश्य यत् कृतं तदसाधुवृत्ति किल्बिषम्। गोचरं गतयोः मायामृगवृत्तान्तं ज्ञातुं गतयोः गोचरं वनप्रदेशं गतयोरिति वार्थः ॥ ३० ॥

यस्माद्रामलक्ष्मणयोः गन्धमुपाघ्राय शार्दूलयोः सन्दर्शने शुनेव समक्षं स्थातुं त्वया न शक्यम् ॥ ३१ ॥

तस्य अधमबलस्याधमकृत्यस्य च ते अपि ताभ्यां विग्रहे कलहे प्रसक्ते सति युगग्रहणं सहायसम्पत्तिरस्थिरा जनस्थानबलसहायसम्पत्तिवत्। तस्मात्तेन युद्धे तव निग्रह एव वृत्रसम्बन्धिन एकस्य बाहोर्द्वाभ्यामिन्द्रबाहुभ्यां युद्धे वृत्रबाहुपराजयवत्। वृत्रद्विबाहुर्बज्रकालमिन्द्रेण सहैकबाहुना युद्धं कृतवान् पराजितश्चेति भागवते प्रसिद्धम् ॥ ३२ ॥

मे नाथः स राम इत्यन्वयः ॥ ३३ ॥

कुवेरस्यालयं कैलासं कैलासवत्प्रभे ऊर्ध्वसकलोप-

असंशयं दाशरथेर्विमोक्ष्यसे
महाद्रुमः कालहतोऽशनेरिव ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकविंशः सर्गः ॥ २१ ॥

सद्यागाम्। कालहतस्त्वमशनेः सम्बन्धात् महाद्रुम इव दाशरथं सम्बन्धाद्विमोच्यसे प्राणानिति शेषः। विमोक्ष्यस इति पाठः पाठ इति कतकः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकविंशः सर्गः ॥ २१ ॥

---

# द्वाविंशः सर्गः ।

सीताया वचनं श्रुत्वा परुषं राक्षसेश्वरः ।
प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥ १ ॥
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥ २ ॥
सन्नियच्छति मे क्रोधं त्वयि कामः समुत्थितः ।
द्रवतो मार्गमासाद्य हयानिव सुसारथिः ॥ ३ ॥
वामः कामो मनुष्याणां यस्मिन् किल निबध्यते ।
जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥ ४ ॥

प्रियदर्शनो सीतां प्रति अनुनयोक्तिं कृत्वा ततो विप्रियमाहेति सम्बन्धः ॥ १ ॥

लोके स्त्रीणां सान्त्वयिता पुमान् यथा यथा सान्त्वयति तथा तथा तत्तत्सान्त्वानुसारेण स स्त्रीणां वश्य इष्टो भवति। त्वयि तु यथा यथाहं प्रियं वक्ताऽभुवं तथा तथा त्वया परिभूत एवास्मीति शेषः ॥ २ ॥

एवञ्च त्वद्विषये न्यायप्राप्तम् उत्पन्नं क्रोधं क्रोधकार्य्यं वधं त्वद्विषये समुत्थितः कामो नियच्छति निरुणद्धि। तत्र दृष्टान्तः द्रवत इति। अमार्गमासाद्य द्रवतो धावतो हयान् सुसारथिरिव ॥ ३ ॥

एतस्मात् कारणान्न त्वां घातयामि वरानने !।
बधार्हामवमानार्हां मिथ्याप्रव्रजने रताम् ॥ ५ ॥
परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम्
तेषु तेषु बधो युक्तस्तव मैथिलि ! दारुणः ॥ ६ ॥
एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः ।
क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥ ७ ॥
द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः ।
ततः शयनमारोह मम त्वं वरवर्णिनि ! ॥ ८ ॥

ननु विपरीतं क्रोध एव किं न कामं बाधते इत्यत्र कामस्यौत्कट्यादित्याह,—नाम इति क्रूर इत्यर्थः। सत्ये कोर्थ्ये सुन्दरे च नाम इति कोषः। कामकार्य्यमेवाह,—यस्मिन्निति। परमक्रोधविषयेऽपि यत्र जने कामो निबध्यते तत्र जने अनुक्रोशो दयास्नेहश्च जायते। तस्मात् क्रोधात् काम उत्कटक्रूरत्ववानित्यर्थः ॥ ४ ॥

एतस्मादिति। उत्कटकामविषयत्वादित्यर्थः। मिथ्याप्रव्रजने निष्प्रयोजनमेव भोगत्यागरूपप्रव्रजनमार्गे रताम्। मिथ्याप्रव्रजिते इति पाठे रामे रतामित्यर्थः॥ ५ ॥ ६ ॥ ७ ॥

अवधिः मासान् द्वादशाभामिनीत्यारण्यकाण्डोक्तस्तन्मध्ये द्वौ मासावशिष्टौ तौ मया रक्षणीयौ। यद्यपि वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गमेति सीता वक्ष्यति तथाप्यल्पान्तरत्वात् मासद्वयरक्षोक्तिरविवक्षा ॥ ८ ॥

द्वाभ्यामूर्द्ध्वन्तु मासाभ्यां भर्त्तारं मामनिच्छतीम् ।
मम त्वां प्रातराशार्थे सूदाः छेत्स्यन्ति खण्डशः ॥ ९ ॥
तां भर्त्स्यमानां संप्रेक्ष्य राक्षसेन्द्रेण जानकीम् ।
देवगन्धर्वकन्यास्ता विषदुर्विकृतेक्षणाः ॥ १० ॥
ओष्ठप्रकारैरपरा नेत्रैर्वक्त्रैस्तथापराः ।
सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥ ११ ॥
ताभिराश्वासिता सीता रावणं राक्षसाधिपम् ।
उवाचात्महितं वाक्यं वृत्तशौण्डीर्य्यगर्वितम् ॥ १२ ॥
नूनं न ते जनः कश्चिदस्मिन्निःश्रेयसि स्थितः ।
निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात् ॥ १३ ॥

प्रातराशः प्रातःकालिकं भोजनम् ॥ ९ ॥

देवगन्धर्वकन्याः सीतावदेव बलादाहृता इत्यर्थः ॥ १० ॥

ओष्ठप्रकारैः वराकोऽयं किं करिष्यति न भेतव्यमित्येवमोष्ठाग्रोत्क्षेपणनेत्रेङ्गिताकृतिमालिन्यनिवर्त्तकैः वक्त्रैः मुखचलनैः सीतामाश्वासयामासुः ॥ ११ ॥

आत्महितं रावणात्मनो हितम् । वृत्तेन सदाचारेण शौण्डीर्य्येण पतिशौर्य्येण च सञ्जातगर्वम् ॥ १२ ॥

अस्मिन्नगरे ते तव निःश्रेयसि अभ्युदयसम्पादने स्थितो जनो नूनं न कश्चिदस्ति । यस्मात्त्वामस्माद्विगर्हितात्कर्मणो न कोऽपि निवारयति ॥ १३ ॥

मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः।
त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन् मनसापि कः॥ १४॥
राक्षसाधम! रामस्य भार्य्यामभिततेजसः।
उक्तवानसि यत् पापं क्व गतस्तस्य मोक्ष्यसे॥ १५॥
यथा दृप्तश्च मातङ्गः शशश्च सहितौ वने।
तथा द्विरदवद्रामस्त्वं नीच! शशवत् स्मृतः॥ १६॥
स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे।
चक्षुषो विषये तस्य न यावदुपगच्छसि॥ १७॥
इमे ते नयने क्रूरे विकृते कृष्णपिङ्गले।
क्षितौ न पतिते कस्मान् मामनार्य्य! निरीक्षतः॥ १८॥
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च।
कथं व्याहरतो मां ते न जिह्वा पाप! शीर्य्यति॥ १९॥

मनसाऽपि कः प्रार्थयेत किं पुनर्वचसेति भावः॥ १४॥

यत्पापं मम शयनमारोहेत्यादिरूपम्। क्व गतो मोक्ष्यसे तत्साध्य-समूलनाशस्य त्वया परिहारोऽशक्य इत्यर्थः॥ १५॥

दृप्तो मातङ्गः शशश्च यदा वने दैवात् सहितौ युक्तौ भवतः तयोश्च शशो यथाऽतिक्षुद्रस्तथा रामेण संयुगे त्वं शशवत् क्षुद्रः रामो गजवदित्यर्थः॥ १६॥

स त्वं रामात् अतिक्षुद्रः क्षिपन् निन्दन् इह तदसन्निधौ यावन्नोप-गच्छसि तावदिह निन्दन् न लज्जसे इत्यन्वयः॥ १७॥ १८॥ १९॥

असन्देशात्तु रामस्य तपसश्चानुपालनात्।
न त्वां कुर्मि दशग्रीव! भस्म भस्मार्हतेजसा ॥ २० ॥
नापहर्त्तुमहं शक्या तस्य रामस्य धीमतः।
विधिस्तव बधार्थाय विहितो नात्र संशयः ॥ २१ ॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च।
अपोह्य रामं कस्माद्धि दारचौर्य्यं त्वया कृतम् ॥ २२ ॥
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः।
विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३ ॥
नीलजीमूतसङ्काशो महाभुजशिरोधरः।
सिंहसत्त्वगतिः श्रीमान् दीप्तजिह्वोग्रलोचनः ॥ २४ ॥

ननु न पतिते न शीर्य्यन्ते तैर्यदि पातिव्रत्यमूला तर्हि तथा निग्रहं कस्मान् न करोषीत्यत्राह,—असन्देशादिति। शापविषये रामाज्ञाभावात्। शापसामर्थ्येऽपि तपोनुपालनाद्धेतोरपि भस्मार्हस्य भस्मजनकत्वशक्तिमता तेजसा स्वीयपातिव्रत्यतेजसा न भस्म कुर्मि करोमि ॥ २० ॥

अहं तस्य रामस्य भार्य्या त्वयाऽपहर्त्तुं न शक्याऽथापि यदयं विधि-रपहरणरूपविधिस्तव बधार्थाय दैवेन विहितोऽत्र न संशयः ॥ २१ ॥

शूरेणेत्याद्युपहासोक्तिः। अपोह्य मारीचमाययाऽपसार्य्य कस्मा-द्दारचौर्य्यं त्वया कृतं तस्मादत्यन्तमशूरत्वमित्युपहासः। हिदिति पाद-पूरणे। २२ ॥ २३ ।

चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः ।
रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥ २५ ॥
श्रोणीसूत्रेण महता मेचकेन सुसंवृतः ।
अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ २६ ॥
ताभ्यां सपरिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः ।
शुशुभेऽचलसङ्काशः शृङ्गाभ्यामिव मन्दरः ॥ २७ ॥
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः ।
रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २८ ॥
स कल्पवृक्षप्रतिमो वसन्त इव मूर्त्तिमान् ।
श्मशानचैत्यप्रतिमो भूषितोऽपि भयङ्करः ॥ २९ ॥
अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः ।

सिंहसत्त्वगतिः सिंहवत् सत्त्वं पराक्रमो गतिश्च यस्य सः । सिंहसंहनन इति पाठान्तरम् ॥ २४ ॥

चलमग्रं यस्य तादृशमकुटवान् ॥ २५ ॥

श्रोणीसूत्रेण कटिसूत्रेण रशनयेत्यर्थः इन्द्रनीलनद्धमुखारक्तमणियुक्तत्वाच्च तस्य मेचकत्वं भुजङ्गो वासुकिः स हि नीलवर्ण इत्याहुः ॥ २६ ॥

ताभ्यां प्रसिद्धपराक्रमाभ्यां भुजद्वयमेव सर्वदा । युद्धादौ स्वेच्छया दशभुजत्वमिति द्विवचनम् । बामरत्वेषु भुजत्वजात्येकवचनमिलाभे ॥ २७ ॥ २८ ॥

उवाच रावणः सीतां भुजङ्ग इव निःश्वसन् ॥ ३० ॥
अनयेनाभिसम्पन्नमर्थहीनमनुव्रते !।
नाशयाम्यहमद्य त्वां सूर्य्यः सन्ध्यामिवौजसा ॥ ३१ ॥
इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः।
सन्दिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ ३२ ॥
एकाक्षीमेककर्णाञ्च कर्णप्रावरणान्तथा।
गोकर्णीं हस्तिकर्णीञ्च लम्बकर्णीमकर्णिकाम् ॥ ३३ ॥
हस्तिपद्यश्वपद्यौ च गोपदीं पादचूलिकाम्।
एकाक्षीमेकपादीञ्च पृथुपादीमपादिकाम् ॥ ३४ ॥
अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम्।
अतिमात्रास्यनेत्राञ्च दीर्घजिह्वानखामपि।
अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम् ॥ ३५ ॥
यथा मद्वशगा सीता क्षिप्रं भवति जानकी।
तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य वा ॥ ३६ ॥

वसन्त इव भूषितोऽपि श्मशानचैत्यप्रतिमः, तदुभयवत् परिहार्य्यदर्शनः। चैत्यं बुधायतनम् अतएव भयङ्करः ॥ २९ ॥ ३० ॥

अनयेन अनीत्या युक्तम्। अर्थहीनं प्रयोजनहीनं अतं रामं वा अनुव्रते इति सम्बोधनम्। ईदृशीं त्वां नाशयामि। सूर्य उदितः सन्ध्यां तत्कालिकमन्धकारमिव ॥ ३१ ॥ ३२ ॥

एकाक्षीति द्विरुपादानं व्यक्तिभेदात् ॥ ३३ ॥ ३४ ॥ ३५ ॥

प्रतिलोमानुलोमैश्च सामदानादिभेदनैः।
आवर्जयत वैदेहीं दण्डस्योद्यमनेन च॥ ३७॥
इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः।
काममन्युपरीतात्मा जानकीं प्रतिगर्जत॥ ३८॥
उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी।
परिष्वज्य दशग्रीवमिदं वचनमब्रवीत्॥ ३९॥
मया क्रीड़ महाराज! सीतया किं तवानया।
विवर्णया कृपणया मानुष्या राक्षसेश्वर!॥ ४०॥
नूनमस्यां महाराज! न देवा भोगसत्तमान्।
विदधत्यमरश्रेष्ठास्तव बाहुबलार्जितान्॥ ४१॥
अकामां कामयानस्य शरीरमुपतप्यते।
इच्छतीं कामयानस्य प्रीतिर्भवति शोभना॥ ४२॥

भो राक्षस्यो यूयं प्रत्येकं तथा कुरुत सर्वा मिलित्वा वा तथा कुरुत। प्रतिलोमानुलोमैः प्रतिकूलानुकूलव्यवहारैः। आवर्जयत आनुकूल्यं सम्पादयत॥ ३६॥ ३७॥

प्रतिगर्जत प्रत्यगर्जत्. उपगम्य समीपमागम्य ततः अतिसन्तर्जनं दृष्ट्वा सीतायां दययेति शेषः। परिष्वज्य परिष्वङ्गेन प्रहारादिप्रवृत्तिं निरुध्य॥ ३८॥ ३९॥ ४०॥

अमरश्रेष्ठाः इन्द्रादयो भोगसत्तमान् विदधति नानुमन्यन्ते। दैवहतेयमदृष्टहीनेति भावः॥ ४१॥ ४२॥

एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली।
प्रहसन् मेघसङ्काशो राक्षसः सन्न्यवर्त्तत ॥ ४३ ॥
प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम्।
ज्वलद्भास्करसङ्काशं प्रविवेश निवेशनम् ॥ ४४ ॥
देवगन्धर्वकन्याश्च नागकन्याश्च तास्ततः।
परिवार्य्य दशग्रीवं प्रविशुस्ता गृहोत्तमम् ॥ ४५ ॥

स मैथिलीं धर्मपरामवस्थितां
प्रवेपमानां परिभर्त्स्य रावणः।
विहाय सीतां मदनेन मोहितः
स्वमेव वेश्म प्रविवेश रावणः ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
द्वाविंशः सर्गः ॥ २२ ॥

समुत्क्षिप्तः अन्यतोऽपसारितः प्रहसन् धान्यमालिन्या उचित-व्यवहारदर्शनेन अवश्यप्राप्तस्त्रीप्रहारापकीर्त्तिपरिहारेण च प्रसन्न इत्यर्थः ॥ ४३ ॥ ४४ ॥

प्रविशुः प्रविविशुः ॥ ४५ ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

## त्रयोविंशः सर्गः ।

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः ।
सन्दिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥ १ ॥
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते ।
राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २ ॥
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्च्छिताः ।
परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३ ॥
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः ।
दशग्रीवस्य भार्य्यात्वं सीते ! न बहु मन्यसे ॥ ४ ॥
ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् ।
आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५ ॥
प्रजापतीनां षण्णान्तु चतुर्थोऽयं प्रजापतिः ।

शत्रून् रावयति हाहाशब्दं कारयति स शत्रुरावणः ॥ १ ॥ २ ॥
ततः परं रावणगमनादनन्तरम् । क्रोक्रोक्रो वा परमिति ॥ ३ ॥
भार्य्यात्वं भार्य्याभावम् । न बहु मन्यसे मोहादिति शेषः ॥ ४ ॥
ततः सर्वसाधारणतद्वाक्यप्रयोगोत्तरमेकजटा विशिष्याब्रवीत् ।
करतलोदरीम् अतुच्छिद्राभिवर्चः ॥ ५ ॥

मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६ ॥
पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः ।
नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७ ॥
तस्य पुत्रो विशालाक्षि ! रावणः शत्रुरावणः ।
तस्य त्वं राक्षसेन्द्रस्य भार्य्या भवितुमर्हसि ॥ ८ ॥
मयोक्तं चारुसर्वाङ्गि ! वाक्यं किं नानुमन्यसे ।
ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ॥ ९ ॥
विवृत्य नयने कोपात् मार्जारसदृशेक्षणा ।
येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जितः ॥ १० ॥
तस्य त्वं राक्षसेन्द्रस्य भार्य्या भवितुमर्हसि ।
वीर्य्योत्सिक्तस्य शूरस्य संग्रामेष्वनिवर्त्तिनः ।
बलिनो वीर्य्ययुक्तस्य भार्य्यात्वं किन्न लिप्ससे ॥ ११ ॥
प्रियां बहुमतां भार्य्यां त्यक्त्वा राजा महाबलः ।
सर्व्वासाञ्च महाभागां त्वामुपेष्यति रावणः ॥ १२ ॥

मरीचिरत्र्यङ्गिरसा पुलस्त्यः, पुलहः क्रतुरित्यनुक्रान्तषट्प्रजापतीनां चतुर्थः पुलस्त्यः ॥ ६ ॥ ७ ॥

तस्य पुत्र इत्यनेन कुलीनत्वं सूचितम् ॥ ८ ॥

किं किमर्थं ततः कुलनिरूपणानन्तरम् ॥ ९ ॥

येनेत्यनेन पराक्रमातिशयसूचनम् ॥ १० ॥

न लिप्ससे नेच्छसीत्यर्थः ॥ ११ ॥

समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम्।
अन्तःपुरं तदुत्सृज्य त्वामुपैष्यति रावणः॥ १३॥
अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत्।
असकृद्भीमवीर्य्येण नागा गन्धर्वदानवाः।
निर्जिताः समरे येन स ते पार्श्वमुपागतः॥ १४॥
तस्य सर्वसमृद्धस्य रावणस्य महात्मनः।
किमर्थं राक्षसेन्द्रस्य भार्य्यात्वं नेच्छसेऽधमे!॥ १५॥
ततस्तां दुर्मुखी नाम राक्षसी वाक्यमब्रवीत्।
यस्य सूर्य्यो न तपति भीतो यस्य स मारुतः।
न वाति स्मायतापाङ्गि! किं त्वं तस्य न तिष्ठसे॥ १६॥
पुष्पवृष्टिञ्च तरवो मुमुचुर्यस्य वै भयात्।
शैलाः सुस्रुवुः पानीयं जलदाश्च यदेच्छति॥ १७॥
तस्य नैर्ऋतराजस्य राजराजस्य भामिनि!।
किं त्वं न कुरुषे बुद्धिं भार्य्यार्थे रावणस्य हि॥ १८॥

सर्वासां मध्ये अङ्कगतां महाभागाम् अतिभाग्यवतीं मन्दोदरीमपि त्यक्त्वा त्वामुपैष्यति॥ १२॥ १३॥ १४॥ १५॥

यस्य भीतः सूर्य्यो न तपतीत्यर्थः। न तिष्ठसे वशे इति शेषः॥ १६॥

यदेच्छति तदा सुस्रुवुरित्यर्थः॥ १७॥

भार्य्यार्थे भार्य्यात्वनिमित्तम्॥ १८॥

साधु ते तत्त्वतो देवि ! कथितं साधु भामिनि ! ।
गृहाण सुस्मिते ! वाक्यमन्यथा न भविष्यसि ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
त्रयोविंशः सर्गः ॥ २३ ॥

साधुकथितं साधु गृहाण न भविष्यसि मारयाम इत्यर्थः ॥ १९

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

## चतुर्विंशः सर्गः ।

ततः सीतां समस्तास्ता राक्षस्यो विकृताननाः ।
परुषं परुषानर्हामूचुस्तद्वाक्यमप्रियम् ॥ १ ॥
किन्त्वमन्तःपुरे सीते सर्वभूतमनोरमे ।
महार्हशयनोपेते न वा समनुमन्यसे ॥ २ ॥
मानुषि ! मानुषस्यैव भार्य्यात्वं बहुमन्यसे ।
प्रत्याहर मनो रामान्नैवं जातु भविष्यति ॥ ३ ॥
त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् ।
भर्त्तारमुपसङ्गम्य विहरस्व यथासुखम् ॥ ४ ॥
मानुषी मानुषं तन्तु राममिच्छसि शोभने ! ।
राज्याद्भ्रष्टमसिद्धार्थं विक्लवं तमनिन्दिते ! ॥ ५ ॥
राक्षसीनां वचः श्रुत्वा सीता पद्मनिभेक्षणा ।

तत इति ॥ १ ॥ २ ॥

प्रत्याहर निवर्त्तय । एवं त्वदभीष्टं रामसङ्गमरूपं वस्तु जातु कदाचिदप्यतःपरं न भविष्यति । अत्र रामागमनस्य तव वा तत्र गमनस्य प्रसक्त्यभावादिति भावः । यद्वातःपरं जातु कदाचिदप्येवं भावस्तत् भवती न भविष्यति मारयाम इत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥

नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६ ॥
यदिदं लोकविद्विष्टमुदाहरत सङ्गताः।
नैतन्मनसि वाक्यं मे किल्बिषं प्रतितिष्ठति ॥ ७ ॥
न मानुषी राक्षसस्य भार्य्या भवितुमर्हति।
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ८ ॥
दीनो वा राज्यहीनो वा यो मे भर्त्ता स मे गुरुः।
तं नित्यमनुरक्तास्मि यथा सूर्य्यं सुवर्चला ॥ ९ ॥
यथा शची महाभागा शक्रं समुपतिष्ठति।
अरुन्धती वसिष्ठञ्च रोहिणी शशिनं यथा ॥ १० ॥
लोपामुद्रा यथागस्त्यं सुकन्या च्यवनं यथा।
सावित्री सत्यवन्तञ्च कपिलं श्रीमती यथा ॥ ११ ॥
सौदासं मदयन्तीव केशिनी सगरं यथा।

नेत्राभ्यामुपलक्षितेति शेषः। इदं वचनं युष्मद्वचोऽनङ्गीकारं मा गमस्वेच्छ्रीष्टं तदेव क्रियतामित्यर्थकं वक्ष्यमाणम् ॥ ६ ॥

लोकविद्विष्टं लोकविद्विष्टपरपुरुषसङ्गार्थकम्। सङ्गताः सम्मताः किल्बिषं किल्बिषजनकार्थकम् ॥ ७ ॥ ८ ॥

गुरुमुपास्ते देवता सुवर्चला सूर्य्यपत्नी सूर्य्याभिमुखपुष्पवती काचि-दोषधिरित्यन्ये ॥ ९ ॥

अतिदुःखसमयेऽपि दृढव्रतत्वद्योतनायानेकसाध्वीनामुपन्यासो दृष्टान्तविधये ज्ञेयः ॥ १० ॥ ११ ॥

नैषधं दमयन्तीव भैमी पतिमनुव्रता ।
तथाहमिक्ष्वाकुवरं रामं पतिमनुव्रता ॥ १२ ॥
सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्च्छिताः ।
भर्त्सयन्ति स्म परुषैर्वाक्यै रावणचोदिताः ॥ १३ ॥
अवलीनः स निर्वाक्यो हनूमान् शिंशपाद्रुमे ।
सीतां सन्तर्जयन्तीस्ता राक्षसीरशृणोत् कपिः ॥ १४ ॥
तामभिक्रम्य संरब्धा वेपमानां समन्ततः ।
भृशं संलिलिहुर्दीप्तान् प्रलम्बान् दशनच्छदान् ॥ १५ ॥
ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वधान् ।
नेयमर्हति भर्त्तारं रावणं राक्षसाधिपम् ॥ १६ ॥
सा भर्त्स्यमाना भीमाभी राक्षसीभिर्वराङ्गना ।
सा बाष्पमपमार्जन्ती शिंशपां तामुपागमत् ॥ १७ ॥

भैमी दमयन्ती नैषधं पतिं यथानुव्रता ॥ १२ ॥ १३ ॥

अवलीनश्छन्नः निर्वाक्यो मौनी शिंशपाद्रुमे स्थित इति शेषः । सीतां तर्जयन्तीः राक्षसीस्तद्वाक्यान्यशृणोत् ॥ १४ ॥

वेपमानां तामभिक्रम्य तत्समीपमागत्य संरब्धाः क्रुद्धास्ता राक्षस्यः दशनच्छदान् लिलिहुः लेहनं कुर्वन्ति स्म ॥ १५ ॥

परश्वधान् गृहीत्वाचुश्च नेयं रावणं भर्त्तारमर्हसि अपितस्माकं भक्षणमेवार्हतीति भावः ॥ १६ ॥

भर्त्स्यमाना एवम्प्रकारेण पीड्यमानाभूदिति शेषः । तां शिंशपां हनुमदधिष्ठितशिंशपाम् अत्यन्तं तन्मूलसमीपमित्यर्थः ॥ १७ ॥

ततस्तां शिंशपां सीता राक्षसीभिः समावृता ।
अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ॥ १८ ॥
तां कृशां दीनवदनां मलिनाम्बरवासिनीम् ।
भर्त्सयाञ्चक्रिरे भीमा राक्षस्यस्ताः समन्ततः ॥ १९ ॥
ततस्तु विनता नाम राक्षसी भीमदर्शना ।
अब्रवीत् कुपिताकारा कराला निर्णतोदरी ॥ २० ॥
सीते ! पर्याप्तमेतावद्भर्त्तुः स्नेहः प्रदर्शितः ।
सर्वत्रातिकृतं भद्रे ! व्यसनायोपकल्पते ॥ २१ ॥
परितुष्टास्मि भद्रं ते मानुषस्ते कृतो विधिः ।
ममापि तु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि ! ॥ २२ ॥
रावणं भज भर्त्तारं भर्त्तारं सर्वरक्षसाम् ।
विक्रान्तमापतन्तञ्च सुरेशमिव वासवम् ॥ २३ ॥
दक्षिणं त्यागशीलञ्च सर्वस्य प्रियवादिनम् ।

ततस्तन्मूलगमनानन्तरम् ॥ १८ ॥ १९ ॥

निर्णतोदरी अतिनिम्नोदरी ॥ २० ॥

अतिकृतम् अतिमात्राचरणं श्रेयोऽपि सर्वत्र ज्यायसीति लोकोक्तेरिति भावः । व्यसनं दुःखम् ॥ २१ ॥

मानुषो मनुष्यजात्युचितो विधिरनुष्ठानं ते त्वया कृतम् । एतावदेवालमित्यर्थः ॥ २२ ॥

सुरेशं वासवमिव ॥ २३ ॥

मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय ॥ २४ ॥
दिव्याङ्गरागा वैदेही दिव्याभरणभूषिता।
अद्य प्रभृति लोकानां सर्वेषामीश्वरी भव ॥ २५ ॥
अग्नेः स्वाहा यथा देवी शचीवेन्द्रस्य शोभने !।
किं ते रामेण वैदेहि ! कृपणेन गतायुषा ॥ २६ ॥
एतदुक्तञ्च मे वाक्यं यदि त्वं न करिष्यसि।
अस्मिन् मुहूर्त्ते सर्वास्त्वां भक्षयिष्यामहे वयम् ॥ २७ ॥
अन्या तु विकटा नाम लम्बमानपयोधरा।
अब्रवीत् कुपिता सीतां मुष्टिमुद्यम्य तर्जती ॥ २८ ॥
बहून्यप्रतिरूपाणि वचनानि सुदुर्मते !।
अनुक्रोशान्मृदुत्वाच्च सोढ़ानि तव मैथिलि ! ॥ २९ ॥
न च नः कुरुषे वाक्यं हितं कालपुरस्कृतम्।
आनीतासि समुद्रस्य पारमन्यैर्दुरासदम् ॥ ३० ॥
रावणान्तःपुरे घोरे प्रविष्टा चासि मैथिलि !।
रावणस्य गृहे रुद्धा अस्माभिस्त्वभिरक्षिता ॥ ३१ ॥

कृपणां दीनम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥
तर्जती तर्जयन्ती ॥ २८ ॥
अनुक्रोशो दया। मृदुत्वमल्पप्रमादत्वम् ॥ २९ ॥
कालपुरस्कृतं कालोचितं नो वाक्यं न च कुरुषे न तत्ते हितमिति शेषः। तदेवोपपादयति। आनीतासि इति ॥ ३० ॥

न त्वां शक्तः परित्रातुमपि साक्षात् पुरन्दरः।
कुरुष्व हितवादिन्या वचनं मम मैथिलि ! ॥ ३२ ॥
अलमश्रुनिपातेन त्यज शोकमनर्थकम्।
भज प्रीतिं प्रहर्षञ्च त्यजन्ती नित्यदैन्यताम् ॥ ३३ ॥
सीते ! राक्षसराजेन परिक्रीड़ यथासुखम्।
जानीमहे यथा भीरु ! स्त्रीणां यौवनमध्रुवम् ॥ ३४ ॥
यावन्न ते व्यतिक्रामेत्तावत् सुखमवाप्नुहि।
उद्यानानि च रम्याणि पर्वतोपवनानि च ॥ ३५ ॥
सह राक्षसराजेन चर त्वं मदिरेक्षणे !।
स्त्रीसहस्राणि ते देवि ! वशे स्थास्यन्ति सुन्दरि ! ॥ ३६ ॥
रावणं भज भर्त्तारं भर्त्तारं सर्वरक्षसाम्।
उत्पाट्य वा ते हृदयं भक्षयिष्यामि मैथिलि !।
यदि मे व्याहृतं वाक्यं न यथावत् करिष्यसि ॥ ३७ ॥
ततश्चण्डोदरी नाम राक्षसी क्रूरदर्शना।

गृहे रुद्धा चासि अस्माभिरभिरक्षिता रक्षितनिरोधा ॥ ३० ॥ ३१ ॥

प्रीतिं स्नेहम्। रावणं प्रहर्षमानन्दम्। नित्यदैन्यतां निरन्तरदीनत्वम्। स्वार्थे ष्यञ् ॥ ३३ ॥ ३४ ॥

व्यतिक्रामेत। यौवनमिति शेषः। उद्यानानि चरेत्युत्तरस्थेनान्वयः तेषु क्रीड़ेत्यर्थः ॥ ३५ ॥ ३६ ॥

उत्पाटनं स्थानादपकर्षणम् ॥ ३७ ॥

भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् ॥ ३८ ॥
इमां हरिणशावाक्षीं त्रासोत्कम्पपयोधराम् ।
रावणेन हृतां दृष्ट्वा दौर्हृदो मे महानयम् ॥ ३९ ॥
यकृत्प्लीहं महत्क्रोडं हृदयञ्च सबन्धनम् ।
गात्राण्यपि तथा शीर्षं खादेयमिति मे मतिः ॥ ४० ॥
ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत् ।
कण्ठमस्या नृशंसायाः पीडयामः किमास्यते ॥
निवेद्यतां ततो राज्ञो मानुषी सा मृतेति च ।
नात्र कश्चिच्च सन्देहः खादतेति स वक्ष्यति ॥ ४१ ॥
ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत् ।
विशस्येमां ततः सर्वान् समान् कुरुत पिण्डकान् ॥
विभजाम ततः सर्वा विवादो मे न रोचते ।
पेयमानीयतां क्षिप्रं माल्यञ्च विविधं बहु ॥ ४२ ॥

गर्भिण्याः गर्भकृतइच्छाविशेषो दौर्हृदम् । यकृत् दक्षिणभागस्थः कालखण्डाख्यो मांसविशेषः । स्नायुः स्त्रियां कालखण्डयकृती च समे उभे इति कोषः । प्लीहं हृदयवामभागस्थो गुल्माख्यो मांसविशेषः । यद्यपि तद्वाचकः प्लीहा इत्याकारान्तस्तथापि दन्त्यत्वमार्षम् । महत्क्रोडं भुजान्तरम् । क्वचित्पीडमिति पाठे उत्पीडं हृदयोपरिस्थित-मांसबन्धनं हृदयं नाडीबन्धनसहितं मुकुलाकारं हृत्पुण्डरीकाख्यम् ॥ ३८ ॥ ३९ ॥ ४० ॥

ततः शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् ।
अजामुख्या यदुक्तं वै तदेव मम रोचते ॥ ४३ ॥
सुरा चानीयतां क्षिप्रं सर्व्वशोकविनाशिनी ।
मानुषं मांसमासाद्य नृत्यामोऽथ निकुम्भिलाम् ॥ ४४ ॥
एवं निर्भर्त्स्यमाना सा सीता सुरसुतोपमा ।
राक्षसीभिर्विरूपाभिर्धैर्य्यमुत्सृज्य रोदिति ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चतुर्विंशः सर्गः ॥ २४ ॥

प्रथमावाक्य' विशस्येमामिति मध्ये श्लोकद्वयं प्रक्षिप्तमिति कतकः ।
पिण्डकान् मांसखण्डान् विवादो अनया सहेति शेषः ॥ ४१ ॥ ४२ ॥
शूर्पणखा इयमन्या अजामुखसदृशमुखतया प्रथसयेत्यर्थः ॥ ४३ ॥
निकुम्भिला नाम लङ्कायाः पश्चिमभागवर्त्तिनी भद्रकाली तां नृत्यामः तत्समीपं गत्वा नृत्यामः । सुरसुतोपमा देवकन्योपमा रोदिति अवदत् ॥ ४४ ॥ ४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ।



अथ तासां वदन्तीनां परुषं दारुणं बहु ।
राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ १ ॥
एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी ।
उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ २ ॥
न मानुषी राक्षसस्य भार्य्या भवितुमर्हति ।
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ३ ॥
सा राक्षसीमध्यगता सीता सुरसुतोपमा ।
न शर्म लेभे शोकार्त्ता रावणेनेव भर्त्सिता ॥ ४ ॥
वेपते स्माधिकं सीता विशन्तीवाङ्गमात्मनः ।
वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ५ ॥

परुषं वदन्तीनां वचः श्रुत्वेति शेषः ॥ १ ॥

पूर्वसर्गोक्तरीत्योक्ता मनस्विनी पातिव्रत्ये दृढमनाः ॥ २ ॥

कामं खादतेति । अयं सर्वः सीताप्रलापो गृहीतमनुष्यशरीरतया नटवदनुकरणरूप इति बोध्यम् ॥ ३ ॥

शर्म न लेभे इव शोकार्त्तेव ॥ ४ ॥

आत्मनोऽङ्कं विशन्तीव भीत्या अतिसङ्कुचितशरीरा कमठवदभूदित्यर्थः । कोकैर्वृकैः ॥ ५ ॥

सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम्।
चिन्तयामास शोकेन भर्त्तारं भग्नमानसा ॥ ६ ॥
सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः।
चिन्तयन्ती न शोकस्य तदाऽन्तमधिगच्छति ॥ ७ ॥
सा वेपमाना पतिता प्रवाते कदली यथा।
राक्षसीनां भयत्रस्ता विवर्णवदनाऽभवत् ॥ ८ ॥
तस्याः सा दीर्घबहुला वेपन्त्याः सीतया तदा।
ददृशे कम्पिता वेणी व्यालीव परिसर्पती ॥ ९ ॥
सा निःश्वसन्ती शोकार्त्ता कोपोपहतचेतना।
आर्त्ता व्यसृजदश्रूणि मैथिली विललाप च ॥ १० ॥
हा! रामेति च दुःखार्त्ता हा! पुनर्लक्ष्मणेति च।
हा! श्वश्रु मम कौशल्ये हा! सुमित्रेति भामिनी ॥ ११ ॥
लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः।
अकाले दुर्लभो मृत्युः स्त्रिया वा पुरुषस्य वा ॥ १२ ॥

अशोकस्य अशोकवनिकासम्बन्धिनः शिंशपावृक्षस्य तत्समीपवर्त्तिनोऽशोकस्यैव वा ॥ ६ ॥ ७ ॥

राक्षसीनां राक्षसीभ्यः ॥ ८ ॥

सीतयेति षष्ठ्यर्थे तृतीया। परिसर्पती परितः प्रसर्पन्ती ॥ ९ ॥ १० ॥

हा सुमित्रेत्यत्राकारलोप आर्षः ॥ ११ ॥

अकाले दैवाविहितसमयाकाले ॥ १२ ॥

यत्राहमाभिः क्रूराभी राक्षसीभिरिहार्दिता।
जीवामि हीना रामेण मुहूर्त्तमपि दुःखिता॥ १३॥
एषाल्पपुण्या कृपणा विनशिष्याम्यनाथवत्।
समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता॥ १४॥
भर्त्तारं तमपश्यन्ती राक्षसीवशमागता।
सीदामि खलु शोकेन कूलं तोयहतं यथा॥ १५॥
तं पद्मदलपत्राक्षं सिंहविक्रान्तगामिनम्।
धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम्॥ १६॥
सर्वथा तेन हीनाया रामेण विदितात्मना।
तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवनम्॥ १७॥
कीदृशन्तु महापापं मया देहान्तरे कृतम्।
येनेदं प्राप्यते घोरं महादुःखं सुदारुणम्॥ १८॥
जीवितं त्यक्तुमिच्छामि शोकेन महतावृता।
राक्षसीभिश्च रक्ष्यन्त्या रामो नामाद्यते मया॥ १९॥

यत्राहमिति। यस्मादहमित्यर्थः॥ १३॥ १४॥
तोयहतं नदीपूरहतम्॥ १५॥
पद्मदलं विकसितं पद्मं तस्य पत्रमिवाक्षिणी यस्य तम्॥ १६॥
तीक्ष्णं विषं वत्सनाभादिकमास्वाद्य स्थितस्येव मे मम जीवनं दुर्लभम्॥ १७॥ १८॥

धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
पञ्चविंशः सर्गः ॥ २५ ॥

जीवितं त्यक्तुमिच्छामि तदपि न शक्यमिति शेषः। रामोऽपि नासाद्यते च ॥ १९ ॥

एवं परवशतया दुःखानुभवे हेतुमाह,—धिगिति। मनुष्यस्य विषादबन्धनादिना देहत्यागे परमार्थप्राप्तः परमदुःखस्यापि मोढव्यत्वादप्रयोजको मनुष्यदेह इत्यर्थः। राक्षस्यादिपरतन्त्रताञ्च मनुष्यत्वप्रयुक्तां धिक् यत् यत्र मनुष्यदेहे आत्मच्छन्देनात्मेच्छया जीवितं परित्यक्तुं न शक्यम् ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

## षड्विंशः सर्गः ।

प्रसक्ताश्रुमुखीत्येवं ब्रुवती जनकात्मजा ।
अधोगतमुखी बाला विलप्तुमुपचक्रमे ॥ १ ॥
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती ।
उपावृत्ता किशोरीव विचेष्टन्ती महीतले ॥ २ ॥
राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा ।
रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ ३ ॥
राक्षसीवशमापन्ना भर्त्स्यमाना च दारुणम् ।
चिन्तयन्ती सुदुःखार्त्ता नाहं जीवितुमुत्सहे ॥ ४ ॥

प्रसक्तानि प्रवृत्तान्यश्रूणि मुखं यस्याः सा । एवं ब्रुवती । वक्ष्यमाणरीत्या ब्रुवती । विलप्तुम् । विलपितुम् ॥ १ ॥

उन्मत्ता भूताविष्टा प्रमत्ता पैत्याद्रेकादिना भ्रान्तचित्तेव दिङ्मोहादिना मूर्च्छितचित्तेव शोचती शोचन्ती । उपावृत्ता श्रमापनयनाय परिवर्त्तनशीला किशोरीव वडवेव ॥ २ ॥

कामरूपिणा रक्षसा मारीचेन प्रमत्तस्य असन्निधानं प्राप्तस्य राघवस्य सम्बन्धिनी अहं रावणेन प्रमथ्य प्रपीड्य क्रोशन्ती बलादानीतास्मि ॥ ३ ॥

न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः ।
वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥ ५ ॥
अश्ममारमिदं नूनमथवाप्यजरामरम् ।
हृदयं मम येनेदं न दुःखेन विशीर्य्यते ॥ ६ ॥
धिङ्मामनार्य्यामसतीं याहं तेन विनाकृता ।
मुहूर्त्तमपि जीवामि जीवितं पापजीविका ॥ ७ ॥
चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किं पुनरहं कामयेयं निशाचरम् ॥ ८ ॥
प्रत्याख्यानं न जानाति नात्मानं नात्मनः कुलम् ।
यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥ ९ ॥
छिन्ना भिन्ना प्रभिन्ना वा दीप्ता वाग्नौ प्रदीपिता ।

किञ्च राक्षसीवशमापन्ना भर्त्स्यमाना राक्षसीभिः चिन्तयन्ती रामम् ॥ ४ ॥

अर्थैः धनैः ॥ ५ ॥ ६ ॥

असतीम् असतीवत्परगृहस्थां जीवामि जीवितं रक्षामीत्यर्थः । पाकं पचतीतिवत्प्रयोगः ॥ ७ ॥

एतदुत्तरं चरणेनेति मध्ये द्वौ श्लोकौ प्रक्षिप्तौ सव्येन वामेन ॥ ८ ॥

प्रत्याख्यानं मया क्रियमाणं निराकरणं न जानाति काममोहादिति शेषः । नृशंसस्वभावेन क्रूरस्वभावेन मां प्रार्थयितुं राक्षसीद्वारा स्वानुकूलां कर्तुम् ॥ ९ ॥

रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥ १० ॥
ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः ।
सद्वृत्तो निरनुक्रोशः शङ्के मद्भाग्यसङ्क्षयात् ॥ ११ ॥
राक्षसानां जनस्थाने सहस्राणि चतुर्दश ।
एकेनैव निरस्तानि स मां किं नाभिपद्यते ॥ १२ ॥
निरुद्धा रावणेनाहमल्पवीर्य्येण रक्षसा ।
समर्थः खलु मे भर्त्ता रावणं हन्तुमाहवे ॥
विराधो दण्डकारण्ये येन राक्षसपुङ्गवः ।
रणे रामेण निहतः स मां नाभ्यवपद्यते ॥
कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा ।
न तु राघवबाणानां गतिरोधो भविष्यति ॥ १३ ॥

छिन्ना रज्जुवत् । भिन्ना भित्तिवत् । प्रभिन्ना घटवत् । दीप्ता अग्नौ दीप्तशूल्यमांसवत् । प्रदीपिता प्रदीप्ता गृहादिवत् । वश्चिरं प्रलापेन किं रावणं नोपतिष्ठेयमित्येव निश्चयसत्त्वात् ॥ १० ॥

अथ स्वापत्स्वर्थ्ये कारणानि सम्भावयति । ख्यात इति प्रसिद्धः प्रशस्तगुणः इदृशोऽपि राघवो मद्भाग्यसङ्क्षयादेव मयि निरनुक्रोशो दयाहीनः सम्पन्न इति शेषः इति शङ्के ॥ ११ ॥

न च तस्य मद्विमोक्षणासामर्थ्यमित्याह,—राक्षसानामिति । नाभिपद्यते न प्राप्नोति ॥ १२ ॥

एतदुत्तरं कामं मध्ये इति मध्ये श्लोको प्रक्षिप्ताविति कतकः । काममन्येषां दुष्प्रधर्षणा भवतु न तु रामबाणानां गतिरोधो भवि-

किं नु तत्कारणं येन रामो दृढपराक्रमः।
रक्षसापहृतां भार्य्यामिष्टां यो नाभिपद्यते ॥ १४ ॥
इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः।
जानन्नपि स तेजस्वी धर्षणां मर्षयिष्यति ॥ १५ ॥
हृतेति मां योऽधिगत्य राघवाय निवेदयेत्।
गृध्रराजोऽपि स रणे रावणेन निपातितः ॥ ॥ १६ ॥
कृतं कर्म महत्तेन मां तदाभ्यवपद्यता।
तिष्ठता रावणवधे वृद्धेनापि जटायुषा ॥ १७ ॥
यदि मामिह जानीयाद्वर्त्तमानां हि राघवः।
अद्य बाणैरभिक्रुद्धः कुर्य्याल्लोकमराक्षसम् ॥ १८ ॥
निर्दहेच्च पुरीं लङ्कां निर्दहेच्च महोदधिम्।

ष्यति। आब्रह्मलोकं रामबाणगत्यप्रतिरोधस्य भार्गवादिविषये प्रसिद्धतरत्वादिति भावः। एतेनातिदुर्गस्थानस्थितत्वान्न मोक्षणमित्यपास्तम् ॥ १३ ॥ १४ ॥

तस्मादत्र मत्स्थितिस्थानमेव मद्विमोक्षणाप्रवृत्त्यभावे कारणमित्याह,—इहस्थामिति। मर्षयिष्यतीत्यत्र काकुः जानन् चेद्भवेत्तदा मर्षयिष्यति अपितु न सहिष्यत्येवेत्यर्थः ॥ १५ ॥

सम्भावितं ज्ञानकारणञ्च विहतमित्याह,—हृतेति। हृतेत्यधिगत्य ज्ञात्वा यो मां राघवाय निवेदयेत् सोऽपीत्यन्वयः ॥ १६ ॥

अभ्यवपद्यता अनुग्रह्णानेन रावणवधे तिष्ठता रावणवधार्थं यतता। रावणद्वन्द्वे इति पाठे रावणेन सह द्वन्द्वयुद्धे इत्यर्थः ॥ १७ ॥

रावणस्य च नीचस्य कीर्त्तिं नाम च नाशयेत् ॥ १८ ॥

ततो निहतनाथानां राक्षसीनां गृहे गृहे ।
यथाहमेवं रुदती तथा भूयो न संशयः ॥ २० ॥

अन्विष्य रक्षसां लङ्कां कुर्य्याद्रामः सलक्ष्मणः ।
न हि ताभ्यां रिपुर्दृष्टो मुहूर्त्तमपि जीवति ॥ २१ ॥

चिताधूमाकुलपथा गृध्रमण्डलमण्डिता ।
अचिरेणैव कालेन श्मशानसदृशी भवेत् ॥ २२ ॥

अचिरेणैव कालेन प्राप्स्याम्येनं मनोरथम् ।
दुष्प्रस्थानोऽयमाभाति सर्वेषां वो विपर्य्ययः ॥ २३ ॥

यादृशानि तु दृश्यन्ते लङ्कायामशुभानि तु ।

मामिति । इहस्थां माम् । १८ ॥ १९ ॥

यथाहमिदानीमेवं रुदती वर्त्ते भूयो मत्तोऽधिकं मृतभर्तृकात्वाश्चाद्यस्या वदन्त्यो भविष्यन्तीत्यत्र न संशय इत्यर्थः ॥ २० ॥

ननु ज्ञाने खल्विदं सम्भाव्येत ज्ञानमेव तु दुर्लभं तत्राह,—अन्विष्येति । अचिन्त्यसामर्थ्यत्वाद्देवानुग्रहाच्च लङ्कामप्यन्विष्य मां ज्ञात्वा रक्षसां कुर्य्यात् विनाशमिति शेषः । विनाशस्यैव्यत्वमाह,—नहीति ॥ २१ ॥

निश्चित एवायमर्थ इत्याह,—चितेति । भवेल्लङ्केति शेषः ॥ २२ ॥

रक्षोऽनर्थवन्ममार्थोऽपि निश्चित एवेत्याह,—अचिरेणेति । युष्माकमनर्थोऽपि निश्चित इति च राक्षसीः प्रत्याह,—दुष्प्रस्थान इति । दुर्निमित्तप्रवृत्तिरयं विपर्य्ययः एतद्विपरीतज्ञानमिति भाति ॥ २३ ॥

अचिरेणैव कालेन भविष्यति हतप्रभा ॥ २४ ॥
नूनं लङ्का हते पापे रावणे राक्षसाधिपे।
शोषमेष्यति दुर्द्धर्षा प्रमदा विधवा यथा ॥ २५ ॥
पुण्योत्सवसमृद्धा च नष्टभर्त्त्री सराक्षसा।
भविष्यति पुरी लङ्का नष्टभर्त्त्री यथाङ्गना ॥ २६ ॥
नूनं राक्षसकन्यानां रुदतीनां गृहे गृहे।
श्रोष्यामि न चिरादेव दुःखार्त्तानामिह ध्वनिम् ॥ २७ ॥
सान्धकारा हतद्योता हतराक्षसपुङ्गवा।
भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥ २८ ॥
यदि नाम स शूरो मां रामो रक्तान्तलोचनः।
जानीयाद्वर्त्तमानां यां राक्षसस्य निवेशने ॥ २९ ॥
अनेन तु नृशंसेन रावणेनाधमेन मे।

तामेवाह,—याहशानीति। याहशानि दृश्यन्ते तैरेव हतप्रभा भविष्यतीति ज्ञायत इत्यर्थः ॥ २४ ॥

शोषम् ऐश्वर्य्यादेरिति शेषः ॥ २५ ॥

पुण्योत्सवसमृद्धा च अपीति शेषः ॥ २६ ॥

ध्वनिं रोदनशब्दं दुःखार्त्तानामिवेति पाठः ॥ २७ ॥

सान्धकारा अलक्ष्मीसहिता ॥ २८ ॥

यदि राक्षसस्य निवेशने वर्त्तमानां यां मां रामो जानीयात्तदा लङ्कापुरी रामसायकैर्निर्दग्धा भविष्यतीत्यन्वयः ॥ २९ ॥

समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥ ३० ॥
स च मे विहितो मृत्युरस्मिन् दुष्टेन वर्त्तते।
अकार्य्यं ये न जानन्ति नैर्ऋताः पापकारिणः ॥ ३१ ॥
अधर्मात्तु महोत्पातो भविष्यति हि साम्प्रतम्।
नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः ॥ ३२ ॥
ध्रुवं मां प्रातराशार्थे राक्षसः कल्पयिष्यति।
साहं कथं करिष्यामि तं विना प्रियदर्शनम् ॥ ३३ ॥
रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता।

ननु लङ्कानाशेऽपि मम जीवनं कथं स्यादिति चिन्तयति। अनेनेति। समयो द्वादशमासरूपः तस्य कालः किञ्चिदधिकमासद्वयावशिष्टत्वादत्यासन्नकाल इत्यर्थः ॥ ३० ॥

अस्मिन् काले दुष्टेन रावणेन स कालो मे मृत्युर्विहितो वर्त्तत इत्यर्थः। ननु ततःपरमपि स्त्रीत्वात्त्वां न हिंस्युस्तत्राह,—अकार्य्यमिति। ये राक्षसा अकार्य्यम् इदं कर्त्तव्यमिदमकर्त्तव्यमिति न जानन्ति। ते नैर्ऋताः पापकारिणः स्युः ॥ ३१ ॥

अपिच साम्प्रतं सम्पादितात् परदाराहरणलक्षणात्। अधर्मात्तु अधर्मादेव योऽयं महोत्पातो वर्त्तते तेन एते सर्वथा न भविष्यन्ति। नञोऽत्रानुकर्षं इति कतकः। यदेवमतो नैते इति यतो न विजानन्ति। न गणयन्ति ॥ ३२ ॥

राक्षसत्वस्मादयं रावणोऽपि मां ध्रुवं प्रातराशार्थं कल्पयिष्यति। साहं कथं करिष्यामि प्राणविश्वसनकाला तत्काल इति शेषः ॥ ३३ ॥

क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥ ३४ ॥
नाजानाज्जीवतीं रामः स मां भरतपूर्वजः ।
जानन्तौ तु न कुर्य्यातां नोर्व्यां हि परिमार्गणम् ॥ ३५ ॥
नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः ।
देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥ ३६ ॥
धन्या देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये वीरं रामं राजीवलोचनम् ॥ ३७ ॥
अथवा न हि तस्यार्थो धर्मकामस्य धीमतः ।
मया रामस्य राजर्षेर्भार्य्यया परमात्मनः ॥ ३८ ॥

उक्तमेवाह,—राममिति । कथं करिष्यामीति शेषः ॥ ३४ ॥

तदेवं वीरतरस्य रामस्य स्वानन्वेषणे कारणमुत्प्रेक्षते । नाजानादिति । स रामो लक्ष्मणश्च प्रायेण मां जीवतीं जीवन्तीं नाजानात् । यदि जानीयातां तदा जानन्तौ तौ उर्व्यां भूमौ परिमार्गणं न कुर्य्यातामिति न किन्तु कुर्य्यातामेवातो मृतेति मत्वा तूष्णीं तिष्ठत इति भावः ॥ ३५ ॥

अथवा मद्वियोगेन रामो देहं त्यक्तवानित्याह,—नूनमिति ॥ ३६ ॥

एवञ्च देवलोकस्था धन्या इत्याह,—धन्या इति । मम वीरमित्यन्वयः ॥ ३७ ॥

ननु तज्जीवनाभावनिश्चयप्रमाणोपलम्भं विना कथं रामेण देहस्त्यक्त इत्यतः पक्षान्तरमाह,—अथवेति । धर्मकामस्य हि भार्य्यार्थः । अयन्तु न तथा तदेवाह,—धीमतः आत्मानात्मविवेकवतः अतएव

दृश्यमाने भवेत्प्रीतिः सौहृदं नास्त्यदृश्यतः।
नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति॥ ३९॥
किं वा मय्यगुणाः केचित् किं वा भाग्यक्षयो हि मे।
या हि सीता वरार्हेण हीना रामेण भामिनी॥ ४०॥
श्रेयो मे जीवितान्मर्त्तुं विहीनाया महात्मनः।
रामादक्लिष्टचारित्राच्छूराच्छत्रुनिवर्हणात्॥ ४१॥

परमात्मनः परमात्मब्रह्मात्मना स्थितस्य जीवन्मुक्तस्य तस्य मया नार्थः। अनेन वैराग्यादप्रवृत्तिरिति सूचितम्॥ ३८॥

सर्वदा जीवन्मुक्तिनाङ्गीकार एव न कृतः स्यात्। तादृशेन कृतेऽङ्गीकारे त्वेवंविधत्यागोऽनुचित इत्यतो दूरवासात् स्नेहनाशेनाप्रवृत्तिरित्याह,—दृश्यमान इति। सौहृदं प्रीतिः नास्त्यदृश्यतः ममादृश्यत्वात् मयि तन्नास्ति नष्टमित्यर्थः। अयमपि पक्षोऽसङ्गतः ईदृशगुणवता कृतप्रीतेर्नाशनायोगादित्याह,—नाशयन्तीति। कृतघ्ना एव प्रपन्नजनस्नेहमसन्निकर्षान्नाशयन्ति नैवं रामोऽकृतघ्नत्वात् स्वस्य प्रकृतित्वेन प्रकृतप्रपन्नभीतत्वेन च तस्याकृतघ्नतौचित्यं वनवासादौ सङ्कदानाच्च॥ ३९॥

अतः पक्षान्तरं किं वेति। मयि तदुपेक्षाहेतवः केचनागुणा दोषाः स्युः अयमपि पक्षो न युक्तः। स्वापरिज्ञातस्वापचारभावात्। तस्मात्प्राग्भवीयदुष्कर्मजो भाग्यक्षय एव हेतुरित्याह,—किं वेति। अतो क्लिष्टचारित्रादिगुणाद्रामाद् याहं त्वयाऽर्हा सीताख्या भामिनी। एतावत्पर्यन्तं सा हि यत इदानीं वरार्हेणात्ममवस्तुयोग्येन रामेण हीनास्मि। अतस्तस्या मम तेन महात्मना हीनाया मर्त्तुं श्रेयः मरणं ज्यायः॥४०॥४१॥

अथवा न्यस्तशस्त्रौ तौ वने मूलफलाशनौ।
भ्रातरौ हि नरश्रेष्ठौ चरन्तौ वनगोचरौ ॥ ४२ ॥
अथवा राक्षसेन्द्रेण रावणेन दुरात्मना।
छद्मना घातितौ शूरौ भ्रातरौ रामलक्ष्मणौ ॥ ४३ ॥
साहमेवंविधे काले मर्त्तुमिच्छामि सर्वतः।
न च मे विहितो मृत्युरस्मिन् दुःखेऽतिवर्त्तति ॥ ४४ ॥
धन्याः खलु महात्मानो मुनयः सत्यसम्मताः।
जितात्मानो महाभागा येषां न स्तः प्रियाप्रिये ॥ ४५ ॥

भाग्यक्षयनिश्चयस्य कर्त्तुमशक्यत्वात्। पक्षान्तरमथवेति शस्त्रग्रहणमूलत्वात्। सर्वथानर्थस्य हिंसारहिते तपस्येव यावज्जीवं वर्त्तितव्यमिति धिया न्यस्तशस्त्रौ जातौ ॥ ४२ ॥

इदमप्यसम्भावितं रक्षोभिः कृतवैरेण क्षत्रियेण तच्यागायोगादतः पक्षान्तरमथवेति। छद्म वञ्चना सा रक्षसां प्रसिद्धैव ॥ ४३ ॥

अतिवर्त्तति अतिशयेन वर्त्तमाने ॥ ४४ ॥

अथ तस्या दुःखनाशकारणं विवेकज्ञानमेवेत्याह,—धन्या इति। सत्यं ब्रह्म सम्मतमात्मत्वेन येषां ते। अनेन संसारतरणसामर्थ्यं दर्शितम्। अतएव जितात्मानो जितान्तःकरणाः अतएव महात्मानः प्राप्तमहात्मैक्याः अतएव महाभागाः पूर्वजन्मार्ज्जितनिष्कामधर्मरूपमहाभाग्यवन्तः। मुनयो ध्यानशीलास्ते धन्याः। तत्र हेतुः येषां कर्मजन्ये प्रियाप्रिये न स्तः ॥ ४५ ॥

प्रियान्न सम्भवेद्दुःखमप्रियादधिकं भवेत् ।
ताभ्यां हि ते वियुज्यन्ते नमस्तेषां महात्मनाम् ॥ ४६ ॥
साहं त्यक्ता प्रियेणैव रामेण विदितात्मना ।
प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षड्विंशः सर्गः ॥ २६ ॥

प्रियाप्रियाभावं विरह्योति । प्रियादिति । येषां मुक्तानां प्रियाद्वियुज्यमानाद्दुःखं न सम्भवेन्न भवेत् अप्रियात् संयुज्यमानादधिकं प्रियवियोगादप्यधिकं दुःखं न भवेत् । अप्रियादधिकं भयमिति पाठे संयुज्यमानादप्रियादधिकं महद्भयमपि न भवेदित्यर्थः । ताभ्यां प्रियवियोगजदुःखाप्रियसंयोगजदुःखभयाभ्यां ये वियुज्यन्ते तेषां महात्मनां मामकी नमस्क्रियास्तु तेषां नमस्कारेण तत्तुल्यता ममापि स्यादित्याशयः ॥ ४६ ॥

रामेण त्यक्ता अन्विष्य न मोचिता प्रियेणैव सन्तोषेणैव प्राणांस्त्यक्ष्यामि रामेण त्यक्तायाः प्राणत्यागस्यैव परमप्रियत्वात् ॥ ४७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

# सप्तविंशः सर्गः ।

इत्युक्ताः सीतया घोरं राक्षस्यः क्रोधमूर्च्छिताः ।
काश्चिज्जग्मुस्तदाख्यातुं रावणस्य दुरात्मनः ॥ १ ॥
ततः सीतामुपागम्य राक्षस्यो भीमदर्शनाः ।
पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २ ॥
अद्येदानीं तवानार्य्ये ! सीते ! पापविनिश्चये ! ।
राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥ ३ ॥
सीतां ताभिरनार्य्याभिर्दृष्ट्वा सन्तर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा प्रबुद्धा वाक्यमब्रवीत् ॥ ४ ॥

इत्युक्ताः मरिष्ये इत्युक्ताः तदाख्यातुं मरणनिश्चयं कथयितुम् ॥ १ ॥

एकार्थं वाक्यमिति शेषः । अनर्थार्थं स्वेषामनर्थमात्रप्रयोजनकम् ॥ २ ॥

तदेव वाक्यमाह,—अद्येदानीमिति । अद्य दिने इदानीमस्मिन् क्षणे पापनिश्चये कृतमरणनिश्चये ऽस्मासु रक्षिकास्विदानीं तदसम्भवात् मांसं मांसमात्रम् । इदमवधिकालोपलक्षणं भयातिशयार्थमेवमुक्तिः यथासुखं स्थितायास्तदनन्तरं रावणाज्ञया एतत्तव शरीरं राक्षस्यो भक्षयिष्यन्ति ॥ ३ ॥

आत्मानं खादतानार्य्या ! न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५ ॥
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्त्तुरस्या भवाय च ॥ ६ ॥
एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिताः ।
सर्वा एवाब्रुवन् भीतास्त्रिजटां तामिदं वचः ॥ ७ ॥
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि ।
तासां श्रुत्वा तु वचनं राक्षसीनां मुखोद्गतम् ॥ ८ ॥
उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् ।
गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥ ९ ॥
युक्तां वाजिसहस्रेण स्वयमास्थाय राघवः ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन समागतः ॥ १० ॥

अनर्थ्याभिः क्रूराभिः रक्षा धर्मज्ञामयोगवयोभिर्वृद्धा प्रवृद्धेत्यनेन तावत्पर्य्यन्तं सुप्तवतीति गम्यते ॥ ४ ॥

आत्मानं स्वशरीरं भक्षयिष्यथेति । अवधिकालात् परमपीति शेषः ॥ ५ ॥

कुतोऽवगतमेतत्तत्राह,—स्वप्न इति । दारुणः क्रूरः राक्षसानामभावाय दृष्टः । तथा रोमहर्षणः अत्यद्भुतो रोमाञ्चकरोऽन्योऽस्या भर्त्तुर्भवाय दृष्ट इत्यर्थः ॥ ६ ॥

पूर्वं क्रोधमूर्च्छिताः पश्चात् त्रिजटावचनाद्भीता इत्यर्थः ॥ ७ ॥ ८ ॥

स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता ।
सागरेण परिक्षिप्तं श्वेतपर्वतमास्थिता ॥ ११ ॥
रामेण सङ्गता सीता भास्करेण प्रभा यथा ।
राघवश्च पुनर्दृष्टश्चतुर्दन्तं महागजम् ॥ १२ ॥
आरूढः शैलसङ्काशं चकास सहलक्ष्मणः ।
ततस्तु सूर्य्यसङ्काशौ दीप्यमानौ स्वतेजसा ॥ १३ ॥
शुक्लमाल्याम्बरधरौ जानकीं पर्य्युपस्थितौ ।
ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः ॥ १४ ॥

काले प्रातःकाले स्वप्नसंश्रितं प्रातःकालदृष्टस्वप्नदृष्टार्थविषयकम् अनेन स्वप्नस्य शीघ्रफलदत्वं सूचितम् । तत्र सीतायाः पीडानिवृत्तये तदभ्युदयसूचकस्वप्नं प्रथममाह,—गजदन्तेति । शिबिकां वाजिसहस्र-युक्तत्वविशेषवाद्विमानमित्यर्थः । तामास्थाय गच्छन् मया दृष्टः समागतः सहितः ॥ ९ ॥ १० ॥

सागरेण क्षीरसागरेण परिक्षिप्तमावृतम् ॥ ११ ॥

सङ्गता तत्रैव पर्वत इति शेषः । एतेन लङ्कायामेव रामस्य सीतादर्शनं सूचितम् । स्वप्नान्तरमाह,—राघवश्चेति पुनः स्वप्नान्तर इत्यर्थः ॥ १२ ॥

चकास शुशुभे ॥ १३ ॥

जानकीं पर्य्युपस्थितौ जानकीसमीपं प्राप्तौ । नगस्य श्वेतपर्वतस्य । दन्तिनः स्कन्धमाश्रितौ । तदुक्तम् । आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् । शुभमर्थलाभदमिति ॥ १४ ॥

भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ।
भर्त्तुरङ्कात् समुत्पत्य ततः कमललोचना ॥ १५ ॥
चन्द्रसूर्य्यौ मया दृष्टे पाणिभ्यां परिमार्जती ।
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ॥ १६ ॥
सीतया च विशालाक्ष्या लङ्काया उपरिस्थितः ।
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ॥ १७ ॥
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ।
ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः ॥ १८ ॥
लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्य्यवान् ।
आरुह्य पुष्पकं दिव्यं विमानं सूर्य्यसन्निभम् ॥ १९ ॥
उत्तरां दिशमालोच्य प्रस्थितः पुरुषोत्तमः ।

प्रथमं भर्त्तुरङ्कं गत्वा ततः समुत्पत्य सम्मूर्ध्नि भर्त्रा परिगृहीतस्य धृतासनस्य गजस्य स्कन्धमाश्रिता ॥ १५ ॥

सूर्य्याचन्द्रमसौ पाणिभ्यां परिमार्जती । तदुक्तम् । आदित्यमण्डलं वापि चन्द्रमण्डलमेव वा । स्वप्ने गृह्णाति हस्ताभ्यां महद्राज्यं समाप्नुयादिति ॥ १६ ॥

पाण्डुरर्षभेति । पाण्डुरवृषभाष्टयुक्तेन रथेन ॥ १७ ॥

शुक्लमाल्याम्बरधरो रामो लक्ष्मणेन सहेहागत इत्यन्वयः । अन्यत्र स्वप्नान्तरे ॥ १८ ॥

आरुह्य पुष्पकमित्येतद्द्वापि स्वप्नमेव दृष्टम् ॥ १९ ॥

रावणश्च मया दृष्टो मुण्डस्तैलसमुक्षितः ॥ २० ॥
रक्तवासाः पिबन् मत्तः करवीरकृतस्रजः।
विमानात् पुष्पकादद्य रावणः पतितः क्षितौ ॥ २१ ॥
कृष्यमाणः स्त्रिया मुण्डो दृष्टः कृष्णाम्बरः पुनः।
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ॥ २२ ॥
पिबंस्तैलं हसन् नृत्यन् भ्रान्तचित्ताकुलेन्द्रियः।
गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः ॥ २३ ॥
पुनरेव मया दृष्टो रावणो राक्षसेश्वरः।
पतितो विशिरा भूमौ गर्दभाद्भयमोहितः ॥ २४ ॥
सहसोत्थाय सम्भ्रान्तो भयार्त्तो मदविह्वलः।
उन्मत्तरूपो दिग्वासा दुर्वाक्यं प्रलपन् बहु ॥ २५ ॥
दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम्।
मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः ॥ २६ ॥

अत्र मध्ये साण्डं भुवनमित्यादयो बहवः श्लोका रामानुजसम्प्रदाय-पुस्तकेषु दृश्यन्ते ते प्रक्षिप्ता इति कतकादयोऽन्ये च। अथ रावणा-नर्थसूचकः स्वप्नः। रावणश्चेति। मुण्डः मुण्डितमुण्डः ॥ २० ॥

पिबन्निति तैलमिति शेषः। करवीरकृतस्रज इति विमानादित्यस्य विशेषणं करवीरेत्यारभ्य स्वप्नान्तरम् ॥ २१ ॥

रथेनेत्यादि स्वप्नान्तरम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

मलानि पङ्कानि च यस्मिंस्तत्तिमिरम् ॥ २६ ॥

प्रस्थितो दक्षिणामाशां प्रविष्टोऽकर्दमं ह्रदम्।
कण्ठे बद्धा दशग्रीवं प्रमदा रक्तवासिनी ॥ २७ ॥
काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति।
एवं तत्र मया दृष्टः कुम्भकर्णो महाबलः ॥ २८ ॥
रावणस्य सुताः सर्वे मुण्डास्तैलसमुक्षिताः।
वराहेण दशग्रीवः शिशुमारेण चेन्द्रजित् ॥ २९ ॥
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम्।
एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः।
चतुर्भिः सचिवैः सार्द्धं वैहायससमुपस्थितः ॥ ३० ॥
समाजश्च महान् वृत्तो गीतवादित्रनिस्वनः।
पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ॥ ३१ ॥
लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा।
सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥ ३२ ॥

अकर्दमं जलकर्दमेनापरिरक्षितम् ॥ २७ ॥ २८ ॥ २९ ॥

वैहायसं खेचरत्वम् ॥ ३० ॥

एतदग्रे श्लोकद्वयं प्रक्षिप्तमिति कतकः। गीतवादित्रनिस्वन इति बहुव्रीहिः। कथमपि विभीषणविषयो नाश्चर्यः स्पष्टमनुभूतः। पिबतां तेषामादि पिबतां रक्षसां वासभूता लङ्का सागरे पतितेत्यन्वयः ॥ ३१ ॥ ३२ ॥

पीत्वा तैलं प्रमत्ताश्च प्रहसन्त्यो महास्वनाः।
लङ्कायां भस्मरूक्षायां सर्वा राक्षसयोषितः॥ २३॥
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः।
रक्तं निवसनं गृह्य प्रविष्टा गोमयं ह्रदम्॥ २४॥
अपगच्छत पश्यध्वं सीतामाप्नोति राघवः।
घातयेत् परमामर्षी युष्मान् सार्द्धं हि राक्षसैः॥ २५॥
प्रियां बहुमतां भार्य्यां वनवासमनुव्रताम्।
भर्त्सितां तर्जितां वापि नानुमंस्यति राघवः॥ २६॥
तदलं क्रूरवाक्यैश्च सान्त्वमेवाभिधीयताम्।
अभियाचाम वैदेहीमेतद्धि मम रोचते॥ २७॥
यस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते।
सा दुःखैर्बहुभिर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम्॥ २८॥

भस्मरूक्षायां भस्मना रूक्षायाम्। २३।

निवसनं न्यग्भूतं कुत्सितं वस्त्रमित्यर्थः। २४।

यदेवमतोऽपगच्छत सत् कोपदानं तस्मादन्यतोऽपसरत राघवश्च सीतामाप्नोत्येव पश्यध्वम् अनपगमे बाधकमाह,—घातयेदिति। युष्मान् सीतासंप्रदाचीः। २५।

भर्त्सितां युष्मत्कृतभर्त्सनादिमर्षी नानुमंस्यति नानुमंस्यते न क्षमिष्यते अतस्तत्कर्त्तॄं वा घातयेदिति भावः। २६। २७। २८।

भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया।
राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥ ३९ ॥
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा।
अलमेषा परित्रातुं राक्षस्यो महतो भयात् ॥ ४० ॥
अपि चास्या विशालाक्ष्या न किञ्चिदुपलक्षये।
विरूपमपि चाङ्गेषु न सूक्ष्ममपि लक्षणम् ॥ ४१ ॥
छायावैगुण्यमात्रन्तु शङ्के दुःखमुपस्थितम्।
अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ॥ ४२ ॥
अर्थसिद्धिन्तु वैदेह्याः पश्याम्यहमुपस्थिताम्।
राक्षसेन्द्रविनाशञ्च विजयं राघवस्य च ॥ ४३ ॥
निमित्तभूतमेतत्तु श्रोतुमस्या महत्प्रियम्।

हे राक्षस्यः किं विवक्षया कुत्सितभर्त्सनादिवचनेच्छया अलमिति शेषः। तत्र हेतुः राघवादिति ॥ ३९ ॥

नन्वेवं क्लेशिता कथमस्माकं प्रसन्ना स्यात्तत्राह,—प्रणिपातेति ॥ ४० ॥

सीताया अभ्युदयसूचकं प्रत्यक्षनिमित्तमपि दर्शयति। अपि चेति द्वितीयमपि च्चेति पादपूरणे। विरूपं लक्षणं सूक्ष्ममपि किञ्चिन्नोपालक्षये इत्यर्थः ॥ ४१ ॥

किन्तु स्नानानुलेपनाद्यभावमूलकशोभावैगुण्यमात्रात्मकं दुःखमुपस्थितमिति उत्प्रेक्षते नतु मुखवैवर्ण्यदक्षिणाक्षिस्पन्दादिदुर्निमित्तेनेत्यपि स्थितमिति उत्प्रेक्षते। नतु मुखवैवर्ण्यदक्षिणाक्षिस्पन्दादिदुर्निमित्तेनेत्यर्थः। वैहायसमुपस्थितां स्वप्ने तथा दृष्टाम् ॥ ४२ ॥

दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् ॥ ४४ ॥
ईषच्च हृषितो वास्या दक्षिणाया ह्यदक्षिणः ।
अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते ॥ ४५ ॥
करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः ।
वेपन् कथयतीवास्या राघवं पुरतः स्थितम् ॥ ४६ ॥
पक्षी च शाखानिलयं प्रविष्टः
पुनःपुनश्चोत्तमसान्त्ववादी ।
सुखागतां वाचमुदीरयाणः
पुनःपुनश्चोदयतीव हृष्टः ॥ ४७ ॥

अतएवास्या अर्थसिद्धिम् इष्टसिद्धिमुपस्थितां पश्यामि रावणनाशं रामविजयञ्च पश्यामि ॥ ४३ ॥

अपि चास्या महत्प्रियं श्रोतुं निमित्तभूतं सूचकत्वं स्वप्नमेतत् । स्फुरच्च दृश्यते वाममिति शेषः ॥ ४४ ॥

हृषितः पुलकितः वेति वाक्यालङ्कारे अदक्षिणो वामः ॥ ४५ ॥

वेपन् वेपमानः स्फुरन्नित्यर्थः । राघवमस्याः पुरः स्थितमिव सूचयति ॥ ४६ ॥

पक्षी काकादिः शाखानिलयं शाखास्थनीड़ं प्रविष्टो वारंवारमुत्तमसान्त्ववादी उत्तमसान्त्वस्वरवादी .सुखागतां शोभनस्य स्वागतं प्राप्तिर्यस्यां तादृशीं वाचं कथयन् पुनः पुनश्चोदयतीव शोभनप्राप्तिं सूचयतीव शोभनमागतं प्रत्युद्गच्छेति सीतां पुनः पुनः प्रेरयतीव वा ॥ ४७ ॥

ततः सा ह्रीमती बाला भर्त्तुर्विजयहर्षिता।
अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ॥ ४८ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
सप्तविंशः सर्गः ॥ २७ ॥

नस्त्रिजटोक्तम् ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

# अष्टाविंशः सर्गः ।

सा राक्षसेन्द्रस्य वचो निशम्य
तद्रावणस्याप्रियमप्रियार्त्ता ।
सीता वितत्रास यथा वनान्ते
सिंहाविपन्ना गजराजकन्या ॥ १ ॥
सा राक्षसीमध्यगता च भीरु-
र्वाग्भिर्भृशं रावणतर्जिता च ।
कान्तारमध्ये विजने विसृष्टा
बालेव कन्या विललाप सीता ॥ २ ॥
सत्यं वतेदं प्रवदन्ति लोके
नाकालमृत्युर्भवतीति सन्तः ।
यत्राहमेवं परिभर्त्स्यमाना
जीवामि यस्मात् क्षणमप्यपुण्या ॥ ३ ॥
सुखाद्विहीनं बहुदुःखपूर्ण-
मिदन्तु नूनं हृदयं स्थिरं मे ।

पुनर्दुःखपारमदृष्ट्वैव सीताप्रलापः । सेति ॥ १ ॥

विसृष्टा बाला कन्येव महादुर्भिक्षलोभवशात् बालकन्यायाः परित्यागः ॥ २ ॥

त्रिदीर्य्यते यन्न सहस्रधाद्य
वज्राहतं शृङ्गमिवाचलस्य ॥ ४ ॥
नैवास्ति नूनं मम दोषमत्र
बध्याहमस्याप्रियदर्शनस्य ।
भावं न चास्याहमनुप्रदातु-
मलं द्विजो मन्त्रमिवाद्विजाय ॥ ५ ॥
तस्मिन्ननागच्छति लोकनाथे
गर्भस्य जन्तोरिव शल्यकृन्तः ।
नूनं ममाङ्गान्यचिरादनार्य्यः
शरैः शितैश्छेत्स्यति राक्षसेन्द्रः ॥ ६ ॥

यस्मादपुण्या पुण्यरहिता ॥ ३ ॥ ४ ॥

नन्वेवं प्राणत्यागे आत्महननदोषः स्यादत आह,—नैवेति। अत्रेदृशे विषये प्राणत्यागेऽपि न दोषमस्ति दोषमिति क्लीवत्वमार्षम्। यतोऽहमस्य बध्या। एवञ्च दुर्मरणजनितदोषस्य दुर्वारत्वेन दोषा-भावोक्तिरिति भावः। आत्मघातिब्रह्मघातकयोर्दाहादावनधिकार-श्रवणस्य तुल्यत्वादिति बोद्धम्। नन्वेवं रावणाङ्गीकार एव क्रियता-मत आह,—भावमिति। अद्विजाय शूद्राय द्विजो मन्त्रमिवाहं स्वीयं भावान्तरमस्यानुप्रदातुम् अनुकूलतया समर्पयितुं नालं न समर्था। एवञ्च पातिव्रत्यस्य प्राणत्यागेन रक्षणात् सर्वदोषनिस्तार इति भावः ॥ ५ ॥

ननु तथाप्यात्मघातेऽतिदोषात् सोऽयुक्त इत्याशङ्क्य सत्यं किंचिच्च-मधात् बिभेमीत्याह,—तस्मिन्ननागच्छतीति। तस्मिन् रामे अनागच्छति

दुःखं ववेदं मम दुःखितायाः
मासौ चिरायाभिगमिष्यतो द्वौ।
बद्धस्य बध्यस्य यथा निशान्ते
राजोपरोधादिव तस्करस्य ॥ ७ ॥
हा राम! हा लक्ष्मण! हा सुमित्रे!
हा राममातः! सह मे जनन्यः।
एषा विपद्याम्यहमल्पभाग्या
महार्णवे नौरिव मूढवाता ॥ ८ ॥

सति। अवधिकालादर्वागिति शेषः। ममाङ्गानि जीवन्त्या एव छेत्स्यति निरुद्धाया विशसने दृष्टान्तः। गभेति। शल्यं शस्त्रं तेन कृन्ततीति शल्यकृन्तः आम्बष्ठ वैद्यः। आर्षत्वात् साधु। स यथा गर्भस्थजन्तुं व्याधिरूपं जीवन्तं कृन्तति तद्वत्। एतत् श्लोकद्वयं कतकेन इत्थं व्याख्यातम्। अन्यायप्राप्तबधेऽपि ममदोषो नेत्याह,—नैवेति। यद्यप्यस्याहं बध्या भवामि मम दोषो नैवम्। भावाऽप्रदानेन पातिव्रत्यरक्षणात् सर्वदोषनिस्तार इत्यर्थः। किञ्च मरणप्राप्तिः प्राप्स्यतीत्याह,—तस्मिन्निति। अनागच्छत्येव बधप्रसक्तिर्नान्यथेति भावः। अनागमनपक्षे प्राप्तविशसने दृष्टान्तः गभेति ॥ ६ ॥

चिराय भर्तृवियोगदुःखितायां मे इदं विशसनदुःखमपि वर्त्ताऽगमिष्यति। यत द्वौ मासौ विशसनावधिभूतौ कतिपयदिनावधिकावपि अभिगमिष्यतः शीघ्रं गमिष्यतः किन्तु तत्र बधप्राप्तौ दृष्टान्तः। बद्धस्येति। तस्करस्य बध इवेति शेषः ॥ ७ ॥

तरस्विनौ धारयता मृगस्य
सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ।
नूनं विशस्तौ मम कारणात्तौ
सिंहर्षभौ द्वाविव वैद्युतेन ॥ ९ ॥

नूनं स कालो मृगरूपधारी
मामल्पभाग्यां लुलुभे तदानीम् ।
यत्रार्य्यपुत्रौ विससर्ज मूढ़ा
रामानुजं लक्ष्मणपूर्वजञ्च ॥ १० ॥

हा राम ! सत्यव्रत ! दीर्घबाहो !
हा पूर्णचन्द्रप्रतिमानवक्त्र ! ।
हा जीव ! लोकस्य हितः प्रियश्च
वध्यां न मां वेत्सि हि राक्षसानाम् ॥ ११ ॥

सह श्वश्रूभ्यां सह याः मे जनन्यस्तास्तु हा युष्मानदृष्ट्वा मृत्वैवाहं विपद्यामि । मूढ़वाता मोहास्पदमहावात्यादिवातयुक्ता ॥ ८ ॥

मृगस्य रूपं धारयता सत्त्वेन राक्षसरूपजीवेन मम कारणाद्विशस्तौ नूनं वैद्युतेन विद्युत्सम्बन्धितेजसा ॥ ९ ॥

सर्वमेवेदं दुःखं स्खलितानर्थमूलमित्याह,—नूनमिति । लुलुभे विमोहयति स्म । अहं विससर्ज विसृष्टवती अपरोक्षेऽपि चित्तविक्षेपात्किल पारोक्ष्यमारोप्य लिट् ॥ १० ॥

हा रामेत्यादौ हे राम मां हा अहं शोचे इत्यर्थः । हा जीव मम प्राणरूप हितः हितकारः प्रियश्चलोकस्य त्वमिति शेषः ॥ ११ ॥

अनन्यदेवत्वमियं क्षमा च
भूमौ च शय्या नियमश्च धर्मे।
पतिव्रतात्वं विफलं ममेदं
कृतं कृतघ्नेष्विव मानुषाणाम्॥ १२॥
मोघं हि धर्मश्चरितो ममायं
तथैकपत्नीत्वमिदं निरर्थकम्।
या त्वां न पश्यामि कृशा विवर्णा
हीना त्वया सङ्गमने निराशा॥ १३॥
पितुर्निदेशं नियमेन कृत्वा
वनान्निवृत्तश्चरितव्रतश्च।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिः
संरंस्यसे वीतभयः कृतार्थः॥ १४॥

"धर्मो रक्षतीति" सर्वाविवादसिद्धमपि मां प्रति निष्फलमित्याह,—अनन्यदेवत्वमिति पत्येकदेवत्वमित्यर्थः। इयं क्षमा प्राणेन संहारप्रसक्तावपि एवं पीड़ासहनरूपा। पत्यतिरिक्तं कामासक्तिराहित्यं पतिव्रतात्वम्। कृतमुपकृतम्॥ १२॥

उक्तमेवार्थं दुःखातिशयादावर्त्तयति। मोघं हीति। त्वया हीना तव सङ्गमने च निराशा॥ १३॥

इदानीं तयोरवधमेव निश्चित्य ममाशाशयोर्न कोऽपि नाशोऽपि तु ममैवेत्याह,—पितुरिति। वनान्निवृत्तमं मध्ये व्रतत्यागो नेत्याह,—चरितव्रतश्चेति॥ १४॥

अहन्तु राम त्वयि जातकामा
चिरं विनाशाय निबद्धभावा ।
मोघं चरित्वाथ तपोव्रतञ्च
त्यक्ष्यामि धिग् जीवितमल्पभाग्याम् ॥ १५ ॥

सञ्जीवितं क्षिप्रमहं त्यजेयं
विषेण शस्त्रेण शितेन वापि ।
विषस्य दाता न तु मेऽस्ति कश्चित
शस्त्रस्य वा वेश्मनि राक्षसस्य ॥ १६ ॥

इतीव देवी बहुधा विलप्य
सर्वात्मना राममनुस्मरन्ती ।
प्रवेपमाना परिशुष्कवक्त्रा
नगोत्तमं पुष्पितमाससाद ॥

शोकाभितप्ता बहुधा विचिन्त्य
सीताथ वेणीग्रथनं गृहीत्वा ।
उद्बध्य वेण्युद्ग्रथनेन शीघ्र-
महं गमिष्यामि यमस्य मूलम् ॥ १७ ॥

विनाशाय मरणान्तदुःखाय अल्पभाग्यां मां धिक् ॥ १५ ॥
वेश्मनि राक्षसस्येति ॥ १६ ॥
एतदनन्तरमेकश्लोकः प्रक्षिप्तः । यमस्य मूलं समीपम् ॥ १७ ॥

उपस्थिता सा मृदुसर्वगात्री
शाखां गृहीत्वा च नगस्य तस्य।
तस्यास्तु रामं परिचिन्तयन्त्या
रामानुजं स्वञ्च कुलं शुभाङ्ग्याः॥ १८॥
तस्या विशोकानि तदा बहूनि
धैर्य्यार्जितानि प्रवराणि लोके।
प्रादुर्निमित्तानि तदा बभूवुः
पुरापि सिद्धान्युपलक्षितानि॥ १९॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
अष्टाविंशः सर्गः॥ २८॥

तस्याः नगस्य शाखां गृहीत्वोपस्थितायाः॥ १८॥

विशोकानि विशोककराणि। धैर्य्यार्जितानि धैर्य्यस्यार्जितमर्जनं सम्पादनं यैस्तानि लोके प्रवराणि प्रसिद्धानि पुरापि सिद्धानि संवादीनि निमित्तानि प्रादुर्बभूवुः॥ १९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे अष्टाविंशः सर्गः॥ २८॥

# एकोनत्रिंशः सर्गः ।

तथागतां तां व्यथितामनिन्दितां
व्यतीतहर्षां परिदीनमानसाम् ।
शुभां निमित्तानि शुभानि भेजिरे
नरं श्रिया जुष्टमिवोपसेविनः ॥ १ ॥

तस्याः शुभं वाममरालपक्ष्म-
राज्यावृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या
मीनाहतं पद्ममिवाभिताम्रम् ॥ २ ॥

भुजश्च चार्वञ्चितवृत्तपीनः
परार्घ्यकालागुरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण
चिरेण वामः समवेपताशु ॥ ३ ॥

तथेति । उपसेविनः सेवका इव ॥ १ ॥

अरालया वक्रया पक्ष्मराज्या वृतम् । पक्ष्मणोऽरालया वक्ररोमराज्या वृतमित्यर्थः । तथा कृष्णं कनीनिकामात्रेऽन्यत्र विशालशुक्लत्वयुतम् । अभिताम्रं प्रान्तरक्तम् । एकं वामम् ॥ २ ॥

गजेन्द्रहस्तप्रतिमश्च पीन-
स्तयोर्द्वयोः संहतयोः सुजातः ।
प्रस्पन्दमानः पुनरूरुरस्या
रामं पुरस्तात् स्थितमाचचक्षे ॥ ४ ॥
शुभं पुनर्हेमसमानवर्ण-
मीषद्रजोध्वस्तमिवातुलाक्ष्याः ।
वासः स्थितायाः शिखराग्रदन्त्याः
किञ्चित्परिस्रंसत चारुगात्र्याः ॥ ५ ॥
एतैर्निमित्तैरपरैश्च सुभ्रूः
सम्बोधिता प्रागपि साधुसिद्धैः ।
वातातपक्लान्तमिव प्रणष्टं
वर्षेण वीजं प्रतिसञ्जहर्ष ॥ ६ ॥

अध्युषितः कृतसम्पर्कः ॥ ३ ॥

संहतयोः श्लिष्टयोस्तयोरूर्वोर्मध्ये वाम ऊरुरित्यर्थः ॥ ४ ॥

हेमकषितत्वाद्धेमसमानवर्णम् ईषद्रजोध्वस्तमिव ईषन्मलिनमिव । चिरमपरिवर्त्तनात् शिखरं दाडिमबीजं तदग्रतुल्यदन्त्याः । शिखरं शैलवृक्षाग्रे कक्षायगपककोटिषु । पक्वे दाडिमबीजे चेति विश्वः । परिस्रंसत पर्य्यस्रंसत । आसनादधः पपात ॥ ५ ॥

साधुसिद्धैः सम्यक्सम्बन्धिभिः । संवादिभिरिति पाठान्तरम् ॥ ६ ॥

तस्याः पुनर्बिम्बफलोपमोष्ठं
स्वक्षिभ्रुकेशान्तमरालपक्ष्म ।
वक्त्रं बभासे सितशुक्लदंष्ट्रं
राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७ ॥
सा वीतशोका व्यपनीततन्द्रा
शान्तज्वरा हर्षविबुद्धसत्त्वा ।
अशोभतार्य्या वदनेन शुक्ले
शीतांशुना रात्रिरिवोदितेन ॥ ८ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकोनत्रिंशः सर्गः ॥ २९ ॥

शोभने अक्षिणी भ्रुवौ केशान्ता अलकाश्च यस्य तत् सितशुक्लदंष्ट्रं स्फटिकादिसितपदार्थवत् शुक्ला दंष्ट्रा यस्य तत्स्वच्छशुक्लदंष्ट्रमिति च ॥ ७ ॥

हर्षेण विबुद्धं सत्त्वं चित्तं यस्या वदनेन करणेन शुक्ले शुक्लपक्षे ॥ ८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ।

हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः ।
सीतायास्त्रिजटायाश्च राक्षसानाञ्च गर्जितम् ॥ १ ॥
अवेक्षमाणस्तां देवीं देवतामिव नन्दने ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २ ॥
यां कपीनां सहस्राणि सुबहून्ययुतानि च ।
दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३ ॥
चारेण तु सुयुक्तेन शत्रोः शक्तिमवेक्षता ।
गूढेन चरता तावदवेक्षितमिदं मया ॥ ४ ॥
राक्षसानां विशेषश्च पुरी चेयं निरीक्षिता ।
राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५ ॥
यथा तस्याप्रमेयस्य सर्वसत्वदयावतः ।

विक्रान्तः शूरः सीतायाः त्रिजटायाः स्वप्नकथनमिति शेषः ॥ १ ॥
चिन्तां चिन्तयामास चिन्तां चकारेत्यर्थः ॥ २ ॥ ३ ॥
चारेण चारात्मना प्रवर्त्तमानेन इदं वक्ष्यमाणम् ॥ ४ ॥
राक्षसानां विशेषस्तारतम्यमैश्वर्य्यादिकृतम् अस्य रावणस्य प्रभा-
वश्चावेक्षितः ॥ ५ ॥

समाश्वासयितुं भार्य्यां पतिदर्शनकाङ्क्षिणीम् ॥ ६ ॥
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम्।
अदृष्टदुःखां दुःखस्य नह्यन्तमधिगच्छतीम् ॥ ७ ॥
यदि ह्यहं सतीमेनां शोकोपहतचेतनाम्।
अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥ ८ ॥
गते हि मयि तत्रेयं राजपुत्री यशस्विनी।
परित्राणमपश्यन्ती जानकी जीवितं त्यजेत् ॥ ९ ॥
यथा च स महाबाहुः पूर्णचन्द्रनिभाननः।
समाश्वासयितुं न्याय्यः सीतादर्शनलालसः ॥ १० ॥
निशाचरीणां प्रत्यक्षमक्षमञ्चाभिभाषितम्।
कथं नु खलु कर्त्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥ ११ ॥

अप्रमेयस्य अपरिच्छेद्यस्वरूपस्य अपरिच्छेद्ययशस्य च सर्वसत्त्वदयावतः सर्वं सत्त्वं बलं दया च यस्य सर्वसत्त्वेषु दयावत इति वा दयावत्त्वादेव सीतार्थं बलोद्योगाशनं रामस्य समाश्वासयितुं युक्तमिति शेषः ॥ ६ ॥

आश्वासयामि वर्त्तमानसामीप्ये भविष्यति लट्। नहि नापि ॥ ७ ॥

दोषवत्त्वाद्यंशानिदोषवत् ॥ ८ ॥

तदेवाह,—गते हीति। तत्र रामसमीपे ॥ ९ ॥

आश्वासयितुं सीतासन्देशकथनेन तथा इयमप्याश्वासयितुं न्याय्येति शेषः ॥ १० ॥

अनेन रात्रिशेषेण यदि नाश्वास्यते मया ।
सर्वथा नास्ति सन्देहः परित्यक्ष्यति जीवितम् ॥ १२ ॥
रामस्तु यदि पृच्छेन्मां किं मां सीताब्रवीद्वचः ।
किमहं तं प्रतिब्रूयामसम्भाष्य सुमध्यमाम् ॥ १३ ॥
सीतासन्देशरहितं मामितस्त्वरया गतम् ।
निर्दहेदपि काकुत्स्थः क्रोधतीव्रेण चक्षुषा ॥ १४ ॥
यदि चोद्योजयिष्यामि भर्त्तारं रामकारणात् ।
व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥ १५ ॥
अन्तरन्त्वहमासाद्य राक्षसीनामवस्थितः ।
शनैराश्वासयिष्यामि सन्तापबहुलामिमाम् ॥ १६ ॥

सीतासमाश्वासनञ्च कष्टमित्याह,—निशाचरीणामिति । तासां प्रत्यक्षं सीताया अभिभाषणमशक्यमयोग्यम् । अत इदं कार्य्यं कथं कर्त्तव्यमित्येवं सङ्कटगतोऽहमस्मि ॥ ११ ॥

कालविलम्बमाश्वासनस्यायुक्त इत्याहानेनेति ॥ १२ ॥

सम्भाषणावश्यकमित्याह,—रामश्चेति । मामुद्दिश्य सीता किम-ब्रवीदिति चेत् रामो मां पृच्छेदित्यन्वयः ॥ १२ ॥ १३ ॥

यद्येनामसम्भाष्यैव भर्त्तारं स्वस्वामिनं सुग्रीवं रामकारणाद्यदि चोद्योजयिष्यामि उद्योगं कारयिष्यामि तर्हि तदागमनं व्यर्थं स्यात् । अनाश्वासितया सीतया ततः प्रागेव देहत्यागादिति भावः ॥ १५ ॥

अन्तरमवकाशं तासामनवधानसमयम् ॥ १६ ॥

अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
वाचञ्चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ १७ ॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥ १८ ॥
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ।
मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ॥ १९ ॥
सेयमालोक्य मे रूपं जानकी भाषितं तथा ।
रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासमुपेष्यति ॥ २० ॥
ततो जातपरित्रासा शब्दं कुर्य्यान्मनस्विनी ।
जानाना मां विशालाक्षी रावणं कामरूपिणम् ॥ २१ ॥

तथाश्वासनोपायं निश्चिनोति । अहं चेति । अतितनुः अतिसूक्ष्मवानरतनुरेवं सन् मानुषीं मनुष्यशरीरभाषां संस्कृतां व्याकरणसंस्कारवतीम् ॥ १७ ॥

संस्कृतकथने दोषमाशङ्क्य मनुष्यभाषयैव व्यवहर्त्तव्यमिति निश्चिनुते । यदीति ॥ १८ ॥

तदेवाह,—अवश्यमेवेति ॥ १९ ॥

अथ स्वस्मान्तरितेनैवेयं मया कर्त्तव्येति निश्चयं कुर्वन् पुरतो गत्वाऽभिभाषणे दोषपरम्परा उपन्यस्यति । सेयमिति । मे रूपं वानरीयं पुरतो दृष्ट्वा भाषितञ्च मानुषं श्रुत्वा विरुद्धव्यापारदर्शनाद्रावणोऽयमिति मत्वा त्रासं गमिष्यति ॥ २० ॥

सीतया च कृते शब्दे सहसा राक्षसीगणः ।
नानाप्रहरणो घोरः समेयादन्तकोपमः ॥ २२ ॥
ततो मां सम्परिक्षिप्य सर्वतो विकृताननाः ।
वधे च ग्रहणे चैव कुर्य्युर्यत्नं महाबलाः ॥ २३ ॥
तं मां शाखाप्रशाखासु स्कन्धेषूत्तमशाखिनाम् ।
दृष्ट्वा च परिधावन्तं भवेयुः परिशङ्किताः ॥ २४ ॥
मम रूपञ्च संप्रेक्ष्य वने विचरतो महत् ।
राक्षस्यो भयवित्रस्ता भवेयुर्विकृतस्वराः ॥ २५ ॥
ततः कुर्य्युः समाह्वानं राक्षस्यो रक्षसामपि ।
राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने ॥ २६ ॥

किं ततस्तत्राह,—ततो जातेति । शब्दं मानुषशब्दम् ॥ २१ ॥

समेयात् सम्मुखो गत्वैव मिलितो भवेदा ॥ २२ ॥

सम्परिक्षिप्य सर्वतश्चतुर्दिक्षु वेष्टयित्वा ॥ २३ ॥

शाखाः परिधावन्तं तं मां दृष्ट्वेत्यन्वयः ॥ २४ ॥

ताभिरप्रधर्षणार्थं परिगृहीतं मम महद्रूपं संप्रेक्ष्य भयविषण्णाः भयेन मद्दर्शनजन्यशरीरकम्पादियुताः सत्यस्तत्परिचिताः विकृतस्वरा भवेयुः । न केवलं भयं शाखामृगोऽपि तु कश्चन कामरूपी शत्रुपक्ष्य इति शङ्किताः स्युरित्यर्थः ॥ २५ ॥

ततः किं तत्राह,—ततः कुर्य्युरिति । राक्षसेन्द्रनिवेशने रक्षणाय राक्षसेन्द्रेण नियुक्तानामाह्वानं कुर्य्युः ॥ २६ ॥

ते शूलशरनिस्त्रिंशविविधायुधपाणयः ।
आपतेयुर्विमर्देऽस्मिन् वेगेनोद्वेगकारणात् ॥ २७ ॥
संरुद्धस्तैस्तु परितो विधमे राक्षसं बलम् ।
शक्नुयान्न तु संप्राप्तुं परं पारं महोदधेः ॥ २८ ॥
मां वा गृह्णीयुराप्लुत्य बहवः शीघ्रकारिणः ।
स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ॥ २९ ॥
हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् ।
विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ॥ ३० ॥
उद्देशे नष्टमार्गेऽस्मिन् राक्षसैः परिवारिते ।
सागरेण परिक्षिप्ते गुप्ते वसति जानकी ॥ ३१ ॥
विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे ।
नाहं पश्यामि रामस्य सहायं कार्यसाधने ॥ ३२ ॥

उद्वेगकारणात् आसामुद्वेगरूपान्निमित्तादस्मिन् देशे वेगेन विमर्दे विमर्दायापतेयुरित्यर्थः ॥ २७ ॥

न शक्नुयां युद्धश्रान्त्येति भावः ॥ २८ ॥

अगृहीतार्था मत्तोऽज्ञातमदागमनप्रयोजना ॥ २९ ॥

इमां वेति । एतदर्थं किलायमागत इत्याशयेनेति शेषः ॥ ३० ॥

कार्यविपदमेवोपपादयति । उद्देशे समुल्लङ्घनप्राप्यदेशे । नष्टमार्गे प्रकारान्तरेणैतत्प्राप्तिसम्पादकमार्गरहिते ॥ ३१ ॥

विप्रकृष्टांश्च न पश्यामि यो हते मयि वानरः।
शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ॥ ३३ ॥
कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम्।
नतु शक्ष्याम्यहं प्राप्तुं परं पारं महोदधेः ॥ ३४ ॥
असत्यानि च युद्धानि संशयो मे न रोचते।
कश्च निःसंशयं कार्य्यं कुर्य्यात् प्राज्ञः ससंशयम् ॥ ३५ ॥
एष दोषो महान् हि स्यान्मम सीताभिभाषणे।
प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ ३६ ॥
भूताश्चार्था विरुध्यन्ति देशकालविरोधिताः।
विक्लवं दूतमासाद्य तमः सूर्य्योदये यथा ॥ ३७ ॥
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते।
घातयन्ति हि कार्य्याणि दूताः पण्डितमानिनः ॥ ३८ ॥

विप्रकृष्टे दूरे ॥ ३२ ॥ ३३ ॥

नतु प्राप्स्यामि युद्धश्रान्त्येति भावः ॥ ३४ ॥

किञ्च युद्धे जयोऽपि सन्दिग्ध इत्याह,—असत्यानीति। अनिश्चित-जयानि। संशयः संशयितजयफलकयुद्धव्यापारः अथवा विहेतुः। प्रावल्य-मेव दर्शयति। कश्चेति। निःसंशयं निर्णीतफलकम्। प्राज्ञो मादृशः ससंशयं संशयितफलकं न कार्यीत्यर्थः ॥ ३५ ॥

सीताभिभाषणे पुरतः स्थितेति शेषः ॥ ३६ ॥

न विनश्येत् कथं कार्य्यं वैक्लव्यं न कथं मम।
लङ्घनञ्च समुद्रस्य कथं नु न वृथा भवेत् ॥ ३९ ॥
कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत च।
इति सञ्चिन्त्य हनुमांश्चकार मतिमान् मतिम् ॥ ४० ॥
राममक्लिष्टकर्माणं सुबन्धुमनुकीर्त्तयन्।
नैनामुद्वेजयिष्यामि तद्बन्धुगतचेतनाम् ॥ ४१ ॥
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः।
शुभानि धर्म्मयुक्तानि वचनानि समर्पयन् ॥ ४२ ॥
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम्।
श्रद्धास्यति यथा सीता तथा सर्वं समादधे ॥ ४३ ॥
　इति स बहुविधं महानुभावो
　जगतिपतेः प्रमदामवेक्षमाणः।

भूताः सिद्धप्रायाः। भूता इत्यादिश्लोकावत्रैवकाण्डे द्वितीयसर्गे व्याख्यातौ ॥ ३७ ॥ ३८ ॥ ३९ ॥

शृणुयात् सीतेति शेषः ॥ ४० ॥

सुबन्धुं सीताया इति शेषः। सः चासौ बन्धुश्चेति तद्बन्धुः। तद्बन्धौ रामे गता चेतना चित्तं यस्याः सा ॥ ४१ ॥

वचनानि समर्पयन् रामसन्देशवचनान्युच्चारयन् ॥ ४२ ॥

यथेयं श्रद्धास्यति तथा सर्वं समादधे सम्यगभिधास्ये ॥ ४३ ॥

मधुरमवितथं जगाद वाक्यं
द्रुमविटपान्तरमास्थितो हनूमान् ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
त्रिंशः सर्गः ॥ ३० ॥

जगतिपतेरिति ह्रस्व आर्षः ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

## एकत्रिंशः सर्गः ।

एवं बहुविधां चिन्तां चिन्तयित्वा महामतिः ।
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १ ॥
राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पुण्यशीलो महाकीर्त्तिरिक्ष्वाकूणां महायशाः ॥ २ ॥
अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः ।
मुख्यस्येक्ष्वाकुवंशस्य लक्ष्मीवान् लक्ष्मिवर्धनः ॥ ३ ॥
पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः ।
पृथिव्यां चतुरन्तायां विश्रुतः सुखदः सुखी ॥ ४ ॥
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ॥ ५ ॥

चिन्तां चिन्तयित्वा चिन्तां कृत्वा कर्त्तव्यमर्थं निश्चित्येति यावत् । संश्रवे सम्यक्श्रवणयोग्ये समीपदेशे यथोक्तं सीतेव शृणुयात्तथा इत्यर्थः । व्याजहार वृत्तान्तमिति शेषः ॥ १ ॥ २ ॥

मुख्यस्य राजवंशेषु श्रेष्ठस्य । लक्ष्मिवर्द्धन इति ह्रस्वः आर्षः ।

रक्षिता स्वस्य वृत्तस्य स्वजनस्यापि रक्षिता।
रक्षिता जीवलोकस्य धर्मस्य च परन्तपः॥ ६॥
तस्य सत्याभिसन्धस्य वृद्धस्य वचनात् पितुः।
सभार्य्यः सह च भ्रात्रा वीरः प्रव्रजितो वनम्॥ ७॥
तेन तत्र महारण्ये मृगयां परिधावता।
राक्षसा निहताः शूरा बहवः कामरूपिणः॥ ८॥
जनस्थानवधं श्रुत्वा निहतौ खरदूषणौ।
ततस्त्वमर्षापहृता जानकी रावणेन तु॥ ९॥
वञ्चयित्वा वने रामं मृगरूपेण मायया।
स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम्॥ १०॥
आससाद वने मित्रं सुग्रीवं नाम वानरम्।
ततः स वालिनं हत्वा रामः परपुरञ्जयः॥ ११॥
आयच्छत् कपिराज्यन्तु सुग्रीवाय महात्मने।

पार्थिवव्यञ्जनैः छत्रचामरादिभिर्बाह्यैः सामुद्रिकोक्तैः शारीरैश्च राजचिह्नैर्युक्तः सुखदः मित्राणाम्॥ ३॥ ४॥ ५॥ ६॥

सत्याभिसन्धस्य सत्यसङ्कल्पस्य॥ ७॥

मृगयामुद्दिश्य धावता॥ ८॥

जनस्थानवधं खरदूषणौ निहतौ च श्रुत्वा रावणेनामर्षापहृता वैरेणापहृता तु॥ ९॥

सुग्रीवेणाभिसन्दिष्टा हरयः कामरूपिणः ॥ १२ ॥
दिक्षु सर्वासु तां देवीं विचिन्वन्तः सहस्रशः ।
अहं सम्पातिवचनाच्छतयोजनमायतम् ॥ १३ ॥
तस्या हेतोर्विशालाक्ष्याः समुद्रं वेगवान् प्लुतः ।
यथारूपां यथावर्णां यथालक्ष्मवतीञ्च ताम् ॥ १४ ॥
अश्रौषं राघवस्याहं सेयमासादिता मया ।
विररामैवमुक्त्वा स वाचं वानरपुङ्गवः ॥ १५ ॥
जानकी चापि तत् श्रुत्वा विस्मयं परमं गता ।
ततः सा वक्रकेशान्ता सुकेशी केशसंवृतम् ।
उन्नम्य वदनं भीरुः शिंशपामन्ववैक्षत ॥ १६ ॥

निशम्य सीता वचनं कपेश्च
दिशश्च सर्वाः प्रदिशश्च वीक्ष्य ।
स्वयं प्रहर्षं परमं जगाम
सर्वात्मना राममनुस्मरन्ती ॥ १७ ॥

मायया मृगरूपेण मारीचेन करणेन रामं वञ्चयित्वेत्यर्थः ॥ १० ॥
॥ ११ ॥ १२ ॥ १३ ॥

तस्या हेतोस्तदन्वेषणहेतोः । यथारूपां यादृग्रूप यादृग्वर्णां यादृक्चिह्नवतीं तां सीताम् ॥ १४ ॥

राघवस्य मुखादहमश्रौषम् । सेयमासादिता दृष्टा इहेति शेषः ॥ १५ ॥

सा तिर्य्यगूर्द्धञ्च तथा ह्यधस्तान्
निरीक्षमाणा तमचिन्त्यबुद्धिम्।
ददर्श पिङ्गाधिपतेरमात्यं
वातात्मजं सूर्य्यमिवोदयस्थम्॥ १८॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकत्रिंशः सर्गः॥ ३१॥

केशसंवृतम् असंस्कारतः प्रकीर्णत्वात्॥ १६॥ १७॥ १८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकत्रिंशः सर्गः॥ ३१॥

---

## द्वात्रिंशः सर्गः ।

ततः शाखान्तरे लीनं दृष्ट्वा चलितमानसा ।
वेष्टितार्जुनवस्त्रं तं विद्युत्सङ्घातपिङ्गलम् ॥ १ ॥
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् ।
फुल्लाशोकोत्कराभासं तप्तचामीकरेक्षणम् ॥ २ ॥
साथ दृष्ट्वा हरिश्रेष्ठं विनीतवदवस्थितम् ।
मैथिली चिन्तयामास विस्मयं परमं गता ॥ ३ ॥
अहो भीममिदं सत्त्वं वानरस्य दुरासदम् ।
दुर्निरीक्ष्यमिदं मत्वा पुनरेव मुमोह सा ॥ ४ ॥
विललाप भृशं सीता करुणं भयमोहिता ।
राम रामेति दुःखार्त्ता लक्ष्मणेति च भामिनी ॥ ५ ॥

लीनं दृष्ट्वा अस्फुरन्तं दृष्ट्वा चलितमानसा । अयं स्वप्नोऽयमपि मायामृगो वेति चलितचित्ता । पुनः सम्यक् निरीक्ष्याख्यानविशेषणं कपिं ददर्श । वेष्टितं परिहितमर्जुनवर्णं वस्त्रं येन तम् ॥ १ ॥ २ ॥ ३ ॥

वानरस्य निर्धारणे षष्ठी जात्येकवचनम् । वानराणां मध्ये इदं सत्त्वं जीवः भीमं प्राकृतप्राणिभयावहम् । अतएव तद्दुरासदं दुर्निरीक्ष्येति मत्वा । पुनरपि मायैवयमिति भयान्मुमोह ॥ ४ ॥

रुरोद सहसा सीता मन्दमन्दस्वरा सती।
साथ दृष्ट्वा हरिवरं विनीतवदुपागतम्।
मैथिली चिन्तयामास स्वप्नोऽयमिति भामिनी॥ ६॥

सा वीक्षमाणा पृथुभग्नवक्त्रं
शाखामृगेन्द्रस्य यथोक्तकारम्।
ददर्श पिङ्गप्रवरं महार्हं
वातात्मजं बुद्धिमतां वरिष्ठम्॥ ७॥

सा तं समीक्ष्यैव भृशं विपन्ना
गतासुकल्पेव बभूव सीता।
चिरेण संज्ञां प्रतिलभ्य चैवं
विचिन्तयामास विशालनेत्रा॥ ८॥

अथ भयमोहिता सती भृशं करुणं दीनं विललाप। विलाप-प्रकारो रामेत्यादि॥ ५॥

मन्दमन्दस्वरा। अस्यं दैवगत्या वानरवे राक्षसो मा जानन्त्वि-त्यतिमन्दस्वररोदनम्। विनीतवद्विनीततयोपस्थितम्। स्वप्नः जाग्रत्-कल्पस्वप्न इत्यर्थः॥ ६॥

स्वप्नत्वचिन्तापूर्वकमेव पुनर्दर्शनमुपन्यस्यति। सेति। किमिदं वाक्यं राक्षस्यः श्रुतवत्य इति परितो वीक्षमाणा सा; पृथु भग्नं वज्रप्रहाराद्वक्त्रं यस्य तम्। शाखामृगेन्द्रस्य यथोक्तकारं कामाद्या-कारम्। यद्वा यथोक्तवैयिलाङ्गुनवत्वाद्याकारं छान्दसो ह्रस्वः। पिङ्ग-प्रवरं कपिश्रेष्ठमिति निश्चयेन ददर्श॥ ७॥

स्वप्नो मयायं विकृतोऽद्य दृष्टः
शाखामृगः शास्त्रगणैर्निषिद्धः।
स्वस्त्यस्तु रामाय सलक्ष्मणाय
तथा पितुर्मे जनकस्य राज्ञः॥ ९॥

स्वप्नो हि नायं नहि मेऽस्ति निद्रा
शोकेन दुःखेन च पीड़िताया:।
सुखं हि मे नास्ति यतो विहीना
तेनेन्दुपूर्णप्रतिमाननेन॥ १०॥

रामेति रामेति सदैव बुद्धा
विचिन्त्य वाचा ब्रुवती तमेव।
तस्यानुरूपञ्च कथां तदर्था-
मेवं प्रपश्यामि तथा शृणोमि॥ ११॥

सा तं कपिरूपं रावणमित्येव समीक्ष्य भृशं विसंज्ञा चित्तक्षोभात्। गतासुकल्पेव॥ ८॥

एवं चिन्तयामासेत्यत्रैवं शब्दार्थः स्वप्न इत्यादि। दृश्यमानोऽयं स्वप्नो मया विकृत एव दृष्टः। कुतस्तत्राह,—शाखामृग इत्यादि। एवं दुःस्वप्नं मत्वा। स्वस्ति प्रार्थयते जनकस्य तदंशस्य॥ ९॥

अथ स्वप्नहेत्वभावान्नायं स्वप्न इत्याह,—स्वप्नो होति। स्वप्नस्य निद्रामूलत्वात् निद्रायाश्च सुखमूलत्वात् रामवियोगेन च मे सुखाभावादिति भावः॥ १०॥

अहं हि तस्याद्य मनोभवेन
सम्पीड़िता तद्गतसर्वभावा।
विचिन्तयन्ती सततं तमेव
तथैव पश्यामि तथा शृणोमि ॥ १२ ॥

मनोरथः स्यादिति चिन्तयामि
तथापि बुद्धग्रापि वितर्कयामि।
किं कारणं तस्य हि नास्ति रूपं
सुव्यक्तरूपश्च वदत्ययं माम् ॥ १३ ॥

सदा रामेति विचिन्त्य वाचा तमेव ब्रुवन्त्यहं तस्य चिन्तनादेरनुरूपं यथा तथा शृणोमि। श्रयमाणाञ्च कथां तथा तेन प्रकारेण तदर्थामेव चिन्त्याद्यनुरूपार्थमेव पश्यामि ॥ ११ ॥

उक्तमेवार्थं विवृणोति। अहं हीति ॥ १२ ॥

अथ मनोरथमात्रमेतदिति सम्भाव्य तदपि नेति निश्चिनोति मनोरथ इति मनोराज्यमित्यर्थः। स नेत्याह,—तथापीति। तथैवेत्यर्थः। यथा मनोरथेनालोच्यते तथैव बुद्ध्यापि निश्चयात्मकान्तःकरणवृत्त्यापि विषयीकृतं तर्कयामि मनोराज्यं सङ्कल्पविकल्पपरं चञ्चलस्थितिरूपम्। बुद्धिस्तु निश्चयात्मिका स्थिरा चेति विरुद्धमित्यर्थः। ननु तर्हि मनोराज्यत्वमेवास्तु। इत्यरुचावारोपितं तत्राह,—किं कारणमिति। मनोराज्यत्वाभाव इति शेषः। उत्तरं तस्य हि मनोराज्यभूतार्थस्य नास्ति रूपम् अनुभवार्हरूपं नास्तीति हि प्रसिद्धम्। प्रकृते तु साद्दश्यं रूपमस्तीत्याह,—सुव्यक्तेति। यो मां वदति सुव्यक्त-

नमोऽस्तु वाचस्पतये सवज्रिणे
स्वयम्भुवे चैव हुताशनाय।
अनेन चोक्तं यदिदं ममाग्रतो
वनौकसा तच्च तथास्तु नान्यथा ॥ १४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
द्वात्रिंशः सर्गः ॥ ३२ ॥

रूपो दृश्यते। सुव्यक्तरूपञ्च वदति। यत इत्यर्थः। मनोराज्यार्थोऽदृष्टनष्टो बाह्येन्द्रियजस्थिरानुभवानर्होऽतोऽवास्तव एवायमिति भावः ॥ १३ ॥

एवं हनूमद्वचसो वास्तवत्वं निर्णीयानाप्तप्रणीतत्वेन मिथ्यार्थकत्वस्यापि सम्भवात्तद्व्यावृत्तये देवान् प्रणमति। नमोऽस्त्विति। वाचस्पतित्वेन वाचः सत्यत्वसम्पादनयोग्यता। वज्रिणोऽपि बृहस्पतितः सत्यवाग्रूपब्रह्मोपाराधनयथार्थरूपमन्त्रलाभात् तदुपासकत्वेन वाचः सत्यत्वसम्पादनयोग्यता। स्वयम्भुवे सत्यादिरूपब्रह्मणे। वागधिष्ठातृदेवतात्वाग्नये नतिः ॥ १४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ।

---

सोऽवतीर्य्य द्रुमात्तस्माद्विद्रुमप्रतिमाननः ।
विनीतवेषः कृपणः प्रणिपत्योपसृत्य च ॥ १ ॥
तामब्रवीन्महातेजा हनूमान् मारुतात्मजः ।
शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ २ ॥
का नु पद्मपलाशाक्षि क्लिष्टकौशेयवासिनि ! ।
द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिता ॥ ३ ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ।
पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥ ४ ॥

स इति । अत्यूर्द्ध्वशाखातः सीतासम्मुखशाखामवतीर्य्य द्रुमशब्दस्तदवयवपरः । अत एवाग्रे द्रुमाश्रितमिति वक्ष्यति । कृपणः मातुः सीतायाः दुःखदर्शनाद्दीनः दूरात् प्रणिपत्य ततः उपसृत्य समीपमागत्य ॥ १ ॥

राक्षसीनां निशाजागरणे निद्राजाड्यात्त्रिजटास्वप्नश्रवणजन्यभयेनात्मत्राणाय सीतैकशरणत्वेनोपगमाच्च दैवानुग्रहाच्चाप्रबुद्धेषु सीताहनूमतोः संलाप इति बोध्यम् ॥ २ ॥

अथ लिङ्गैः सीतेति निश्चयेऽपि नयेन साक्षाद्वाचयितुमजानान इव पृच्छति । का नु इति ॥ ३ ॥

विप्रकीर्णं भिन्नघटादिव प्रस्रुतम् ॥ ४ ॥

सुराणामसुराणाञ्च नागगन्धर्वरक्षसाम् ।
यक्षाणां किन्नराणाञ्च का त्वं भवसि शोभने ! ॥ ५ ॥
का त्वं भवसि रुद्राणां मरुतां वा वरानने ! ।
वसूनां वा वरारोहे ! देवता प्रतिभासि मे ॥ ६ ॥
किन्नु चन्द्रमसा हीना पतिता विबुधालयात् ।
रोहिणी ज्योतिषां श्रेष्ठा श्रेष्ठा सर्वगुणाधिका ॥ ७ ॥
का त्वं भवसि कल्याणि ! त्वमनिन्दितलोचने ! ।
कोपाद्वा यदि वा मोहाद्भर्त्तारमसितेक्षणे ! ।
वसिष्ठं कोपयित्वा त्वं वाऽसि कल्याण्यरुन्धती ॥ ८ ॥
कोऽनु पुत्रः पिता भ्राता भर्त्ता वा ते सुमध्यमे ! ।
अस्माल्लोकादमुं लोकं गतं त्वमनुशोचसि ॥ ९ ॥

क्लिष्टेत्यादि श्लोकद्वयोत्तरार्थस्यैव प्रपञ्चः । सुराणामिति । सुरादि-जातिमध्ये त्वं का किं जातीया ॥ ५ ॥

देवता प्रतिभासि । दिव्यरूपलक्षणवत्त्वादिति भावः ॥ ६ ॥

कान्त्या रोहिणीत्याशङ्का । श्रेष्ठैः सर्वगुणैरधिका । एतदर्थे का त्वं भवसि कल्याणि त्वमनिन्दितलोचने इत्यर्द्धं प्रक्षिप्तम् ॥ ७ ॥

कोपादिति । अत्रापि किन्त्विति सम्बध्यते कोप[illegible]ना वसिष्ठं कोपयित्वा इहागता कल्याण्यरुन्धती किन्नु वाऽसि । पातिव्रत्यादरुन्ध-तीत्याशङ्का ॥ ८ ॥

अथ शोककारणं पुत्रादिवियोगोऽस्त्यथेति पृच्छति । कोऽनु पुत्र

रोदनादतिनिःश्वासाद्भूमिसंस्पर्शनादपि।
न त्वां देवीमहं मन्ये राज्ञः संज्ञावधारणात् ॥ १० ॥
व्यञ्जनानि हि ते यानि लक्षणानि च लक्षये।
महिषी भूमिपालस्य राजकन्या च मे मता ॥ ११ ॥
रावणेन जनस्थानात् बलात्प्रमथिता यदि।
सीता त्वमसि भद्रन्ते तन्ममाचक्ष्व पृच्छतः ॥ १२ ॥
यथा हि तव वै दैन्यं रूपञ्चाप्रतिमानुषम्।
तपसा चान्वितो वेषस्त्वं राममहिषी ध्रुवम् ॥ १३ ॥
सा तस्य वचनं श्रुत्वा रामकीर्त्तनहर्षिता।
उवाच वाक्यं वैदेही हनूमन्तं द्रुमाश्रितम् ॥ १४ ॥
पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः।

इति अस्माल्लोकादमुं लोकं परलोकं गतं यं त्वमनुशोचसि कः पुत्रादिः कोऽन्विति योजना ॥ ९ ॥

इदानीं देवयोनित्वशङ्कां स्वयमेव निवर्त्तयति। रोदनादिति। अशुसम्बन्धो भूस्पर्शश्च देवानां नास्तीति श्रुतम्। तदत्वात्त्वां देवीं न मन्ये। किञ्च राज्ञो रामस्य संज्ञावधारणान्नामग्रहणात् ॥ १० ॥

भूमिपालस्य रामस्य महिषीति मे मतिः। यतो व्यञ्जनानि राममहिषीत्वप्रकाशानि ते सामुद्रिकलक्षणानि च लक्षयेऽतो रावणेन जनस्थानात् बलात् प्रमथिता प्रमथ्य हृता यदि सीता त्वं तदा पृच्छतो ममाचक्ष्व तत्त्वं ब्रूहि ते भद्रमस्तु ॥ ११ ॥ १२ ॥

स्नुषा दशरथस्याहं शत्रुसैन्यप्रणाशिनः ॥ १५ ॥
दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम्ना चोक्ताहं भार्य्या रामस्य धीमतः ॥ १६ ॥
समा द्वादश तत्राहं राघवस्य निवेशने ।
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ १७ ॥
ततस्त्रयोदशे वर्षे राज्ये चेक्ष्वाकुनन्दनम् ।
अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे ॥ १८ ॥
तस्मिन् सम्भ्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्त्तारमिदं वचनमब्रवीत् ॥ १९ ॥
न पिबेयं न खादेयं प्रत्यहं मम भोजनम् ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ २० ॥
यत्तदुक्तं त्वया वाक्यं प्रीत्या नृपतिसत्तम ! ।
तच्चेन्न वितथं कार्य्यं वनं गच्छतु राघवः ॥ २१ ॥
स राजा सत्यवाग्देव्या वरदानमनुस्मरन् ।

अनुसृत्यापि त्वत्समीपनिस्थयो ममास्तीति प्रौढ्याटस्य,—यथार्हीति। अपरोक्षानुभवविषयामित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥

अहं नाम्ना सीता इति ॥ १६ ॥ १७ ॥ १८ ॥

नाम प्रसिद्धमित्यर्थः ॥ १९ ॥

प्रत्यहं यन्मम भोजनं भोज्यं वस्तु तन्न पिबेयं न खादेयमित्यन्वयः ॥ २० ॥

मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरमप्रियम् ॥ २२ ॥
ततस्तं स्थविरो राजा सत्यधर्मे व्यवस्थितः ।
ज्येष्ठं यशस्विनं पुत्रं रुदन् राज्यमयाचत ॥ २३ ॥
स पितुर्वचनं श्रीमानभिषेकात् परं प्रियम् ।
मनसा पूर्वमासाद्य वाचा प्रतिगृहीतवान् ॥ २४ ॥
दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्न चानृतम् ।
अपि जीवितहेतोर्हि रामः सत्यपराक्रमः ॥ २५ ॥
स विहायोत्तरीयाणि महार्हाणि महायशाः ।
विसृज्य मनसा राज्यं जनन्यै मां समादिशत् ॥ २६ ॥
साहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी ।
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥ २७ ॥
प्रागेव तु महाभागः सौमित्रिर्मित्रनन्दनः ।
पूर्वजस्यानुयात्रार्थे कुशचीरैरलङ्कृतः ॥ २८ ॥

तद्देवासुरे युद्धे वधदानरूपम् ॥ २१ ॥ २२ ॥

राज्यमयाचत भरताय दातुमिति शेषः ॥ २३ ॥

अभिषेकादपि परमधिकं प्रियं यथा भवति तथा मनसा पूर्वमङ्गीकृत्य वाचाप्यङ्गीकृतवान् ॥ २४ ॥

सीता रामं स्तौति । दद्यादिति ॥ २५ ॥

समादिशत् बहुप्रकारं रक्षणाय निवेदितवान् ॥ २६ ॥

तस्याग्रतः प्रस्थिता वनचारिणी अभूवमिति शेषः ॥ २७ ॥ २८ ॥

ते वयं भर्त्तुरादेशं बहुमान्यदृढव्रताः।
प्रविष्टा स्म पुरादृष्टं वनं गम्भीरदर्शनम् ॥ २९ ॥
वसतो दण्डकारण्ये तस्याहममितौजसः।
रक्षसापहृता भार्य्या रावणेन दुरात्मना ॥ ३० ॥
द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः।
ऊर्द्ध्वं द्वाभ्यान्तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

भर्त्तुरादेशं प्रत्ययस्य। पुरा अदृष्टमिति च्छेदः ॥ २९ ॥ ३० ॥
जीवितानुग्रहः जीवितानुग्रहः कालः कृतः परिच्छिन्नः ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ।

---

तस्यास्तद्वचनं श्रुत्वा हनूमान् हरिपुङ्गवः ।
दुःखाद्दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ १ ॥
अहं रामस्य सन्देशाद्देवि ! दूतस्तवागतः ।
वैदेही कुशली रामः स त्वां कौशलमब्रवीत् ॥ २ ॥
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ।
स त्वां दाशरथी रामो देवि ! कौशलमब्रवीत् ॥ ३ ॥
लक्ष्मणश्च महातेजा भर्त्तुस्तेऽनुचरः प्रियः ।
कृतवाञ्छोकसन्तप्तः शिरसा तेऽभिवादनम् ॥ ४ ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः ।

दुःखाद्दुःखाभिभूताया इत्यलुगार्षः । दुःखपरम्पराखिन्नाया इत्यर्थः ॥ १ ॥

तव समीपमिति शेषः ॥ २ ॥

ब्राह्ममस्त्रं यो वेद । अनेन सर्वास्त्रपारगत्वमुक्तम् । तदस्त्रदेवतायाः ब्रह्मणः सर्वजगत्समष्टित्ववत् तदस्त्रस्यापि सर्वास्त्रसमष्टित्वात् । वेदांश्चेत्यनेन सर्वकर्ममार्गपारगत्वम् । वेदविदां वर इत्यनेन ज्ञानमार्गपारगत्वमुक्तम् ॥ ३ । ४ ॥

प्रतिसंहृष्टसर्वाङ्गो हनूमन्तमथाब्रवीत् ॥ ५ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मा।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६ ॥
तयोः समागमे तस्मिन् प्रीतिरुत्पादिताऽद्भुता।
परस्परेण चालापं विश्वस्तौ तौ प्रचक्रतुः ॥ ७ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् मारुतात्मजः।
सीतायाः शोकतप्तायाः समीपमुपचक्रमे ॥ ८ ॥

संहृष्टसर्वाङ्गी पुलकितसर्वाङ्गी ॥ ५ ॥

असम्भावितमपि रामप्रसङ्गं जीवितधारणेन प्राप्तत्वात् तत्संवादिनीं लौकिकीं गाथां स्मरति। कल्याणीति। गाथायाः संवादित्वदर्शनजो हर्षो बतेत्यनेन सूच्यते। कल्याणी सत्यार्थेति मा मां प्रतिभाति मज्ज्ञानविषया भवतीत्यर्थः। गाथां पठति। एतीति। जीवन्नमवेत्येवातो बहुदुःखं साढापि जीवितव्यमिति भावः ॥ ६ ॥

तस्मिन् तस्मिन् काले रामलक्ष्मणकुशलवचःश्रवणकाले। तयोः रामलक्ष्मणयोः समागमकाल इव सीतायास्तेन वचसा अद्भुता अचिन्त्यस्वरूपा प्रीतिरुत्पादिता किञ्च तयोः सीताहनूमतोस्तस्मिन् समागमे परस्परस्याद्भुता प्रीतिरुत्पादिता देवी दृष्टेति हनूमतः प्रीतिः। रामदूतो दृष्ट इति देव्याः प्रीतिः। अतस्तौ विश्वस्तौ भूत्वा परस्परेणालापं चक्रतुः ॥ ७ ॥

तद्वचनं कल्याणीत्यादिसीतावचनम्। समीपमुपचक्रमे तच्छाखातोऽपि अर्वाचीनां शाखामवरुह्य समीपं गन्तुं यत्नवानभूदित्यर्थः ॥ ८ ॥

यथा यथा समीपं स हनूमानुपसर्पति।
तथा तथा रावणं सा तं सीता परिशङ्कते ॥ ९ ॥
अहो धिक् धिक् कृतमिदं कथितं हि यदस्य मे।
रूपान्तरमुपागम्य स एवायं हि रावणः ॥ १० ॥
तामशोकस्य शाखान्तु विमुक्ता शोककर्शिता।
तस्यामेवानवद्याङ्गी धरण्यां समुपाविशत् ॥ ११ ॥
अवन्दत महाबाहुस्ततस्तां जनकात्मजाम्।
सा चैनं भयसन्त्रस्ता भूयो नैनमुदैक्षत ॥ १२ ॥
तं दृष्ट्वा वन्दमानन्तु सीता शशिनिभानना।
अब्रवीद्दीर्घमुच्छ्वस्य वानरं मधुरस्वरा ॥ १३ ॥
मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम्।

परिशङ्कते परिशङ्कते स्म। रामकुशलकथनेन विश्वस्तापि रावण-मायाबाहुल्यस्मरणेनाविश्वासादिति भावः ॥ ९ ॥

यदस्य यदनेन कथितं कथनं कृतं वार्त्ता कृता इदं धिग्धिक् कथितमिति भावे निष्ठा। तत्र हेतुमाह,—रूपान्तरमिति। यः पूर्वं मायया मामपाहरत् स एव रावणो रूपान्तरं प्राप्य वर्त्तत इत्यर्थः ॥ १० ॥

अशोकस्य अशोकवनस्य शिंशपावृक्षस्येत्यर्थः ॥ ११ ॥

तां धरण्युपविष्टां अवन्दत नमस्कृतवान्। एनं दृष्ट्वा भयसन्त्रस्ता भूयः पुनरेनं नापश्यत् ॥ १२ ॥ १३ ॥

उत्पादयसि मे भूयः सन्तापं तन्न शोभनम् ॥ १४ ॥
स्वं परित्यज्य रूपं यः परिब्राजकरूपवान् ।
जनस्थाने मया दृष्टस्त्वं स एव हि रावणः ॥ १५ ॥
उपवासकृशां दीनां कामरूप ! निशाचर ! ।
सन्तापयसि मां भूयः सन्तापं तन्न शोभनम् ॥ १६ ॥
अथवा नैतदेवं हि यन्मया परिशङ्कितम् ।
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ॥ १७ ॥
यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते ।
पृच्छामि त्वां हरिश्रेष्ठ ! प्रिया रामकथा हि मे ॥ १८ ॥
गुणान् रामस्य कथय प्रियस्य मम वानर ! ।
चित्तं हरसि मे सौम्य ! नदीकूलं यथा रयः ॥ १९ ॥

भूयः सन्तापं यदुत्पादयसि तन्न शोभनम् ॥ १४ ॥

सर्वं रूपकरणमपि सुकरमेवेत्याह,- स्वमित्यर्द्धेति ॥ १५ ॥ १६ ॥

एवं रावणादेरात्म्याद्धनूमन्तं राक्षसमाशङ्क्य तद्दर्शनजनितमात्मनो मनःप्रसादमालोच्य तां शङ्कां निराचष्टे । अथवेति । यन्मया परिशङ्कितं रावणत्वमेतदेवं न यतस्तव दर्शनान्मम मनसः प्रीतिरुत्पन्ना । रावणत्वे हि सा नोत्पद्येतेति भावः ॥ १७

तव मयि रामदूतत्वनिश्चयः कथं स्यादिति चेत्तत्राह,—यदीति । पृच्छामीति रामकथामिति शेषः । तदेवाह,—प्रिया रामकथा हीति ॥ १८ ॥

अहो स्वप्नस्य सुखता याऽहमेवं चिराहृता।
प्रेषितं नाम पश्यामि राघवेण वनौकसम् ॥ २० ॥
स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम्।
पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी ॥ २१ ॥
नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम्।
न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ॥ २२ ॥
किन्नु स्याच्चित्तमोहोऽयं भवेद्वातगतिस्त्वियम्।
उन्मादजो विकारो वा स्यादियं मृगतृष्णिका ॥ २३ ॥

चित्तं हरसि चित्तं शिथिलयसि विश्वासहेतुत्वसम्पादनादिति भावः। रयो नदीवेगः ॥ १९ ॥

रामदूतदर्शनं नेदं तदागमनस्यासम्भावितत्वात् प्रायेणायं स्वप्नोऽथापि मे असौ सुखावह इत्याहाहो इति। या चिराहृताहमेव राघवेण प्रेषितं वनौकसं पश्यामि नाम। अस्वप्नत्वेऽन्यासामपि दर्शनं स्यादित्याशयः ॥ २० ॥

अथ रामादिदर्शनरूपस्वप्नोऽपि मे न जायत इति खिद्यति। स्वप्नेऽपीति। मत्सरी मत्सरेण मत्समीपं सोऽपि नायातीति भावः ॥ २१ ॥

स्वप्नत्वमस्य नेत्याह,—नाहं स्वप्नमिति। प्राप्तश्चाभ्युदय इति। तथा मनःसन्तोषोदयात् प्राप्तप्राय इत्यर्थस्तस्मान्न स्वप्नः ॥ २२ ॥

पुनरुत्प्रेक्षते। किं न्विति। चित्तमोहो निरन्तररामध्यानजनित-संस्कारोपनीतदूतदर्शनसम्भावनादिविषयो भ्रमः। वातगतिः भूतावेशादि-

अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः ।
सम्बुध्ये चाहमात्मानमिमञ्चापि वनौकसम् ॥ २४ ॥
इत्येवं बहुधा सीता सम्प्रधार्य्य बलाबलम् ।
रक्षसां कामरूपत्वान् मेने तं राक्षसाधिपम् ॥ २५ ॥
एतां बुद्धिं तदा कृत्वा सीता सा तनुमध्यमा ।
न प्रतिव्याजहाराथ वानरं जनकात्मजा ॥ २६ ॥
सीताया निश्चितं बुद्ध्वा हनूमान् मारुतात्मजः ।
श्रोत्रानुकूलैर्वचनैस्तदा तां सम्प्रहर्षयन् ॥ २७ ॥

जनितो भ्रमः । उन्मादो विरहिणां पित्तोद्रेकरूपावस्थाविशेषजो भ्रमः । मृगतृष्णिका तद्दत्प्रत्यक्षो भ्रमः ॥ २३ ॥

बाधराहित्यात् भ्रमचतुष्टयमपि निरस्यति अथवेति । मोहोऽप्युन्मादस्य लक्षणमिव लक्षणं यस्य सः । एवञ्चोन्मादनिराकरणात् सोऽपि निरस्तः । अर्थतो भूतावेशोऽपि निरस्तः । यतोऽहमात्मानमिमं समीपस्थं वनौकसञ्च सम्बुध्ये सम्यक् जानामि निर्बाधं जानामीत्यर्थः । उक्तानां सर्वेषामविवेकलक्षणत्वान्मम विवेकसत्त्वात्तेऽसम्भाविताः । मृगतृष्णाभ्रमोऽपि दूरत्वदोषाज्जायते वानरस्य समीप एवेति स पक्षोऽप्ययुक्त इति भावः ॥२४॥

बलाबलं बलं रक्षसां कामरूपबलम् । अबलं रामदूतस्य वानरस्यात्रागमनसामर्थ्याभावः ॥ २५ ॥ २६ ॥

निश्चितं रावणत्वनिश्चयं श्रोत्रानुकूलैर्वचनैः रामगुणकथनरूपैः । विश्वासार्थं गुणान् रामस्य कथयेति सीतोक्तेरिति भावः । सम्प्रहर्षयन् वक्ष्यमाणं वचः कथयामासेति शेषः ॥ २७ ॥

आदित्य इव तेजस्वी लोककान्तः शशी यथा ।
राजा सर्वस्य लोकस्य देवो वैश्रवणो यथा ॥ २८ ॥
विक्रमेणोपपन्नश्च यथा विष्णुर्महायशाः ।
सत्यवादी मधुरवाग्देवो वाचस्पतिर्यथा ॥ २९ ॥
रूपवान् सुभगः श्रीमान् कन्दर्प इव मूर्त्तिमान् ।
स्थानक्रोधे प्रहर्त्ता च श्रेष्ठो लोके महारथः ॥ ३० ॥
बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः ।
अपकृष्याश्रमपदान् मृगरूपेण राघवम् ॥ ३१ ॥
शून्ये येनापनीतासि तस्य द्रक्ष्यसि तत्फलम् ।
अचिराद्रावणं संख्ये यो वधिष्यति वीर्य्यवान् ॥ ३२ ॥
क्रोधप्रमुक्तैरिषुभिर्ज्वलद्भिरिव पावकैः ।
तेनाहं प्रेषितो दूतस्त्वत्सकाशमिहागतः ॥ ३३ ॥
त्वद्वियोगेन दुःखार्त्तः स त्वां कौशलमब्रवीत् ।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्द्धनः ॥ ३४ ॥
अभिवाद्य महाबाहुः स त्वां कौशलमब्रवीत् ।
रामस्य च सखा देवि ! सुग्रीवो नाम वानरः ॥ ३५ ॥
राजा वानरमुख्यानां स त्वां कौशलमब्रवीत् ।

राजा धनधान्यादिप्रदानेन सर्वलोकस्य रक्षकः ॥ २८ ॥ २९ ॥
स्थानक्रोधे उचितक्रोधविषये क्रोधोचित्ये प्रहर्त्तेति यावत् ॥ ३० ॥
तं राघवमाश्रमादपकृष्य शून्ये आश्रमे येनापनीता तस्य रक्षसस्त्वं

नित्यं स्मरति ते रामः स सुग्रीवः स लक्ष्मणः ॥ ३६ ॥
दिष्ट्या जीवसि वैदेहि ! राक्षसीवशमागता ।
न चिराद्द्रक्ष्यसे रामं लक्ष्मणञ्च महारथम् ॥ ३७ ॥
मध्ये वानरकोटीनां सुग्रीवञ्चामितौजसम् ।
अहं सुग्रीवसचिवो हनूमान्नाम वानरः ॥ ३८ ॥
प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् ।
कृत्वा मूर्ध्नि तदा न्यासं रावणस्य दुरात्मनः ॥ ३९ ॥
त्वां द्रष्टुमुपयातोऽहं समाश्रित्य पराक्रमम् ।
नाहमस्मि तथा देवि ! यथा मामवगच्छसि ।
विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चतुस्त्रिंशः सर्गः ॥ ३४ ॥

एवं त्वदपहारपापफलं तेनानुभूयमानं द्रक्ष्यसि । तदेवाह.--अचिरा-
दिति । न चिरादिति पाठान्तरम् । गो वधिष्यति तेनेत्यर्थः ॥ ३१ ॥
॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥
यथा मामवगच्छसि मायावी रावण इति न तथाहमस्मि ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

## पञ्चत्रिंशः सर्गः ।

तान्तु रामकथां श्रुत्वा वैदेही वानरर्षभात् ।
उवाच वचनं सान्त्वमिदं मधुरया गिरा ॥ १ ॥
क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ।
वानराणां नराणाञ्च कथमासीत् समागमः ॥ २ ॥
यानि रामस्य चिह्नानि लक्ष्मणस्य च वानर ! ।
तानि भूयः समाचक्ष्व न मां शोकः समाविशेत् ॥ ३ ॥
कीदृशं तस्य संस्थानं रूपं तस्य च कीदृशम् ।
कथमूरू कथं बाहू लक्ष्मणस्य च शंस मे ॥ ४ ॥
एवमुक्तस्तु वैदेह्या हनूमान् मारुतात्मजः ।
ततो रामं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ५ ॥
जानन्ती बत दिष्ट्या मां वैदेहि ! परिपृच्छसि ।
भर्त्तुः कमलपत्राक्षि ! संस्थानं लक्ष्मणस्य च ॥ ६ ॥

तान्त्विति । आदित्य इवेत्यादिका ॥ १ ॥ २ ॥

तानि रामलक्ष्मणचिह्नानि । भूयोऽधिकं विशिष्य समाचक्ष्व येन मां शोको न समाविशेत् ॥ ३ ॥

संस्थानमवयवसन्निवेशः रूपमाकारः गौरपीतादिवर्णश्च ॥ ४ ॥ ५ ॥

यानि रामस्य चिह्नानि लक्ष्मणस्य च यानि वै ।
लक्षितानि विशालाक्षि ! वदतः शृणु तानि मे ॥ ७ ॥
रामः कमलपत्राक्षः पूर्णचन्द्रनिभाननः ।
रूपदाक्षिण्यसम्पन्नः प्रसूतो जनकात्मजे ! ॥ ८ ॥
तेजसादित्यसङ्काशः क्षमया पृथिवीसमः ।
बृहस्पतिसमो बुद्ध्या यशसा वासवोपमः ॥ ९ ॥
रक्षिता जीवलोकस्य स्वजनस्य च रक्षिता ।
रक्षिता स्वस्य वृत्तस्य धर्मस्य च परन्तपः ॥ १० ॥
रामो भामिनि ! लोकस्य चातुर्वर्ण्यस्य रक्षिता ।
मर्य्यादानाञ्च लोकस्य कर्त्ता कारयिता च सः ॥ ११ ॥

जानन्ती दिष्ट्या इत्येव रामदूतं मां जानन्ती यदि पृच्छसि रावणभ्रमं त्यक्त्वा तदा त्वया यानि संस्थानादीनि पृष्टानि यथा च मया लक्षितानि दृष्टानि तानि सर्वाणि वदतो मत्तः शृणु ॥ ६ ॥ ७ ॥

रूपदाक्षिण्यसम्पन्नः प्रसूत इति । जन्मना सहैवोक्ता वक्ष्यमाणाश्च गुणा जाता इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

रामो भामिनि लोकस्येति । सर्वस्य कर्त्ता हर्त्ता भर्त्ता चेति शेषः । अनेन सृष्टिस्थितिसंहारकर्तृत्वरूपं ब्रह्मलक्षणं रामस्योक्तं गूढम् । एवं चाग्रे तत्स्वरूपं भगवतैव स्वमाया तिरस्कारयोनिरासात् इति बोध्यम् । लोकस्य मर्य्यादानां वर्णाश्रममर्य्यादानां कर्त्ता भगवदवतारत्वात् । कारयिता चाचारतया अवतीर्णरूपेण चातुर्वर्ण्यरक्षिता च ॥ ११ ॥

अर्चिष्मानर्चितोऽत्यर्थं ब्रह्मचर्य्यव्रते स्थितः।
साधूनामुपकारज्ञः प्रचारज्ञश्च कर्मणाम् ॥ १२ ॥
राजनीत्यां विनीतश्च ब्राह्मणानामुपासकः।
ज्ञानवान् शीलसम्पन्नो विनीतश्च परन्तपः ॥ १३ ॥
यजुर्वेदविनीतश्च वेदविद्भिः सुपूजितः।
धनुर्वेदे च वेदे च वेदाङ्गेषु च निष्ठितः ॥ १४ ॥
विपुलांसो महाबाहुः कम्बुग्रीवः शुभाननः।
गूढ़जत्रुः सुताम्राक्षो रामो नाम जनैः श्रुतः ॥ १५ ॥
दुन्दुभिस्वननिर्घोषः स्निग्धवर्णः प्रतापवान्।
समश्च सुविभक्ताङ्गो वर्णं श्यामं समाश्रितः ॥ १६ ॥
त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नतः।

अतएवार्चिष्मान् आदित्यरूपः सन् अर्चितस्त्रैवर्णिकैरिति शेषः। ब्रह्मचर्य्यव्रते गृहस्थोचितपर्वादिवर्जनपूर्वकमृतुगामित्वलक्षणे स्थितः। वस्तुतस्तु गार्हस्थ्येऽप्यस्खलितरेताः। मनःसङ्कल्पेनैव देव्यारतिप्रीतेः सन्तानस्य च सम्पादनमिति भावः। साधूनामुपकारज्ञः उपकर्त्तव्यकालज्ञः। कर्मणां स्वरूपस्यानुष्ठानस्य च तत्त्वज्ञाता ॥ १२ ॥

ब्राह्मणानां वसिष्ठादीनाम् ॥ १३ ॥

यजुर्वेदविनीतश्च चादन्येषामपि संग्रहः विनीतो निरतः ॥ १४ ॥

एवमात्मगुणानुक्त्वा देहगुणानाह,—विपुलांस इति ॥ १५ ॥

समः विस्तारायामसमः ॥ १६ ॥

त्रिताम्रस्त्रिषु च स्निग्धो गम्भीरस्त्रिषु नित्यशः॥ १७॥
त्रिवलीमान् त्र्यवनतश्चतुर्व्यङ्गस्त्रिशीर्षवान्।
चतुष्कलश्चतुर्लेखश्चतुष्किष्कुश्चतुःसमः॥ १८॥

त्रिस्थिरः त्रिषु स्थानेषु स्थिरः। ऊरुश्च मणिबन्धश्च मुष्टिश्च नृपतेः स्थिरा इत्युक्तेः। त्रिषु प्रलम्बः। प्रलम्बा यस्य स धनीश्वरो मुष्कबाहुश्च इति सामुद्रिकोक्तेः। मुष्कौ वृषणौ। त्रिषु समः। समस्त्र्यवयव इत्यर्थः। केशाग्रं वृषणं जानुसमं यस्य स भूपतिरित्युक्तेः। त्रिषु चोन्नतः। नाभ्यन्तः कुक्षिवक्षोभिरुन्नतैः क्षितिपो भवेत्। त्रिताम्रः त्रिषु ताम्रः। नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिः सुखी। त्रिषु स्निग्धः। स्निग्धा भवन्ति वै येषां पादरेखाः शिरास्तथा। तथा स्निग्धमणिकेशौ महाभाग्यं विनिर्दिशेत्। त्रिषु गम्भीरः स्वरे गतौ च नाभौ च गम्भीरस्त्रिषु शस्यते॥ १७॥

त्रिवलीमान् उदरे कण्ठे उभयत्र वा वलीत्रयवान्। त्रिषु अवनतः निम्नः निम्नत्वं निमग्नत्वं तच्च निमग्नपादतलमध्यत्वं निमग्नपादरेखात्वं निमग्नस्तनचूचुकत्वं च। चतुर्व्यङ्गश्चतुर्ह्रस्वः। ग्रीवा प्रजननं पृष्ठं ह्रस्वे जङ्घे च पूजिते। त्रिशीर्षवान् आवर्तत्रययुक्तशीर्षः आवर्तत्रययुक्तं यस्य शिरः क्षितिमत्तामयं भाग्यः। चतुष्कलः चतस्रः कलाः चतुर्वेदप्राप्तिसूचकाङ्गुष्ठमूलरेखा यस्य सः। मूलेऽङ्गुष्ठस्य रेखाणां चतस्रश्चैव वा। ऋग्वेदा यथाक्रमं वेदरेखा द्विजन्मनाम्। चतुर्लेखः। ललाटे चतूरेखायुक्तः। ललाटे यस्य दृश्यन्ते चतुस्त्रिद्व्येकरेखकाः। शतद्वयं शतं षष्टिश्चायुर्विंशतिः क्रमात्। चतुष्किष्कुः। किष्कुश्चतुर्विंशत्यङ्गुलात्मको हस्तः। चतुर्हस्तप्रमाणः षण्णवत्यङ्गुलोत्सेध इति यावत्। चतुः

चतुर्दशसमद्वन्द्वश्चतुर्दंष्ट्रश्चतुर्गतिः।
महोष्ठहनुनासश्च पञ्चस्निग्धोऽष्टवंशवान्॥ १९॥
दशपद्मो दशबृहत्त्रिभिर्व्याप्तो द्विशुक्लवान्।
षडुन्नतो नवतनुस्त्रिभिर्व्याप्नोति राघवः॥ २०॥

समः। बाहुजानुरुगण्डानि चत्वार्यपसमानि चेति। बाहुरू आनु गण्डौ समावित्यर्थः॥ १८॥

चतुर्दशसमद्वन्द्व इति। समपरिमाणचतुर्दशाङ्गद्वन्द्वः। तदुक्तम्। भ्रुवौ नासापुटे नेत्रे कर्णावोष्ठौ च चूचुकौ। कूर्परे मणिबन्धौ च जानुनी वृषणौ कटी। करौ पादौ स्फिजौ यस्य समौ ज्ञेयः स भूपतिः। स्कन्धौ गण्डौ तथा दन्ता ऊरू सेवौ च जनुश्चोत्यन्यत्र पाठः। चतुर्दंष्ट्र इति। चतस्रो दंष्ट्रा दन्तपङ्क्तिद्वये प्रतिपार्श्वं शास्त्रोक्तलक्षणा यस्य सः। तच्च। स्निग्धा घनाश्च दशनाः सुतीक्ष्णादंष्ट्राः शुभास्ततश्च इति। दंष्ट्राणां तीक्ष्णत्वं आमुकादिखण्डनसमर्थत्वम्। चतुर्गतिरिति। सिंहशार्दूलगजवृषभैश्चतुर्भिस्तुल्या गतिर्यस्य सः महोष्ठहनुनासश्चेति। महत्प्रशस्तमोष्ठहनुनासं यस्य सः। तत्रोष्ठस्य प्राशस्त्यं बिम्बफलादिनदरक्तत्वे सति मांसलत्वम्। हनोस्तु परिपूर्णमांसलोन्नतत्वम्। नासिकायास्तु दीर्घोन्नतचिरपुटत्वम्। पञ्चस्निग्ध इति। पञ्च वाग्वक्त्रनखलोमत्वचं स्निग्धं यस्य सः। अष्टवंशवान्। प्रशस्ताष्टवंशाख्यावयववान्। वंशशब्देन दैर्घ्यं विवक्षितम्। बाहू च नलकावूरू जङ्घे चेत्यष्टवंशकाः। नलकावङ्गुल्याविति तीर्थः॥ १९॥

दशपद्मः मुखनेत्रास्य जिह्वोष्ठतालुस्तनमखं करौ। पादौ च दशपद्मानि पद्माकाराणि यस्य चेति। आस्यमोष्ठमध्यम्। दशबृहत्।

सत्यधर्मरतः श्रीमान् संग्रहानुग्रहे रतः।
देशकालविभागज्ञः सर्वलोकप्रियंवदः॥ २१॥
भ्राता चास्य च द्वैमात्रः सौमित्रिरमितप्रभः।
अनुरागेण रूपेण गुणैश्चापि तथाविधः॥ २२॥
स सुवर्णच्छविः श्रीमान् रामः श्यामो महायशाः।
तावुभौ नरशार्दूलौ त्वद्दर्शनकृतोत्सवौ॥ २३॥

तानि तु उरः शिरो ललाटश्च ग्रीवाबाहुस्तनाभयः। पादौ पृष्ठं कृती चैव विशालास्ते सुखप्रदा इति। त्रिभिः श्रीयशस्तेजोभिर्व्याप्तो युक्तः। त्रिमुष्कवान्। द्वौ मुष्कौ तु शुभौ मुष्कौ वंशो भातुः पितु-स्तथेत्युक्तेः। चतुष्कलः। तानि च बाहुः कुक्षिश्च वक्षश्च ग्रीवस्कन्ध-ललाटिकाः। सर्वभूतेषु निर्दिष्टा उन्नतास्तु सुखप्रदा इति। पूर्वं त्र्युन्नतत्रिप्रलम्बत्वमुक्तम्। अत्र चतुष्किष्कत्वं चतुरुन्नतत्वञ्चोभयमपि मत-भेदादविरुद्धम्। एवं नानामतप्रदर्शनं रामस्य नानामतसम्मतसर्व-लक्षणयुक्तत्वसूचनाय। नवतनुः। नवसु सूक्ष्मः। तानि च सूक्ष्माण्य-ङ्गुलिपर्वाणि केशरोमनखत्वचः। शेफश्च येषां सूक्ष्माणि ते नरा दीर्घ-जीविन इति प्रोक्तं नवकम्। मृदुस्नग्धत्वं सूक्ष्मदर्शित्वं सूक्ष्मबुद्धि-त्वञ्चेति नवसूक्ष्मत्वम्। दृष्टेः सौक्ष्म्यं रत्नपरीक्षादिसूक्ष्मदर्शनचातुर्यम्। बुद्धेः सूक्ष्मत्वं तत्त्वसाक्षात्कारसमर्थत्वम्। त्रिभिर्व्याप्नोति धर्मार्थकामैः कालं यथोचितम् आप्नोति। त्रिवर्गसेवीत्यर्थः॥ २०॥

संग्रहानुग्रहे। संग्रहो धनधान्यादीनाम्। अनुग्रहणाभ्यां प्रजा-रक्षणम्। मधुभाषित्वः॥ २१॥

विचिन्वन्तौ महीं कृत्स्नामस्माभिः सह सङ्गतौ।
त्वामेव मार्गमाणौ तौ विचरन्तौ वसुन्धराम्॥ २४॥
ददृशतुर्म्मृगपतिं पूर्वजेनावरोऽपितम्।
ऋष्यमूकस्य मूले तु बहुपादपसङ्कुले॥ २५॥
भ्रातुर्भयार्त्तमासीनं सुग्रीवं प्रियदर्शनम्।
वयञ्च हरिराजं तं सुग्रीवं सत्यसङ्गरम्॥ २६॥
परिचर्य्यामहे राज्यात् पूर्वजेनावरोऽपितम्।
ततस्तौ चीरवसनौ धनुःप्रवरपाणिनौ॥ २७॥
स तौ दृष्ट्वा नरव्याघ्रौ धन्विनौ वानरर्षभः॥ २८॥
अभिप्लुतो गिरेस्तस्य शिखरं भयमोहितः।
ततः स शिखरे तस्मिन् वानरेन्द्रो व्यवस्थितः॥ २९॥
तयोः समीपं मामेव प्रेषयामास सत्वरम्।

द्वैमात्रः। राममात्रपेक्षया द्वितीया माता द्विमाता। तस्यापत्य-मित्यर्थः। भिन्नोदरभ्रातेत्यर्थः। वैमात्र इति पाठान्तरम्॥ २२॥ २३॥

अस्माभिः सुग्रीवमन्त्रिभिरित्यर्थः। उक्तमेव विवरीतुमाह,— त्वामेवेति॥ २४॥

मृगपतिं शाखामृगपतिं सुग्रीवं पूर्वजेन वालिना अवरोपितं राज्यात् भ्रंशितम्॥ २५॥ २६॥

परिचर्य्यामहे। तङ्वयनमार्षं। परिचराम इत्यर्थः। अवरोपितं राज्येन हीनं कृतम्। पाणिनौ पाणी इति यावत्॥ २७॥ २८॥

तावहं पुरुषव्याघ्रौ सुग्रीववचनात् प्रभू ॥ ३० ॥
रूपलक्षणसम्पन्नौ कृताञ्जलिरुपस्थितः ।
तौ परिज्ञाततत्त्वार्थौ मया प्रीतिसमन्वितौ ॥ ३१ ॥
पृष्ठमारोप्य तं देशं प्रापितौ पुरुषर्षभौ ।
निवेदितौ च तत्त्वेन सुग्रीवाय महात्मने ॥ ३२ ॥
तयोरन्योऽन्यसम्भाषात् भृशं प्रीतिरजायत ।
तत्र तौ कीर्त्तिसम्पन्नौ हरीश्वरनरेश्वरौ ॥ ३३ ॥
परस्परकृताश्वासौ कथया पूर्ववृत्तया ।
तं ततः सान्त्वयामास सुग्रीवं लक्ष्मणाग्रजः ॥ ३४ ॥
स्त्रीहेतोर्वालिना भ्राता निरस्तं पुरुतेजसा ।
ततस्त्वन्नाशजं शोकं रामस्याक्लिष्टकर्मणः ॥ ३५ ॥
लक्ष्मणो वानरेन्द्राय सुग्रीवाय न्यवेदयत् ।
स श्रुत्वा वानरेन्द्रस्तु लक्ष्मणेनेरितं वचः ॥ ३६ ॥

अभिद्रुतः उत्प्लुत्यारूढः ॥ २९ ॥ ३० ॥

मया परिज्ञाततत्त्वार्थौ मया विज्ञातात्मवृत्तान्तौ विज्ञापिता-त्मवृत्तान्तौ च ॥ ३१ ॥ ३२ ॥ ३३ ॥

पूर्ववृत्तया स्वीयस्वीयवृत्तान्तगोचरया ॥ ३४ ॥

स्त्रीहेतोः सुग्रीवस्त्रीपरिग्रहार्थम् । पुरुमहत्तेजो यस्य तेन तन्नाशजं त्वदपहारजम् ॥ ३५ ॥ ३६ ॥

तदासीन्निष्प्रभोऽत्यर्थं ग्रहग्रस्त इवांशुमान्।
ततस्त्वद्गात्रशोभीनि रक्षसा ह्रियमाणया॥ ३७॥
यान्याभरणजालानि पातितानि महीतले।
तानि सर्वाणि रामाय आनीय हरियूथपाः॥ ३८॥
संहृष्टा दर्शयामासुर्गतिन्तु न विदुस्तव।
तानि रामाय दत्तानि मयैवोपहृतानि च॥ ३९॥
स्नस्तान्यवकीर्णानि तस्मिन् विहतचेतसि।
तान्यङ्के दर्शनीयानि कृत्वा बहुविधं तदा॥ ४०॥
तेन देवप्रकाशेन देवेन परिदेवितम्।
प्रादीपयद्दाशरथेस्तदा शोककृताशनम्॥ ४१॥
शायितश्च चिरं तेन दुःखार्त्तेन महात्मना।

निष्प्रभः खिन्नचित्तः। तद्गात्रं शोभयितुं शीलं येषां तानि॥ ३७॥ ३८॥

दर्शयामासुः सुग्रीवायेति शेषः॥ ३९॥

मयैवोपहृतानि च प्रथममिति शेषः। अवकीर्णानि भूमौ पातनात् किञ्चिद्विशीर्णानि। तानि दत्तानि गृहीत्वा ह्याकाशस्मिन् विहतचेतसि प्रथमार्थे सप्तमी। विहतचेताः मूर्च्छितचेतोऽभूदित्यर्थः॥ ४०॥

देवप्रकाशेन देवावतारत्वादेव देवेन परिदेवितम्। प्रादीपयत् आभरणदर्शनमिति शेषः॥ ४१॥

यथापि विविधैर्वाक्यैः कृच्छ्रादुत्थापितः पुनः ॥ ४२ ॥
तानि दृष्ट्वा महार्हाणि दर्शयित्वा मुहुर्मुहुः ।
राघवः सहसौमित्रिः सुग्रीवे स न्यवेशयत् ॥ ४३ ॥
स तवादर्शनादार्य्ये ! राघवः परितप्यते ।
महता ज्वलता नित्यमग्निनेवाग्निपर्वतः ॥ ४४ ॥
त्वत्कृते तमनिद्रा च शोकश्चिन्ता च राघवम् ।
तापयन्ति महात्मानमग्न्यागारमिवाग्नयः ॥ ४५ ॥
तवादर्शनशोकेन राघवः परिचाल्यते ।
महता भूमिकम्पेन महानिव शिलोच्चयः ॥ ४६ ॥
काननानि सुरम्याणि नदीप्रस्रवणानि च ।
चरन् रतिमाप्नोति त्वामपश्यन् नृपात्मजे ! ॥ ४७ ॥
स त्वां मनुजशार्दूलः क्षिप्रं प्राप्स्यति राघवः ।
समित्रबान्धवं हत्वा रावणं जनकात्मजे ! ॥ ४८ ॥
सहितौ रामसुग्रीवावुभावकुरुतां तदा ।
समयं वालिनं हन्तुं तव चान्वेषणं प्रति ॥ ४९ ॥

उत्थापितं शोकात् भूमौ पतितम् ॥ ४२ ॥ ४३ ॥

अग्निपर्वतः संवर्त्ताख्यकालाग्निनिवासभूतः पर्वतोऽग्निपर्वतः । तच्च माल्यवतः शृङ्गे दृश्यते हव्यवाट् सदा । नाम्ना संवर्त्तको नाम कालाग्निर्भरतर्षभेति भीष्मपर्वणि भारतोक्तेः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

ततस्ताभ्यां कुमाराभ्यां वीराभ्यां स हरीश्वरः ।
किष्किन्धां समुपागम्य वाली युद्धे निपातितः ॥ ५० ॥
ततो निहत्य तरसा रामो वालिनमाहवे ।
सर्वेषां हरिसङ्घानां सुग्रीवमकरोत् पतिम् ॥ ५१ ॥
रामसुग्रीवयोरैक्यं देव्येवं समजायत ।
हनूमन्तञ्च मां विद्धि तयोर्दूतमुपागतम् ॥ ५२ ॥
स्वं राज्यं प्राप्य सुग्रीवः स्वानानीय महाकपिन् ।
त्वदर्थं प्रेषयामास दिशो दश महाबलान् ॥ ५३ ॥
आदिष्टा वानरेन्द्रेण सुग्रीवेण महौजसः ।
अद्रिराजप्रतीकाशाः सर्वतः प्रस्थिता महीम् ॥ ५४ ॥
ततस्ते मार्गमाणा वै सुग्रीववचनातुराः ।
चरन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ ५५ ॥
अङ्गदो नाम लक्ष्मीवान् वालिसूनुर्महाबलः ।
प्रस्थितः कपिशार्दूलस्त्रिभागबलसंवृतः ॥ ५६ ॥
तेषां नो विप्रनष्टानां विन्ध्ये पर्वतसत्तमे ।

सहितौ सख्यं प्राप्तौ । समयं प्रतिज्ञाम् । ४९ । ५० ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥

सुग्रीववचनातुराः सुग्रीवाज्ञाभीताः । ५५ ॥

त्रिभागबलसंवृतः सेनायास्त्रिभागेष्वेकभागेनोपस्थित इत्यर्थः । ५६ ।

अद्य शोकपरीतानामहोरात्रगणा गताः ॥ ५७ ॥
ते वयं कार्य्यनैराश्यात्कालस्यातिक्रमेण च ।
भयाच्च कपिराजस्य प्राणांस्त्यक्तुमुपस्थिताः ॥ ५८ ॥
विचित्य गिरिदुर्गाणि नदीप्रस्रवणानि च ।
अनासाद्य पदं देव्याः प्राणांस्त्यक्तुं व्यवस्थिताः ॥ ५९ ॥
ततस्तस्य गिरेर्मूर्ध्नि वयं प्रायमुपास्महे ।
दृष्ट्वा प्रायोपविष्टांश्च सर्वान् वानरपुङ्गवान् ॥ ६० ॥
भृशं शोकार्णवे मग्नः पर्य्यदेवयदङ्गदः ।
तव नाशञ्च वैदेहि ! वालिनश्च तथा वधम् ॥ ६१ ॥
प्रायोपवेशमस्माकं मरणञ्च जटायुषः ।
तेषां नः स्वामिसन्देशान्निराशानां मुमूर्षताम् ॥ ६२ ॥
कार्य्यहेतोरिहायातः शकुनिर्वीर्य्यवान् महान् ।
गृध्रराजस्य सोदर्य्यः सम्पातिर्नाम गृध्रराट् ॥ ६३ ॥
श्रुत्वा भ्रातृवधं कोपादिदं वचनमब्रवीत् ।

विन्ध्ये विप्रणष्टानां विलमध्येऽदर्शनं प्राप्तानां गता इति समयात् परेपीति शेषः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

निराशानां स्वप्रत्याशारहितानां स्वामिसन्देशात्तत्सन्दिष्टकालात्ययाद्धेतोर्मुमूर्षताम् ॥ ६२ ॥

कार्य्यहेतोः कार्य्यसिद्ध्यर्थमिहायातः दैवादिति शेषः ॥ ६३ ॥

यवीयान् केन मे भ्राता हतः क्व च निपातितः ॥ ६४ ॥
एतदाख्यातुमिच्छामि भवद्भिर्वानरोत्तमाः ।
अङ्गदोऽकथयत्तस्य जनस्थाने महद्वधम् ॥ ६५ ॥
रक्षसा भीमरूपेण त्वामुद्दिश्य यथार्थतः ।
जटायोस्तु वधं श्रुत्वा दुःखितः सोऽरुणात्मजः ॥ ६६ ॥
त्वामाह स वरारोहे ! वसन्तीं रावणालये ।
तस्य तद्वचनं श्रुत्वा सम्पातेः प्रीतिवर्द्धनम् ॥ ६७ ॥
अङ्गदप्रमुखाः सर्वे ततः प्रस्थापिता वयम् ।
विन्ध्यादुत्थाय सम्प्राप्ताः सागरस्यान्तमुत्तमम् ॥ ६८ ॥
त्वद्दर्शने कृतोत्साहा हृष्टाः पुष्टाः प्लवङ्गमाः ।
अङ्गदप्रमुखाः सर्वे वेलोपान्तमुपागताः ॥ ६९ ॥
चिन्तां जग्मुः पुनर्भीमां त्वद्दर्शनसमुत्सुकाः ।
अथाहं हरिसैन्यस्य सागरं दृश्य सीदतः ॥ ७० ॥
व्यवधूय भयं तीव्रं योजनानां शतं प्लुतः ।
लङ्का चापि मया रात्रौ प्रविष्टा राक्षसाकुला ॥ ७१ ॥
रावणश्च मया दृष्टस्त्वञ्च शोकनिपीडिता ।

क्व देशे इति शेषः ॥ ६४ ॥
आख्यातुमित्यसमानकर्तृकेऽपि तुमुन्नार्षः ॥ ६५ ॥ ६६ ॥ ६७ ॥
अन्तं तटम् ॥ ६८ ॥ ६९ ॥ ७० ॥

एतत्ते सर्वमाख्यातं यथावृत्तमनिन्दिते ! ॥ ७२ ॥
अभिभाषस्व मां देवि ! दूतो दाशरथेरहम्।
त्वन्मां रामकृतोद्योगं त्वन्निमित्तमिहागतम् ॥ ७३ ॥
सुग्रीवसचिवं देवि ! बुद्ध्यस्व पवनात्मजम्।
कुशली तव काकुत्स्थः सर्वशस्त्रभृतां वरः ॥ ७४ ॥
गुरोराराधने युक्तो लक्ष्मणः शुभलक्षणः।
तस्य वीर्य्यवतो देवि ! भर्त्तुस्तव हिते रतः ॥ ७५ ॥
अहमेकस्तु सम्प्राप्तः सुग्रीववचनादिह।
मयेयमसहायेन चरता कामरूपिणा ॥ ७६ ॥
दक्षिणादिगनुक्रान्ता त्वन्मार्गविचयैषिणा।
दिष्ट्याहं हरिसैन्यानां त्वन्नाशमनुशोचताम् ॥ ७७ ॥
अपनेष्यामि सन्तापं तवाधिगमशासनात्।
दिष्ट्या हि न मम व्यर्थं सागरस्येह लङ्घनम् ॥ ७८ ॥
प्राप्स्याम्यहमिदं देवि ! त्वद्दर्शनकृतं यशः।

श्रुतः श्रुतवान् ॥ ७१ ॥ ७२ ॥ ७३ ॥
पवनात्मजत्वेन लङ्घनसामर्थ्यम् ॥ ७४ ॥ ७५ ॥
एकः सम्प्राप्तोऽर्थात्सर्वेऽन्येऽपरे समुद्रतीर एवासते। कामरूपिणा अनेन रावणास्तःपुरप्रवेशव्यवसायसामर्थ्यं सूचितम् ॥ ७६ ॥
त्वन्नाशं त्वददर्शनम् ॥ ७७ ॥

राघवस्य महावीर्य्यः चिप्रं त्वामभिपत्स्यते ॥ ७९ ॥
सपुत्रबान्धवं हत्वा रावणं राक्षसाधिपम्।
माल्यवान् नाम वैदेहि! गिरीणामुत्तमो गिरिः ॥ ८० ॥
ततो गच्छति गोकर्णं पर्वतं केसरी हरिः।
स च देवर्षिभिर्दिष्टः पिता मम महाकपिः।
तीर्थे नदीपतेः पुण्ये शम्बसादनमुद्धरन् ॥ ८१ ॥
यस्याहं हरिणः क्षेत्रे जातो वातेन मैथिलि!।
हनूमानिति विख्यातो लोके स्वेनैव कर्मणा ॥ ८२ ॥
विश्वासार्थन्तु वैदेहि! भर्त्तुरुक्ता मया गुणाः।
अचिरात्त्वामितो देवि! राघवो नयिता ध्रुवम् ॥ ८३ ॥
एवं विश्वासिता सीता हेतुभिः शोककर्शिता।
उपपन्नैरभिज्ञानैर्दूतं तमधिगच्छति ॥ ८४ ॥

अधिगमोदर्शनम् ॥ ७८ ॥ ७९ ॥

तिर्य्यग्देहस्य तव कथं पवनात्मजत्वमिति शङ्कामपनयन्नाह;— माल्यवान्नामेति ॥ ८० ॥

गोकर्णं तदाख्यम्। दिष्टः शम्बसादनाख्यासुरवधायाज्ञप्तः। उद्धरन्मुद्धृतवान् अवधीदित्यर्थः। भूतेऽपि लटः प्रतार्थः ॥ ८१ ॥

स्वेनैव उत्पत्तिकालप्रवृत्तेन कर्मणा पराक्रमेण ॥ ८२ ॥

भर्त्तुं स्वहर्त्तुं रामस्य नयिता नेता ॥ ८३ ॥

अतुलञ्च गता हर्षं प्रहर्षेण तु जानकी।
नेत्राभ्यां वक्रपक्ष्माभ्यां मुमोचानन्दजं जलम्॥ ८५॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम्।
अशोभत विशालाक्ष्या राहुमुक्त इवोडुराट्॥ ८६॥
हनुमन्तं कपिं व्यक्तं मन्यते नान्यथेति सा।
अथोवाच हनूमांस्तामुत्तरं प्रियदर्शनाम्॥ ८७॥
एतत्ते सर्वमाख्यातं समाश्वसिहि मैथिलि!।
किं करोमि कथं वा ते रोचते प्रतियाम्यहम्॥ ८८॥
हतेऽसुरे संयति शम्बसादने
कपिप्रवीरेण महर्षिचोदनात्।

उपपन्नैर्बालवैः अभिज्ञानैः रामलक्ष्मणचिह्नैः अधिगच्छति अध्यगच्छत्॥ ८४॥ ८५॥ ८६॥

अन्यथा नेति। माया कपिर्नेत्यर्थः॥ ८७॥

सर्वमुत्तरं सर्वं प्रत्युत्तरमाख्यातमित्यन्वयः। अथ सीतायै चिकीर्षितं पृच्छति। किं करोमीति। वर्त्तमानसामीप्ये लटौ। प्रतियामि प्रतियास्ये। रामसमीपं किं करोमि किं करिष्ये। कथं वा रोचते चिकीर्षितमिति प्रश्नः॥ ८८॥

न हि रावण आत्मानं कथमपि कपिपुत्र इति ब्रूयादिति ज्ञापनपूर्वकं कपित्वनिश्चयाय पुनः स्वजन्मानुवादः। हतेऽसुर इति। ततः

ततोऽस्मि वायुप्रभवो हि मैथिलि !
प्रभावतस्तत्प्रतिमश्च वानरः ॥ ८९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
पञ्चत्रिंशः सर्गः ॥ ३५ ॥

प्रभवसादनासुरवधप्रीतमरुद्भिः प्रसादत इत्यर्थः। तत्प्रतिमो वायुसदृश इत्यर्थः ॥ ८९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

# षट्त्रिंशः सर्गः ।

भूय एव महातेजा हनूमान् पवनात्मजः ।
अब्रवीत् प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ १ ॥
वानरोऽहं महाभागे ! दूतो रामस्य धीमतः ।
रामनामाङ्कितञ्चेदं पश्य देव्यङ्गुलीयकम् ॥ २ ॥
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ।
समाश्वसिहि भद्रन्ते क्षीणदुःखफला ह्यसि ॥ ३ ॥
गृहीत्वा प्रेक्षमाणा सा भर्त्तुः करविभूषितम् ।
भर्त्तारमिव सम्प्राप्तं जानकी मुदिताभवत् ॥ ४ ॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ।

अथ दृढ़तरविश्वासाय रामाङ्गुलीयकं दातुमाह,—भूय इति । प्रत्ययो विश्वासः ॥ १ ॥

वानरोऽहं नान्यः । रामस्य नाम नामाक्षराणि तैरङ्कितं चिह्नितम् ॥ २ ॥

क्षीणं दुःखरूपं पापफलं यस्याः सा । असि शीघ्रमेव भविष्यसि ॥ ३ ॥

विभूषितं विभूषणम् । भर्त्तारं प्राप्तमिवेत्यन्वयः ॥ ४ ॥

बभूव हर्षोदग्रश्च राज्ञसुता इवोडुराट् ॥ ५ ॥
ततः सा ह्रीमती बाला भर्त्तुः सन्देशहर्षिता ।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥ ६ ॥
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ! ।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ ७ ॥
शतयोजनविस्तीर्णः सागरो मकरालयः ।
विक्रमश्लाघनीयेन क्रमता गोष्पदीकृतः ॥ ८ ॥
न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ! ।
यस्य ते नास्ति सन्त्रासो रावणादपि सम्भ्रमः ॥ ९ ॥
अर्हसे च कपिश्रेष्ठ ! मया समभिभाषितुम् ।
यद्यसि प्रेषितस्तेन रामेण विदितात्मना ॥ १० ॥
प्रेषयिष्यति दुर्द्धर्षो रामो न ह्यपरीक्षितम् ।
पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ ११ ॥

बभूव हर्षोदग्रश्चेति पाठः ॥ ५ ॥

ह्रीमती अङ्गुलीयसान्निध्ये भर्त्तृसान्निध्यादिव किञ्चिल्लज्जावती । प्रियं कृत्वा । आदरं कृत्वा ॥ ६ ॥

विक्रान्तः शूरः समर्थो देशकालोचितकृत्यचतुरः । प्राज्ञः धर्मार्थविषयकसर्वशास्त्रार्थतत्त्वज्ञः । पदं स्थानम् ॥ ७ ॥

क्रमता क्रामता ॥ ८ ॥

सन्त्रासः समुद्रादिति शेषः । रावणादपि सम्भ्रमः चित्तक्षोभः ॥ ९ ॥

दिष्ट्या च कुशली रामो धर्मात्मा सत्यसङ्गरः ।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्द्धनः ॥ १२ ॥
कुशली यदि काकुत्स्थः किन्नु सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ १३ ॥
अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे ।
ममैव तु न दुःखानामस्ति मन्ये विपर्य्ययः ॥ १४ ॥
कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते ।
उत्तराणि च कार्य्याणि कुरुते पुरुषोत्तमः ॥ १५ ॥

यदि यस्मात्त्वं प्रेषितोऽसि । तस्मात् मया सार्द्धमभिभाषितुं सम्भाषां कर्त्तुमर्हसे अर्हसि ॥ १० ॥ ११ ॥ १२ ॥

ननु तद्दूतागमनेन तद्वचसा च कुशलावगतेः किं कुशलिप्रश्नादि-तत्प्रश्नेनेति शङ्कायां प्रश्नाशयं दर्शयति,—कुशलीत्यादि । यदि कुशली त्वया कथ्यते तदा सत्कथं सागरमेखलां महीं किन्नु न दहती-त्यर्थः ॥ १३ ॥

ननु केवलं महीमेवेति किमुच्यते इत्याशये पक्षान्तरमथवेति । तथा शक्तिमन्तौ यदि, तर्हि किमिति तूष्णीं तिष्ठतस्तत्राह,—ममैवेति । दुःखानां दुःखहेतुपापानां विपर्य्ययो नाशो नाद्यापि संवृत्त इत्यर्थः ॥ १४ ॥

मम दुःखाय ईषत्कष्टः अपितु तस्य सुखावस्थामेव ज्ञातु-मित्याशयेनाह,—कच्चिदिति । उत्तराणि कार्य्याणि मद्विमोचन-यत्नानि ॥ १५ ॥

कच्चिन्न दीनः सम्भ्रान्तः कार्य्येषु च न मुह्यति ।
कच्चित् पुरुषकार्य्याणि कुरुते नृपतेः सुतः ॥ १६ ॥
द्विविधं त्रिविधोपायमुपायमपि सेवते ।
विजीगिषुसुहृत् कच्चिन् मित्रेषु च परन्तपः ॥ १७ ॥
कच्चिन् मित्राणि लभते मित्रैश्चाप्यभिगम्यते ।
कच्चित् कल्याणमित्रश्च मित्रैश्चापि पुरस्कृतः ॥ १८ ॥
कच्चिदाशास्ति देवानां प्रसादं पार्थिवात्मजः ।
कच्चित् पुरुषकारञ्च दैवञ्च प्रतिपद्यते ॥ १९ ॥
कच्चिन्न विगतस्नेहो विवासान् मयि राघवः ।

न दीनो न सम्भ्रान्त इत्यनुषङ्गः । पुरुषकार्य्याणि पुरुषकारान् ॥ १६ ॥

द्विविधम् । साध्यासाध्यरूपप्रकारद्वयवत् । त्रिविधोपायम् । धर्मार्थकामलक्षणत्रिविधपुरुषार्थानां प्राप्त्युपायभूतमुपायं सामाद्युपायमपि सेवते कच्चित् । तथा मित्रेषु च विजिगीषुसुहृत् कच्चित् । विजिगीषु सुहृदिति बहुव्रीहिस्तत्पुरुषश्चेति कतकः । सुहृत् परन्तपो रामो विजिगीषुः सन् त्रिविधोपायं सामदानभेदरूपम् उपायं दण्डोपायञ्च मित्रेषु चादिमित्रेषु च । द्विविधं यथा भवति तथा सेवते कच्चित् । मित्रेषु सामदाने । अमित्रेषु भेददण्डौ चेत्येवं विभज्य प्रयुङ्क्ते कच्चिदित्यर्थ इति तीर्थः ॥ १७ ॥

मित्राणि लभते स्वयत्नेनामित्रैश्च स्वयमेवाऽभिगम्यते । कल्याणमित्रः साध्यमित्रः मित्रैः पुरस्कृतो बहुमतः कच्चित् ॥ १८ ॥

आशास्ति आशास्ते प्रार्थयत इत्यर्थः ॥ १९ ॥

कच्चिन् मां व्यसनादस्मात् मोचयिष्यति राघवः ॥ २० ॥
सुखानामुचितो नित्यमसुखानामनूचितः ।
दुःखमुत्तरमासाद्य कच्चिद्रामो न सीदति ॥ २१ ॥
कौसल्यायास्तथा कच्चित् सुमित्रायास्तथैव च ।
अभीक्ष्णं श्रूयते कच्चित् कुशलं भरतस्य च ॥ २२ ॥
मन्निमित्तेन मानार्हः कच्चिच्छोकेन राघवः ।
कच्चिन्नान्यमना रामः कच्चिन् मां तारयिष्यति ॥ २३ ॥
कच्चिदक्षौहिणीं भीमां भरतो भ्रातृवत्सलः ।
ध्वजिनीं मन्त्रिभिर्गुप्तां प्रेषयिष्यति मत्कृते ॥ २४ ॥
वानराधिपतिः श्रीमान् सुग्रीवः कच्चिदेष्यति ।
मत्कृते हरिभिर्वीरैर्वृतो दन्तनखायुधैः ॥ २५ ॥
कच्चिच्च लक्ष्मणः शूरः सुमित्रानन्दवर्द्धनः ।
अस्त्रविच्छरजालेन राक्षसान् विधमिष्यति ॥ २६ ॥
रौद्रेण कच्चिदस्त्रेण रामेण निहतं रणे ।
द्रक्ष्याम्यल्पेन कालेन रावणं ससुहृज्जनम् ॥ २७ ॥

विवासात् विदूरवासात् ॥ २० ॥

अनूचित इति छान्दसो दीर्घः। उत्तरं दुःखं दुःखाद्दुःखमित्यर्थः ॥ २१ ॥ २२ ॥

मन्निमित्तेन मद्वियोगनिमित्तेन शोकेन कच्चित् परितप्यत इति शेषः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

कच्चिन्न तद्धेमसमानवर्णं
तस्याननं पद्मसमानगन्धि।
मया विना शुष्यति शोकदीनं
जलक्षये पद्ममिवातपेन ॥ २८ ॥

धर्मापदेशात्त्यजतः स्वराज्यं
मां चाप्यरण्यं नयतः पदातेः।
नासीद्व्यथा यस्य न भीर्न शोकः
कच्चित् स धैर्यं हृदये करोति ॥ २९ ॥

न चास्य माता न पिता न चान्यः
स्नेहाद्विशिष्टोऽस्ति मया समो वा।
तावद्ध्यहं दूत जिजीविषेयं
यावत् प्रवृत्तिं शृणुयां प्रियस्य ॥ ३० ॥

शोकेन कर्माघकृतेन ॥ २७ ॥

हेमसमानवर्णं हेमवर्णवत् स्पृहणीयशोभम् ॥ २८ ॥

धर्मापदेशाद्धर्मोद्देशात् धर्ममुद्दिश्येति यावत्। न भीर्न शोकः।
मम नयनाद्भीः राज्यत्यागाच्च शोकः। भयञ्च मद्रक्षानिमित्तम्। यस्य
व्यथा वनवासखेदश्च नासीत् स इदानीं धैर्यं करोति कच्चित् ॥ २९ ॥

धैर्यत्यागे मद्वियोग एव हेतुरित्याह,—न चास्येति। माता-
पित्रादौ नास्य मत्समोऽपि स्नेहः। अधिकस्तु कुतः मम तच्छरीररूप-
त्वात्। वस्तुतस्तयोस्तस्याभावाच्च हननमनर्हमपि तावज्जिजीविषेयम्।

इतीव देवी वचनं महार्थं
तं वानरेन्द्रं मधुरार्थमुक्त्वा।
श्रोतुं पुनस्तस्य वचोऽभिरामं
रामार्थयुक्तं विरराम रामा ॥ ३१ ॥

सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ ३२ ॥
न त्वामिहस्थां जानीते रामः कमललोचनः।
तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ ३३ ॥
श्रुत्वैव च वचो मह्यं क्षिप्रमेष्यति राघवः।
चमूं प्रकर्षन् महतीं हर्य्यृक्षगणसंयुताम् ॥ ३४ ॥
विष्टम्भयित्वा बाणौघैरक्षोभ्यं वरुणालयम्।
करिष्यति पुरीं लङ्कां काकुत्स्थः शान्तराक्षसाम् ॥ ३५ ॥

प्रवृत्तिं वार्त्ताम् प्रवृत्तिमार्गे रतिश्च। निवृत्तिमार्गरतो ममापि कार्य्याक्षमत्वेनादर्शनरूपो नाश एवेति भावः ॥ ३० ॥

रामार्थयुक्तं रामप्रयोजनयुक्तम्। रामरूपाभिधेयेन युक्तं तद्बोधकमिति वा ॥ ३१ ॥ ३२ ॥

न जानीते न जानीत इव। अनुकाददेत्यनीतां शचीं पुरन्दर इव ॥ ३३ ॥

मह्यं मत्तः ॥ ३४ ॥

विष्टम्भयित्वा संस्तभ्य सेतुं बध्वेति यावत् ॥ ३५ ॥

तत्र यद्यन्तरा मृत्युर्यदि देवा महासुराः।
स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ॥ ३६ ॥
तवादर्शनजेनार्य्ये! शोकेन परिपूरितः।
न शर्म लभते रामः सिंहार्द्दित इव द्विपः ॥ ३७ ॥
मन्दरेण च ते देवि! शपे मूलफलेन च।
मलयेन च विन्ध्येन मेरुणा दर्दुरेण च ॥ ३८ ॥
यथा सुनयनं वल्गु बिम्बोष्ठं चारुकुण्डलम्।
मुखं द्रक्ष्यसि रामस्य पूर्णचन्द्रमिवोदितम् ॥ ३९ ॥
क्षिप्रं द्रक्ष्यसि वैदेहि! रामं प्रस्रवणे गिरौ।
शतक्रतुमिवासीनं नागपृष्ठस्य मूर्द्धनि ॥ ४० ॥
न मांसं राघवो भुङ्क्ते न चैव मधु सेवते।

तत्र तत्कर्मप्रवृत्तौ अन्तरा विघ्नत्वेन यदि मृत्युप्रभृतयोऽपि स्थास्यन्ति तदा तानपि वधिष्यति ॥ ३६ ॥ ३७ ॥

स्वोक्तार्थे देव्या विश्वासार्थं स्ववासस्थानमन्दरादिभिः स्वजीवनसाधनैर्मूलफलैश्च शपथं करोति। मन्दरेण चेति। दर्दुरः पर्वतविशेषः ॥ ३८ ॥

यथा रामस्य मुखं द्रक्ष्यसि, तथा मन्दरादिभिः शपे इत्यन्वयः ॥ ३९ ॥

प्रस्रवणे गिरौ विद्यमानमपीह द्रक्ष्यसीत्यर्थः। नागपृष्ठस्य मूर्द्धनि ऐरावतोपरि स्थितमिन्द्रमिव मत्पृष्ठगं रामं द्रक्ष्यसीत्यर्थः। नाकपृष्ठस्येति पाठः। स्वर्गस्योपरीत्यर्थं इति तीर्थः ॥ ४० ॥

वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ॥ ४१ ॥

नैव दंशान्न मशकान्न कीटान्न सरीसृपान् ।
राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ॥ ४२ ॥

नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यं चिन्तयते किञ्चित् स तु कामवशं गतः ॥ ४३ ॥

अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते ॥ ४४ ॥

दृष्ट्वा फलं वा पुष्पं वा यच्चान्यत् स्त्रीमनोहरम् ।
बहुशो हा ! प्रियेत्येवं श्वसंस्त्वामभिभाषते ॥ ४५ ॥

स देवि ! नित्यं परितप्यमान-
स्त्वामेव सीतेत्यभिभाषमाणः ।
धृतव्रतो राजसुतो महात्मा
तवैव लाभाय कृतप्रयत्नः ॥ ४६ ॥

सुविहितमारण्यकशास्त्रबोधितं भक्तम् ओदनं पञ्चमं कालं प्राप्येति शेषः । प्रातःसङ्गवमध्याह्नापराह्णात् पञ्चमं सायाह्नं प्राप्येत्यर्थः । यद्वा प्रातःसायं प्रातःसायमिति कालचतुष्टयं त्यक्त्वा पञ्चमे प्रातःकाल इत्यर्थः । दिनद्वयमतीत्य भुङ्क्ते इत्यर्थः ॥ ४१ ॥ ४२ ॥ ४३ ॥

प्रायेणाऽनिद्र एव कथञ्चित् सुप्तोऽपि सीतेति वदन्नेव प्रतिबुध्यते ॥ ४४ ॥

सा रामसङ्कीर्त्तनवीतशोका
रामस्य शोकेन समानशोका।
शरन्मुखेनाम्बुदशेषचन्द्रा
निशेव वैदेहसुता बभूव ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षट्त्रिंशः सर्गः ॥ ३६ ॥

स्त्रीमनोहरं स्त्रीसन्निधाने मनोहरं स्त्रीणां मनोहरं वा श्वसन् दीर्घाच्छ्वासं त्यजन् ॥ ४५ ॥ ४६ ॥

रामसङ्कीर्त्तनेन अनिशः सततं राम इत्यादिना वीतशोका। न मांसं राघवो भुङ्क्ते इत्युक्तेन रामशोकेन समानशोका। अम्बुदशेषचन्द्रो यस्यां सा। शरत् मुखमर्षोकम्। शरदो निशेव प्रकाशा प्रकाश-युक्तशरन्निशेव हर्षशोकवती बभूव ॥ ४७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

# सप्तत्रिंशः सर्गः ।

सा सीता वचनं श्रुत्वा पूर्णचन्द्रनिभानना ।
हनूमन्तमुवाचेदं धर्मार्थसहितं वचः ॥ १ ॥
अमृतं विषसंपृक्तं त्वया वानर ! भाषितम् ।
यच्च नान्यमना रामो यच्च शोकपरायणः ॥ २ ॥
ऐश्वर्य्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ।
रज्ज्वेव पुरुषं बध्वा कृतान्तः परिकर्षति ॥ ३ ॥
विधिर्नूनमसंहार्य्यः प्राणिनां प्लवगोत्तम ! ।
सौमित्रिं माञ्च रामञ्च व्यसनैः पश्य मोहितान् ॥ ४ ॥
शोकस्यास्य कथं पारं राघवोऽधिगमिष्यति ।
प्लवमानः परिक्रान्तो हतनौः सागरे यथा ॥ ५ ॥

वचनं हनूमत इत्यादि ॥ १ ॥

यच्च अनन्यमना इति वाक्यमाख्यायते तदमृतम् । यच्च शोकपरायण इति वाक्यमाख्यायते तद्विषम् ॥ २ ॥

ऐश्वर्य्ये व्यसने इति च विषयसप्तमी ॥ ३ ॥

विधिर्दैवम् असंहार्य्यः अप्राप्यप्रतिक्रियः । अत्र स्वीयमेव दुःखं दृष्टान्तयति ॥ ४ ॥

राक्षसानां वधं कृत्वा सूदयित्वा च रावणम्।
लङ्कामुन्मथितां कृत्वा कदा द्रक्ष्यति मां पतिः॥ ६॥
स वाच्यः सन्त्वरस्वेति यावदेव न पूर्य्यते।
अयं संवत्सरः कालस्तावद्धि मम जीवितम्॥ ७॥
वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गम!।
रावणेन नृशंसेन समयो यः कृतो मम॥ ८॥
विभीषणेन च भ्रात्रा मम निर्य्यातनं प्रति।
अनुनीतः प्रयत्नेन न च तत् कुरुते मतिम्॥ ९॥
मम प्रतिप्रदानं हि रावणस्य न रोचते।
रावणं मार्गते संख्ये मृत्युः कालवशं गतम्॥ १०॥
ज्येष्ठा कन्या कला नाम विभीषणसुता कपे!।
तया ममैतदाख्यातं मात्रा प्रहितया स्वयम्॥ ११॥
अविन्ध्यो नाम मेधावी विद्वान् राक्षसपुङ्गवः।
धृतिमान् शीलवान् वृद्धो रावणस्य सुसम्मतः॥ १२॥

यत-नौः पुरुषः परिक्रान्तः कृतपराक्रमः बाहुभ्यां प्लवमानो यथा सागरे पारमलब्ध्वा क्लेशेनाधिगच्छति तथा राघवोऽपि कथञ्चित्समधिगमिष्यति॥ ५॥ ६॥

स रामः॥ ७॥ ८॥

निर्य्यातनं पुनः समर्पणं न च तत् तस्मिन्नित्यर्थः॥ ९॥ १०॥

रामक्षयमनुप्राप्तं रक्षसां प्रत्यचोदयत् ।
न च तस्य स दुष्टात्मा शृणोति वचनं हितम् ॥ १३ ॥
आशंसेयं हरिश्रेष्ठ ! क्षिप्रं मां प्राप्स्यते पतिः ।
अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥ १४ ॥
उत्साहः पौरुषं सत्वमानृशंस्यं कृतज्ञता ।
विक्रमश्च प्रभावश्च सन्ति वानर ! राघवे ॥ १५ ॥
चतुर्दशसहस्राणि राक्षसानां जघान यः ।
जनस्थाने विना भ्रात्रा शत्रुः कस्तस्य नोद्विजेत् ॥ १६ ॥
न स शक्यस्तुलयितुं व्यसनैः पुरुषर्षभः ।
अहं तस्यानुभावज्ञा शक्रस्येव पुलोमजा ॥ १७ ॥

कन्या अजातपुरुषसम्बन्धा एतद्विभीषणानुनयनम् इदमेवाग्रे राम-
कृतम् विभीषणस्य निःशङ्कपरिग्रहाभिषेकयोर्बीजम् ॥ ११ ॥ १२ ॥

रामक्षयं रक्षसां रामात् क्षयं प्राप्तमित्यर्थः ॥ १३ ॥

पतिः प्राप्स्यत इत्यत्र हेतुः । अन्तरात्मेति । तस्मिन् रामे ॥ १४ ॥

उत्साहः कार्य्येषु स्थिरप्रयत्नरूप उद्योगः पौरुषं तज्जन्यः पुरुष-
व्यापारः । सत्त्वं बलम् आनृशंस्यमक्रूरता आश्रितजनदाक्षिण्यमिति
यावत् । विक्रमः शौर्य्यं प्रभावो दिव्यास्त्रसम्पन्नो महिमा ॥ १५ ॥

तत्सत्त्वानुमापककार्य्यमाह,—चतुर्दशेति ॥ १६ ॥

व्यसनैर्व्यसनदायिभीराक्षसैस्तुलयितुं प्रमितुं तस्य तत्त्वञ्च मम प्रत्य-
क्षमेवेत्याह,—अहं तस्येति । तद्रूपत्वादिति गूढम् ॥ १७ ॥

शरजालांशुमांश्शूरः कपे ! रामदिवाकरः ।
शत्रुरक्षोमयं तोयमुपशोषं नयिष्यति ॥ १८ ॥
इति सञ्जल्पमानां तां रामार्थे शोककर्षिताम् ।
अश्रुसम्पूर्णवदनामुवाच हनुमान् कपिः ॥ १९ ॥
श्रुत्वैव च वचो मह्यं क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन् महतीं हर्य्यृक्षगणसङ्कुलाम् ॥ २० ॥
अथवा मोचयिष्यामि त्वामद्यैव स राक्षसात् ।
अस्माद्दुःखादुपारोह मम पृष्ठमनिन्दिते ! ॥ २१ ॥
त्वान्तु पृष्ठगतां कृत्वा सन्तरिष्यामि सागरम् ।
शक्तिरस्ति हि मे वोढुं लङ्कामपि सरावणाम् ॥ २२ ॥
अहं प्रस्रवणस्थाय राघवायाद्य मैथिलि ! ।
प्रापयिष्यामि शक्राय हव्यं हुतमिवानलः ॥ २३ ॥
द्रक्ष्यस्यद्यैव वैदेहि ! राघवं सहलक्ष्मणम् ।
व्यवसायसमायुक्तं विष्णुं दैत्यवधे यथा ॥ २४ ॥

शरजालेत्यादि परम्परितरूपकमिदम् ॥ १८ ॥ १९ ॥

मह्यं मम सत्ता वा ॥ २० ॥

तव रामसङ्गमे रामस्येहानयनं यथैव प्रकारान्तरञ्चैव तस्य सम्भवादित्याह,—अथवेति । सोऽहं राक्षसाऽऽश्रयसङ्कतादस्माद्दुःखात् मोचयिष्यामीत्यन्वयः ॥ २१ ॥ २२ ॥ २३ ॥

त्वद्दर्शनकृतोत्साहमाश्रमस्थं महाबलम्।
पुरन्दरमिवासीनं नगराजस्य मूर्द्धनि॥ २५ ॥
पृष्ठमारोह मे देवि! मा विकाङ्क्षस्व शोभने!।
योगमन्विच्छ रामेण शशाङ्केनेव रोहिणी॥ २६ ॥
कथयन्तीव शशिना सङ्गमिष्यसि रोहिणी।
मत्पृष्ठमधिरोह त्वं तराकाशं महार्णवम्॥ २७ ॥
न हि मे सम्प्रयातस्य त्वामितो नयतोऽङ्गने!।
अनुगन्तुं गतिं शक्ताः सर्वे लङ्कानिवासिनः॥ २८ ॥
यथैवाहमिह प्राप्तस्तथैवाहमसंशयम्।
यास्यामि पश्य वैदेहि! त्वामुद्यम्य विहायसम्॥ २९ ॥
मैथिली तु हरिश्रेष्ठात् श्रुत्वा वचनमद्भुतम्।

देत्यवधे व्यवसाययुक्तं विष्णुमिव स्थितम्॥ २४ ॥
नगराजस्य श्रेष्ठस्य प्रस्रवणगिरेरित्यर्थः॥ २५ ॥
मा विकाङ्क्षस्व मोपेक्षाङ्कुर्वित्यर्थः॥ २६ ॥
कथयन्तीव। सङ्गन्तव्यो राम इति वचनं कथयन्तीव। शशिना रोहिणीव सङ्गमिष्यसीत्यन्वयः। एतद्वचनसमकालमेव रामसमीपं प्रापयिष्यामीत्यर्थः। यथा तद्वचने न प्रयास एवमनायासेन त्वां नयामीत्यर्थो वा। आकाशं तन्मार्गमवलम्ब्य महार्णवं तरेत्यन्वयः॥ २७ ॥ २८ ॥
त्वामुद्यम्य पृष्ठे कृत्वा विहायसं यास्यामि पश्य॥ २९ ॥

हर्षविस्मितसर्वाङ्गी हनूमन्तमथाब्रवीत्॥ २० ॥

हनूमन्! दूरमध्वानं कथं मां नेतुमिच्छसि।
तदेव खलु ते मन्ये कपित्वं हरियूथप!॥ २१ ॥

कथं चाल्पशरीरस्त्वं मामितो नेतुमिच्छसि।
सकाशं मानवेन्द्रस्य भर्त्तुर्मे प्लवगर्षभ!॥ २२ ॥

सीतायास्तु वचः श्रुत्वा हनूमान् मारुतात्मजः।
चिन्तयामास लक्ष्मीवान् नवं परिभवं कृतम्॥ २३ ॥

न मे जानाति सत्त्वं वा प्रभावं वासितेक्षणा।
तस्मात् पश्यतु वैदेही यद्रूपं मम कामतः॥ २४ ॥

इति सञ्चिन्त्य हनुमांस्तदा प्लवगसत्तमः।
दर्शयामास सीतायाः स्वरूपमरिमर्दनः॥ ३५ ॥

स तस्मात् पादपाद्धीमानाप्लुत्य प्लवगर्षभः।
ततो वर्धितुमारेभे सीताप्रत्ययकारणात्॥ ३६ ॥

हर्षविस्मितसर्वाङ्गी हर्षपुलकितसर्वाङ्गी ॥ २० ॥
तदेव दृश्यमानमेव ॥ २१ ॥ २२ ॥
नवं परिभवम्। अल्पशरीरोऽयमिति एवंरूपम् ॥ २३ ॥
कामतः इच्छाकृतम् ॥ २४ ॥ २५ ॥
तस्मात् पादपात् क्षिप्रपातः। शरीरवर्द्धनं तद्द्वारप्रकाशाभ्यामभ्यत्विना राक्षसी शाखमीति तस आकृतिः ॥ ३६ ॥

मेरुमन्दरसङ्काशो बभौ दीप्तानलप्रभः।
अग्रतो व्यवतस्थे च सीताया वानरर्षभः॥ ३७॥
हरिः पर्वतसङ्काशस्ताम्रवक्त्रो महाबलः।
वज्रदंष्ट्रनखो भीमो वैदेहीमिदमब्रवीत्॥ ३८॥
सपर्वतवनोद्देशां साट्टप्राकारतोरणाम्।
लङ्कामिमां सनाथां वा नयितुं शक्तिरस्ति मे॥ ३९॥
तदवस्थाप्यतां बुद्धिरलं देवि! विकाङ्क्षया।
विशोकं कुरु वैदेहि! राघवं सहलक्ष्मणम्॥ ४०॥
तं दृष्ट्वाचलसङ्काशमुवाच जनकात्मजा।
पद्मपत्रविशालाक्षी मारुतस्यौरसं सुतम्॥ ४१॥
तव सत्त्वं बलञ्चैव विजानामि महाकपे!।
वायोरिव गतिञ्चापि तेजश्चाग्नेरिवाद्भुतम्॥ ४२॥
•प्राकृतोऽन्यः कथञ्चेमां भूमिमागन्तुमर्हति।
उदधेरप्रमेयस्य पारं वानरयूथप!॥ ४३॥

अग्रतो व्यवतस्थे योग्यपुरोदेशे स्थितः॥ ३७॥ ३८॥
सनाथां सराघवां नयितुं नेतुम्॥ ३९॥
अवस्थाप्यतां समर्थोऽयमिति निश्चीयतां विकाङ्क्षया सन्देहेन विशोकं कुरु मत्पृष्ठे तत्र गत्वेति शेषः॥ ४०॥ ४१॥
विजानामि एवंविधत्वद्रूपदर्शनात् प्रागप्यनुमानादिति भावः॥ ४२॥

जानामि गमने शक्तिं नयने चापि ते मम।
अवश्यं सम्प्रधार्य्याशु कार्य्यसिद्धिरिवात्मन: ॥ ४४ ॥
अयुक्तन्तु कपिश्रेष्ठ ! मया गन्तुं त्वया सह।
वायुवेगसवेगस्य वेगो मां मोहयेत्तव ॥ ४५ ॥
अहमाकाशमासक्ता उपर्य्युपरि सागरम्।
प्रपतेयं हि ते पृष्ठाद्भयो वेगेन गच्छत: ॥ ४६ ॥
पतिता सागरे चाहं तिमिनक्रझषाकुले।
भवेयमाशु विवशा यादसामन्नमुत्तमम् ॥ ४७ ॥
न च शक्ष्ये त्वया सार्द्धं गन्तुं शत्रुविनाशन ! ।
कलत्रवति सन्देहस्त्वयि स्यादप्यसंशयम् ॥ ४८ ॥
ह्रियमाणान्तु मां दृष्ट्वा राक्षसा भीमविक्रमा:।
अनुगच्छेयुरादिष्टा रावणेन दुरात्मना ॥ ४९ ॥

तदेवानुमानं दर्शयति,—प्राक्षत इति ॥ ४३ ॥

तवेव ममाप्यात्मनः कार्य्यसिद्धिरवश्यं सम्प्रधार्य्या विचार्य्या त्वया तु स्वबलवैभवेन विचारिता कार्य्यसिद्धिः ॥ ४४ ॥

भवत्वात्तर्हि को विचारस्तत्राह,—अयुक्तन्त्विति ॥ ४५ ॥

उपर्य्युपरि सागरं सागरस्योपरीत्यर्थः ॥ ४६ ॥ ४७ ॥

इतोऽपि गमनमयुक्तं त्वया सहेत्याह—न चेति। कलत्रवति स्त्रिया सह गन्तरि सन्देहः राक्षसानामिति शेषः ॥ ४८ ॥ ४९ ॥

तैस्त्वं परिवृतः शूरैः शूलमुद्गरपाणिभिः।
भवेस्त्वं संशयं प्राप्तो मया वीर! कलत्रवान् ॥ ५० ॥
सायुधा बहवो व्योम्नि राक्षसास्त्वं निरायुधः।
कथं शक्ष्यसि संयातुं माञ्चैव परिरक्षितुम् ॥ ५१ ॥
युध्यमानस्य रक्षोभिस्तव तैः क्रूरकर्मभिः।
प्रपतेयं हि ते पृष्ठाद्भयार्त्ता कपिसत्तम! ॥ ५२ ॥
अथ रक्षांसि भीमानि महान्ति बलवन्ति च।
कथञ्चित्साम्पराये त्वां जयेयुः कपिसत्तम! ॥ ५३ ॥
अथवा युध्यमानस्य पतेयं विमुखस्य ते।
पतिताञ्च गृहीत्वा मां नयेयुः पापराक्षसाः ॥ ५४ ॥

संशयं प्राणसंशयम्। तैस्त्वं परिवृतो भवेः ततस्त्वं संशयं प्राप्तो भवेरिति त्वं शब्दद्वयनिर्वाहः ॥ ५० ॥

तत्र हेतुमाह,—सायुधा इति। त्वामपि निरायुधप्रदेश इत्यर्थः ॥ ५१ ॥ ५२ ॥

कथञ्चिन्महता यत्नेन साम्पराये युद्धे जयेयुः। तस्याव्यवस्थितत्वादिति भावः ॥ ५३ ॥

अथ तस्मिन्नपि एवमपि पतने महाननर्थ इत्याह,—अथवेति। पतेयं तव पृष्ठादिति शेषः। तत्र हेतुर्विमुखस्येति। युद्धपारवश्यात् मम रक्षाविमुखस्येत्यर्थः ॥ ५४ ॥

मां वा हरेयुस्तद्धत्ताद्विशसेयुरथापि वा।
अनवस्थौ हि दृश्येते युद्धे जयपराजयौ ॥ ५५ ॥
अहं वापि विपद्येयं रक्षोभिरभितर्जिता।
त्वत्प्रयत्नो हरिश्रेष्ठ! भवेन्निष्फल एव तु ॥ ५६ ॥
कामन्त्वमपि पर्य्याप्तो निहन्तुं सर्वराक्षसान्।
राघवस्य यशो हीयेत्त्वया शस्तैस्तु राक्षसैः ॥ ५७ ॥
अथवादाय रक्षांसि न्यसेयुः संवृते हि माम्।
यत्र ते नाभिजानीयुर्हरयो नापि राघवः ॥ ५८ ॥
आरम्भस्तु मदर्थोऽयं ततस्तव निरर्थकः।
त्वया हि सह रामस्य महानागमने गुणः ॥ ५९ ॥
मयि जीवितमायत्तं राघवस्यामितौजसः।

विशसेयुः रामविषयकक्षेषवंशात् तत्सन्तोषमाशार्थमिति शेषः ॥ ५५ ॥
॥ ५६ ॥
यशो हीयेत् स्वयं प्रत्याहर्त्तुमशक्ता इत्यपयशो वृद्धिः स्यादिति भावः। शस्तैर्हिंसितैः ॥ ५७ ॥
राक्षसैः स्वग्रहणपक्षे दोषान्तरमाह,—अथवेति। संवृते गुप्ते ॥ ५८ ॥
आरम्भः समुद्रतरणादिरूपः। एवं स्वगमनपक्षे दोषमुक्त्वा राघवानयनपक्ष एव गुणवानित्याह,—त्वया हीति ॥ ५९ ॥

भ्रातृणाञ्च महाबाहो! तव राजकुलस्य च ॥ ६० ॥
तौ निराशौ मदर्थञ्च शोकसन्तापकर्शितौ।
सहसर्वैर्हरीन्द्रैस्त्यक्ष्यतः प्राणसंग्रहम् ॥ ६१ ॥
भर्त्तुर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर!।
नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरोत्तम! ॥ ६२ ॥
यदहं गात्रसंस्पर्शं रावणस्य गता बलात्।
अनीशा किं करिष्यामि विनाथा विवशा सती ॥ ६३ ॥
यदि रामो दशग्रीवमिह हत्वा सराक्षसम्।
मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ॥ ६४ ॥

रामेण मदप्राप्ता सर्वनाशप्रसङ्ग इत्याह,—मयि जीवितमिति। भ्रातृणां लक्ष्मणादीनाम्। राजकुलस्य सुग्रीवकुलस्य ॥ ६० ॥

प्राणसंग्रहं प्राणसम्बन्धम् ॥ ६१ ॥

हनूमता सह गमनाभावे कारणान्तरमाह,—भर्त्तुरिति। रावणगात्रस्पर्शस्तु न स्वत इत्याह,—यदहमिति ॥ ६२ ॥

अनीशा स्त्रीत्वात् स्वयमसमर्था। विवशा विचेष्टा। विनाथा असन्निहितरामलक्ष्मणा। हा सीते लक्ष्मणेति मारीचवाक्यं श्रुत्वा रामानर्थशङ्कया लक्ष्मणस्यापि प्रस्थापनादिति भावः ॥ ६३ ॥

तत्तस्य सदृशं स्वमहिम्ना। सगणं प्रभुं हत्वा मन्नयनम्। सगण रावणवधार्थमेवावतारात्। तस्य च मद्गमनेऽसम्भवात्। एवञ्च स्वकार्यानिष्पत्त्यागतायामपि क्रुद्धेदिति गूढम् ॥ ६४ ॥

श्रुताश्च दृष्टा हि मया पराक्रमा
महात्मनस्तस्य रणावमर्द्दिनः।
न देवगन्धर्वभुजङ्गराक्षसा
भवन्ति रामेण समा हि संयुगे ॥ ६५ ॥
समीक्ष्य तं संयति चित्रकार्मुकं
महाबलं वासवतुल्यविक्रमम्।
सलक्ष्मणं को विषहेत राघवं
हुताशनं दीप्तमिवानिलेरितम् ॥ ६६ ॥
सलक्ष्मणं राघवमाजिमर्द्दन-
न्दिशागजं मत्तमिव व्यवस्थितम्।
सहेत को वानरमुख्य! संयुगे
युगान्तसूर्य्यप्रतिमं शरार्च्चिषम् ॥ ६७ ॥
स मे कपिश्रेष्ठ! सलक्ष्मणः प्रियं
सयूथपं क्षिप्रमिहोपपादय।

तादृशबलस्य तस्य मया सुविदितमित्याह,—श्रुताश्चेति। विश्वामित्रयज्ञादौ कृताः वालिवधादयश्च श्रुताः। अन्ये दृष्टाः ॥ ६५ ॥ ६६ ॥ ६७ ॥

अथ निश्चितं कार्य्यमाह,—स मे इति। सयूथपं सुग्रीवम् उप-

चिराय रामं प्रति शोककर्षितां
　　कुरुष्व मां वानरवीर ! हर्षिताम् ॥ ६८ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
सप्तत्रिंशः सर्गः ॥ ३७ ॥

पादयानय । चिरकालं शोककर्षितां रामस्यागमनेन हर्षितां कुरुष्व । समूलसकलनाशेनेति भावः । ६८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टत्रिंशः सर्गः ।

ततः स कपिशार्दूलस्तेन वाक्येन तोषितः ।
सीतामुवाच तच्छ्रुत्वा वाक्यं वाक्यविशारदः ॥ १ ॥
युक्तरूपं त्वया देवि ! भाषितं शुभदर्शने ! ।
सदृशं स्त्रीस्वभावस्य साध्वीनां विनयस्य च ॥ २ ॥
स्त्रीत्वान्न त्वं समर्थासि सागरं व्यतिवर्त्तितुम् ।
मामधिष्ठाय विस्तीर्णं शतयोजनमायतम् ॥ ३ ॥
द्वितीयं कारणं यच्च ब्रवीषि विनयान्विते ! ।
रामादन्यस्य नार्हामि संसर्गमिति जानकि ! ॥ ४ ॥

तेन वाक्येन सीतयोक्तेन वाक्येन ॥ १ ॥

स्त्रीस्वभावस्य भीरुत्वादेः । साध्वीनां पतिव्रतानाम् । विनयस्य वृत्तस्य सदृशं युक्तरूपम् अतिशयेन युक्तम् ॥ २ ॥

वचनस्य युक्तरूपतां प्राशस्त्यं दर्शयति,—स्त्रीत्वादिति । शत-योजनं सागरं व्यतिवर्त्तितुं तत्तु विस्तीर्णम् अतिदूरपारमपि मामधिष्ठायेत्यन्वयः । स्त्रीत्वं न तु समर्थं हीति पाठे त्वं स्त्री न तु समर्थम् । न समर्थेत्यर्थः । लिङ्गव्यत्यय आर्ष इति तीर्थः । स्त्रीणां भीरुस्वभावत्वादिति भावः ॥ ३ । ४ ॥

एतत्ते देवि ! सदृशं पत्न्यास्तस्य महात्मनः ।
का ह्यन्या त्वामृते देवि ! ब्रूयाद्वचनमीदृशम् ॥ ५ ॥
श्रोष्यते चैव काकुत्स्थः सर्वं निरवशेषतः ।
चेष्टितं यत्त्वया देवि ! भाषितञ्च ममाग्रतः ॥ ६ ॥
कारणैर्बहुभिर्देवि ! रामप्रियचिकीर्षया ।
स्नेहप्रस्कन्नमनसा मयैतत्समुदीरितम् ॥ ७ ॥
लङ्काया दुष्प्रवेशत्वाद्दुस्तरत्वान्महोदधेः ।
सामर्थ्यादात्मनश्चैव मयैतत्समुदीरितम् ॥ ८ ॥
इच्छामि त्वां समानेतुमद्यैव रघुनन्दिना ।
गुरुस्नेहेन भक्त्या च नान्यथा तदुदाहृतम् ॥ ९ ॥

ईदृशं वचनं त्वया सह न यास्यामीत्येतद्वचनम्। त्वद्भिन्नेदृश्यामापदि ईदृशं वचः का ब्रूयात् ॥ ५ ॥

चेष्टितं व्यापारो विलापादिरूपः ॥ ६ ॥

कारणैर्बहुभिरुपपन्नं यत्त्वया मदग्रतो भाषितं तद्रामाग्रे उच्यमानगुणकेन मया ईरितं काकुत्स्थो निरवशेषतः श्रोष्यत इत्यन्वय इति कतकः ॥ ७ ॥

रामसमीपगमने ऽसौ हेतुमाह,—लङ्काया इति। रामेण पतिना लङ्काया दुष्प्रवेशत्वात् महोदधेर्दुस्तरत्वाच्चात्मनः सामर्थ्यसत्त्वाच्च ॥ ८ ॥

इच्छामीत्यादि समुदीरितम्। मयेति शेषः। रघुनन्दिना रघुवंश्यानन्दयति तेन रामेण समानेतुमित्यन्वयः। तदपि गुरौ रामस्य स्नेहेन त्वयि भक्त्या चोक्तम्। न तु निजबलगर्वादित्यर्थः ॥ ९ ॥

यदि नोत्सहसे यातुं मया सार्द्धमनिन्दिते ।।
अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि यत् ॥ १० ॥
एवमुक्ता हनुमता सीता सुरसुतोपमा ।
उवाच वचनं मन्दं बाष्पप्रग्रथिताक्षरम् ॥ ११ ॥
इदं श्रेष्ठमभिज्ञानं ब्रूयास्त्वन्तु मम प्रियम् ।
शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पदे ॥ १२ ॥
तापसाश्रमवासिन्याः प्राज्यमूलफलोदके ।
तस्मिन् सिद्धाश्रिते देशे मन्दाकिन्यविदूरतः ॥ १३ ॥
तस्योपवनखण्डेषु नानापुष्पसुगन्धिषु ।
विहृत्य सलिले क्लिन्नो ममाङ्के समुपाविशः ॥ १४ ॥

यदीति। उक्तरीत्या। अयुक्तत्वपर्य्यालोचनयेत्यर्थः ॥ १० ॥

एवमुक्ता प्रत्यभिज्ञां देहीत्युक्ता। मन्दमुपांशु। एकान्तवृत्तान्तस्मरणजो बाष्पः ॥ ११ ॥

इदं रहस्यवृत्तान्तकथनरूपम्। रहस्यवृत्तान्तत्वादेवान्याज्ञातत्वेन श्रेष्ठम्। तदेवाह,—शैलस्येति। पूर्वोत्तरे ईशानदिक्स्थे पादे प्रत्यन्तपर्वतरूपे पदे स्थाने ॥ १२ ॥

मन्दाकिन्यविदूरतः मन्दाकिनीसमीपे। सिद्धाश्रिते यक्षमूलादिमति देशे तापसाश्रमवासिन्या मम यद्वृत्तं तद्वृत्तमभिज्ञानं त्वं ब्रूया इति सम्बन्धः ॥ १३ ॥

समुपाविष्टोऽभूः ॥ १४ ॥

ततो मां स समायुक्तो वायसः पर्य्यतुण्डयत्।
तमहं लोष्ठमुद्यम्य वारयामि स्म वायसम्॥ १५॥
दारयन् स च मां काकस्तत्रैव परिलीयते।
न चाप्युपारमन्मांसाद्भक्षार्थी बलिभोजनः॥ १६॥
उत्कर्षन्त्यां च रशनां क्रुद्धायां मयि पक्षिणे।
स्रंसमाने च वसने ततो दृष्टा त्वया ह्यहम्॥ १७॥
त्वया विहसिता चाहं क्रुद्धा संलज्जिता तदा।
भक्ष्यगृध्नेण काकेन दारिता त्वामुपागता॥ १८॥

ततोऽनन्तरम्। सः त्वदनुभवसिद्धः। समायुक्तः विकाराभियुक्तः सन्। पर्य्यतुण्डयत्। स्तनान्तरे इति शेषः। यद्वा मांससमायुक्तः। मांसेच्छायुक्त इत्यर्थः॥ १५॥

तत्रैव परिलीयते नार्य्यमाणोऽपि न देशान्तरं गच्छति स्म। न च मांसात् मांसविदारणाद्भक्षार्थी उपारमत्। यद्ययं वस्तुतो न मांसार्थी-त्युच्यते तदेत्थं योज्यम्। स वायसो मांसाद्भक्षार्थीव। इवाध्याहारः। ल्यब्लोपे पञ्चमी। मांसमुपगत्य भक्षार्थीव। यद्वा । मांसभोजने भक्षार्थीव पुनःपुनर्विलेखनान्न विरराम॥ १६॥

अथ पक्षिणे क्रुद्धायां मयि रशनां वासोदाम्यं योत्कर्षन्त्यां तदानीं वसने स्रंसमाने सति त्वयाहं स्रस्तवसना दृष्टा ततस्त्वया विहसिता। तदा तत्परिहासकाले क्रुद्धा सम्यक् लज्जिता च। भक्ष्यगृध्नेन भक्ष्य-गृध्नेनैव काकेन दारिता सती त्वामुपागता॥ १७॥ १८॥

ततः श्रान्ताहमुत्सङ्गमासीनस्य तवाविशम्।
क्रुध्यन्तीव प्रहृष्टेन त्वयाहं परिसान्त्विता ॥ १९ ॥
बाष्पपूर्णमुखी मन्दं चक्षुषी परिमार्जती।
लक्षिताहन्त्वया नाथ! वायसेन प्रकोपिता ॥ २० ॥
परिश्रमाच्च सुप्ता हे राघवाङ्के ऽप्यहञ्चिरम्।
पर्य्यायेण प्रसुप्तश्च ममाङ्के भरताग्रज ॥ २१ ॥
स तत्र पुनरेवाथ वायसः समुपागमत्।
ततः सुप्तप्रबुद्धां मां राघवाङ्कात्समुत्थिताम्।
वायसः सहसागम्य विरराद स्तनान्तरे ॥ २२ ॥
पुनःपुनरथोत्पत्य विरराद स मां भृशम्।

तदनन्तरं वायसापसारणेन श्रान्ताहमासीनस्य ते उत्सङ्गमाविशम्। ततः परिश्रमनाशं कृत्वा तूष्णीं तिष्ठति भवति क्रुद्धन्ती अहं प्रहृष्टेन त्वया परिसान्त्विता ॥ १९ ॥

अतएव बाष्पपरिपूर्णमुखी चक्षुषी च मन्दं परिमार्जती। हे नाथ वायसेन प्रकोपितेति त्वया लक्षितास्मि ॥ २० ॥

अथ हे राघवाहं तवाङ्के परिश्रमात् सुप्तास्मि। भरताग्रज त्वञ्च पर्य्यायेण ममाङ्के सुप्तः ॥ २१ ॥

स तत्रेति। त्वयि स्वपति मयि जाग्रत्यामित्यर्थः। सुप्तप्रबुद्धां राघवाङ्के सुप्ता ततः प्रबुद्धामतएव राघवाङ्कादुत्थितां वायसः पुनरागम्य स्तनान्तरे विरराद चलिखत् ॥ २२ ॥

ततः समुत्थितो रामो मुक्तैः शोणितबिन्दुभिः ॥ २३ ॥
स मां दृष्ट्वा महाबाहुर्वितुन्नां स्तनयोस्तदा।
आशीविष इव क्रुद्धः श्वसन् वाक्यमभाषत ॥ २४ ॥
केन ते नागनासोरु! विक्षतं वै स्तनान्तरम्।
कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ २५ ॥
वीक्षमाणस्ततस्तं वै वायसं समवैक्षत।
नखैः सरुधिरैस्तीक्ष्णैर्मामेवाभिमुखं स्थितम् ॥ २६ ॥
पुत्रः किल स शक्रस्य वायसः पततां वरः।
धरान्तरं गतः शीघ्रं पवनस्य गतौ समः ॥ २७ ॥

एतदन्तमभिज्ञानवचनानुवादः। अथ हनूमते शेषवृत्तान्तकथनं तत इति। ततः पुनःपुनर्विलेखनाद्धेतोः मुक्तैः शोणितबिन्दुभिः रामः समुत्थितोऽभूत् सुखसुप्तोऽपीति शेषः। ॥ २३ ॥

तदा स्तनयोर्वितुन्नां मां दृष्ट्वा क्रुद्धः। अनेन पूर्वपर्याये केवलं रामः काकचेष्टाबुद्ध्या परिहासमेव कृतवानिति सूचितम् ॥ २४ ॥ २५ ॥

वीक्षमाण इतस्ततः प्रान्तदेशमित्यर्थः ॥ २६ ॥

देवि कोऽसावेवंविधो वायस इति हनूमतः प्रश्नायामाह,— पुत्र इति। शक्रपुत्रो जयन्तः स तु वायसो वायसरूपधारीत्यर्थः। धरान्तरं गतः भूमिविलं प्राप्तः शीघ्रगतौ पवनस्य समः धरान्तरचारित्वन्तु पवनादस्य विशेषः। न हि वायुस्तत्सञ्चारीति कतकः ॥ २७ ॥

ततस्तस्मिन् महाबाहुः कोपसंवर्त्तितेक्षणः ।
वायसे कृतवान् क्रूरां मतिं मतिमतां वरः ॥ २८ ॥
स दर्भसंस्तरात् गृह्य ब्राह्मणोऽस्त्रेण योजयत् ।
स दीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् ॥ २९ ॥
स तं प्रदीप्तं चिक्षेप दर्भन्तं वायसं प्रति ।
ततस्तु वायसं दर्भः सोऽम्बरेऽनुजगाम ह ॥ ३० ॥
अनुसृष्टस्तदा काको जगाम विविधां गतिम् ।
त्राणकाम इमं लोकं सर्वं वै विचचार ह ॥ ३१ ॥
स पित्रा च परित्यक्तः सर्वैश्च परमर्षिभिः ।
त्रीन् लोकान् सम्परिक्रम्य तमेव शरणं गतः ॥ ३२ ॥
स तं निपतितं भूमौ शरण्यः शरणागतम् ।
वधार्हमपि काकुत्स्थः कृपया पर्य्यपालयत् ॥ ३३ ॥

कोपेन संवर्त्तिते विवर्त्तिते ईक्षणे येन सः ॥ २८ ॥

दर्भसंस्तरात् संस्तरणार्थगृहीतदर्भमुष्टेरेकमिति शेषः । योजयत् ब्रह्मास्त्रदेवता मन्त्रेणायोजयदित्यर्थः ॥ २९ ॥ ३० ॥

विविधां गतिं जगामेत्येतद्विवृणोति । त्राणेति । इमं लोकं भूलोकादिसत्यलोकान्तम् ॥ ३१ ॥

पित्रा परित्यक्तः सर्गोऽपीति शेषः । पित्रेत्युपलक्षणं ब्रह्मादीनाम् ॥ ३२ ॥

पर्य्यपालयत् । प्राणरक्षणेनेति शेषः ॥ ३३ ॥

परिद्यूनं विवर्णञ्च पतमानं तमब्रवीत् ।
मोघमस्त्रं न शक्यन्तु ब्राह्मं कर्त्तुं तदुच्यताम् ॥ ३४ ॥
ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ।
दत्त्वा तु दक्षिणं नेत्रं प्राणेभ्यः परिरक्षितः ॥ ३५ ॥
स रामाय नमस्कृत्वा राज्ञे दशरथाय च ।
विसृष्टस्तेन वीरेण प्रतिपेदे स्वमालयम् ॥ ३६ ॥
मत्कृते काकमात्रेऽपि ब्रह्मास्त्रं समुदीरितम् ।
कस्माद्यो माहरत्त्वत्तः क्षमसे तं महीपते ! ॥ ३७ ॥
स कुरुष्व महोत्साहां कृपां मयि नरर्षभ ! ।
त्वया नाथवती नाथ ! अनाथ इव दृश्यते ॥ ३८ ॥

परिद्यूनं क्षीणशक्तिं ब्राह्ममस्त्रं मोघं कर्त्तुं न शक्यमतस्तदुच्यताम् । तत् संहार्य्यं वस्तु भार्गववदुच्यतामित्यर्थः ॥ ३४ ॥

स दक्षिणाक्षिं अस्य संहार्य्यं भवत्वित्युक्तः परिरक्षितः । परिरक्षितवानात्मानमिति शेषः ॥ ३५ ॥

स अयन्तः ॥ ३६ ॥

एवं हनूमते रामैकसंवेद्यमभिज्ञानमुक्त्वा सन्देशान्तरमाह,—मत्कृते इति । कस्मात् क्षमसे इत्यवान्तरवाक्यान्ते त्वमब्रवीति ब्रूहीति वाक्यशेषो अध्याय इति कतकः । बुद्धिस्थं राममेव सोपालम्भं सम्बोध्य प्रार्थयते इति तीर्थः त्वत्तस्त्वत्सकाशाद्यो मां मा अहरत् हृतवान् ॥ ३७ ॥

आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतम्।
जानामि त्वां महावीर्यं महोत्साहं महाबलम्॥ ३९ ॥
अपारवारमक्षोभ्यं गाम्भीर्य्यात् सागरोपमम्।
भर्त्तारं ससमुद्राया धरण्या वासवोपमम्॥ ४० ॥
एवमस्त्रविदां श्रेष्ठो बलवान् सत्ववानपि।
किमर्थमस्त्रं रक्षःसु न योजयसि राघव!॥ ४१ ॥
न नागा नापि गन्धर्वा न सुरा न मरुद्गणाः।
रामस्य समरे वेगं शक्ताः प्रतिसमीहितुम्॥ ४२ ॥
तस्य वीर्य्यवतः कच्चिद्यद्यस्ति मयि सम्भ्रमः।
किमर्थं न शरैस्तीक्ष्णैः क्षयं नयति राक्षसान्॥ ४३ ॥
भ्रातुरादेशमादाय लक्ष्मणो वा परन्तपः।

मम महोत्साहत्त्वां मयि कृपां कुरु त्वया नाथवत्यपि मल्लक्षणा नारी अनाथेव दृश्यते इत्यर्थः॥ ३८ ॥

आनृशंस्यं दया न च शक्योऽयमर्थ इति चेत्तत्राह,—जानामीति॥ ३९ ॥

अपारवारं मर्य्यादारहितम्। देशकालादिपरिच्छेदहीनमित्यर्थः। जानामीत्यनुकर्षः॥ ४० ॥ ४१ ॥

अथ हनुमन्तं सामान्यतो रामवैभवमाह,—न नागा इति। प्रतिसमीहितुं प्रतिभटतया स्थित्वा निरोद्धुमित्यर्थः। प्रतिसमाधितुमिति पाठान्तरम्। तत्रार्थस्तु स एवार्थः॥ ४२ ॥

कस्य हेतोर्न मां वीरः परित्राति महाबलः ॥ ४४ ॥
यदि तौ पुरुषव्याघ्रौ वाय्विन्द्रसमतेजसौ ।
सुराणामपि दुर्द्धर्षौ किमर्थं मामुपेक्षतः ॥ ४५ ॥
ममैव दुष्कृतं किञ्चिन्महदस्ति न संशयः ।
समर्थावपि तौ यन्मां नावेक्षेते परन्तपौ ॥ ४६ ॥
वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम् ।
अथाब्रवीन्महातेजा हनूमान् हरियूथपः ॥ ४७ ॥
त्वच्छोकविमुखो रामो देवि ! सत्येन ते शपे ।
रामे दुःखाभिपन्ने तु लक्ष्मणः परितप्यते ॥ ४८ ॥
कथञ्चिद्भवती दृष्टा न कालः परिशोचितुम् ।
इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि शोभने ॥ ४९ ॥
तावुभौ पुरुषव्याघ्रौ राजपुत्रौ महाबलौ ।
त्वद्दर्शनकृतोत्साहौ लोकान् भस्मीकरिष्यतः ॥ ५० ॥
हत्वा च समरे क्रूरं रावणं सहबान्धवम् ।
राघवस्त्वां विशालाक्षि ! स्वां पुरीं प्रतिनेष्यति ॥ ५१ ॥

मम सम्भ्रम इति पाठे मम प्राप्तये सम्भ्रम इत्यर्थः ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥ ४७ ॥

कस्मादाशु समभयं न करोतीत्यस्योत्तरं त्वच्छोकेति । त्वद्वियोगजशोकेन सर्वकार्य्यविमुख इत्यर्थः ॥ ४८ ॥

ब्रूहि यत्र राघवो वाच्यो लक्ष्मणश्च महाबलः ।
सुग्रीवो वापि तेजस्वी हरयो वा समागताः ॥ ५२ ॥
इत्युक्तवति तस्मिंश्च सीता पुनरथाब्रवीत् ।
कौशल्या लोकभर्त्तारं सुषुवे यं मनस्विनी ॥ ५३ ॥
तं ममार्थे सुखं पृच्छ शिरसा चाभिवादय ।
स्रजश्च सर्वरत्नानि प्रियायाश्च वराङ्गनाः ॥ ५४ ॥
ऐश्वर्य्यञ्च विशालायां पृथिव्यामपि दुर्लभम् ।
पितरं मातरञ्चैव सम्मान्याभिप्रसाद्य च ॥ ५५ ॥
अनुप्रव्रजितो रामं सुमित्रा येन सुप्रजाः ।
आनुकूल्येन धर्मात्मा त्यक्त्वा सुखमनुत्तमम् ॥ ५६ ॥
अनुगच्छति काकुत्स्थं भ्रातरं पालयन् वने ।
सिंहस्कन्धो महाबाहुर्मनस्वी प्रियदर्शनः ॥ ५७ ॥

यतः कथञ्चिद्भवती दृष्टा, अत इमं मुहूर्त्तमारभ्य ते परिदेवितुं काले न। कुतस्तत्राह,—यतो दुःखानाम् अन्तं द्रक्ष्यसि ॥ ४९ ॥ ५० ॥ ५१ ॥

नियोगसारं ब्रूहीत्याह,—ब्रूहीति ॥ ५२ ॥ ५३ ॥

ममार्थे मत्प्रतिनिधित्वेनेत्यर्थः। लक्ष्मणः पूर्वं मारीचवधाय गते रामे तत्पृष्ठगमनाय सम्यक् कृतपारुष्य इति ज्ञात्वा तस्य विमोचन-पक्षाप्युपेक्षा माभूदिति विशिष्य कुशलप्रश्नं ब्रूहीत्याह,—स्रजश्चेति। दुर्लभमित्यन्त वाक्यमनुवाद्यं ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

पितृवद्वर्त्तते रामे मातृवन् मां समाचरत्।
ह्रियमाणां तदा वीरो न तु मां वेद लक्ष्मणः॥ ५८ ॥
वृद्धोपसेवी लक्ष्मीवान् शक्तो न बहुभाषिता।
राजपुत्रप्रियश्रेष्ठः सदृशः श्वशुरस्य मे॥ ५९ ॥
मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः।
न युक्तो धुरि यस्यान्तु तामुद्वहति वीर्य्यवान्!॥ ६० ॥
यं दृष्ट्वा राघवो नैव वृत्तमार्य्यमनुस्मरत्।
स ममार्थाय कुशलं वक्तव्यो वचनान्मम॥ ६१ ॥
मृदुर्नित्यं शुचिर्दक्षः प्रियो रामस्य लक्ष्मणः।
यथा हि वानरश्रेष्ठ! दुःखक्षयकरो भवेत्॥ ६२ ॥

समाचरत् पर्य्यचरत्। दुर्वाक्यैरतिपीड़ां प्रापितो वीरो मां ह्रियमाणां केनचिद्धरिष्यमाणाम्। वर्तमानसामीप्ये लट्। न वेद यदि वेद मयि तथा प्रलपन्त्यामपि निकटे एव तिष्ठतो मद्वृत्तान्तवशात्र नावेदीदित्यर्थः॥ ५८॥

शक्तः समर्थः। न बहुभाषिता मितभाषीत्यर्थः। राजपुत्रस्य रामस्य प्रियेषु श्रेष्ठः अतिप्रिय इत्यर्थः॥ ५९॥

तदेवाह,—मत्त इति। मत्तोऽपीत्यर्थः यस्यां धुरि यः कार्य्ये॥ ६०॥

वृत्तं प्रमीतं पितृवदाचरत्वात्तत्स्मरणाभावः अनुस्मरत् अन्वस्मरत्। ममार्थाय मत्प्रयोजनोन्मुखाय मम वचनाद्वक्तव्यः। सीता त्वां कुशलं पृच्छतीति वक्तव्य इत्यर्थः॥ ६१॥

त्वमस्मिन् कार्य्यनिर्वाहे प्रमाणं हरियूथप ! ।
राघवस्त्वत्समारम्भान्मयि यत्नपरो भवेत् ॥ ६३ ॥
इदं ब्रूयाश्च मे नाथं शूरं रामं पुनःपुनः ।
जीवितं धारयिष्यामि मासं दशरथात्मज ! ॥ ६४ ॥
ऊर्द्धं मासान्न जीवेयं सत्येनाहं ब्रवीमि ते ।
रावणेनोपरुद्धां मां निकृत्या पापकर्मणा ।
त्रातुमर्हसि वीर ! त्वं पातालादिव कौशिकीम् ॥ ६५ ॥
ततो वस्त्रगतं मुक्त्वा दिव्यं चूड़ामणिं शुभम् ।

हि निश्चये यथा दुःखक्षयकरो भवेद्दुःखक्षयहेतुप्रवृत्तिपरो भवेत् तथा वाच्य इत्यनुकर्षः ॥ ६२ ॥

किं बहुनास्य कार्य्यस्य निर्वाहे त्वं प्रमाणं यथा कार्य्यनिर्वाहो भवति तथा कुर्वित्यर्थः। यत एवम् अतो राघव इति ॥ ६३ ॥ ६४ ॥

ऊर्द्धं मासादिति। रावणदत्ताऽवध्यवशिष्टं किञ्चिदधिकं मासद्वयमपि न सहिष्य इति भावः। तत्समाप्तौ त्वदनागमने अनार्य्याऽनार्य्यमेवाचरेदतोर्वागेव मरणं स्याय इति शीघ्रमागमनार्थेयमुक्तिरिति बोध्यम्। निकृत्या राक्षसीकर्त्तृकनिग्रहेणापवद्धाम्। पातालादिव कौशिकीं पातालमग्नां भुवं भगवानिव त्रातुमर्हसि। गायत्र्याः सांख्यायनगोत्रत्ववत् भुः कौशिकीति कतकः। कौशिकी देवेन्द्रश्रीः पुरा किल वृत्रवधाभिभूतस्येन्द्रस्य लक्ष्मीं पातालं प्रविष्टां देवप्रार्थितो नारायण उद्धृत्य पुनरिन्द्राय प्रायच्छदिति पुराणमार्येति तीर्थः ॥ ६५ ॥

प्रदेयो राघवायेति सीता हनुमते ददौ ॥ ६६ ॥
प्रतिगृह्य ततो वीरो मणिरत्नमनुत्तमम् ।
अङ्गुल्या योजयामास न ह्यस्य प्राभवद्भुजः ॥ ६७ ॥
मणिरत्नं कपिवरः प्रतिगृह्याभिवाद्य च ।
सीतां प्रदक्षिणं कृत्वा प्रणतः पार्श्वतः स्थितः ॥ ६८ ॥
हर्षेण महता युक्तः सीतादर्शनजेन सः ।
हृदयेन गतो रामं लक्ष्मणञ्च सलक्षणम् ॥ ६९ ॥
मणिवरमुपगृह्य तं महार्हं
जनकनृपात्मजया धृतं प्रभावात् ।

चूडामणिं शिरोरत्नम् ॥ ६६ ॥

अङ्गुल्या योजयामास दधार चूडामण्यधिष्ठानहेमपुष्पस्य वेध-प्रवेशार्थं यद्रन्ध्रं तत्राङ्गुलिं प्रवेशयामासेत्यर्थः ननु तदा सूक्ष्मरूपत्वा-त्तत्र भुजासञ्जनमेवोचितमत आह,—न ह्येति । अस्य भुजः सूक्ष्मोऽपि न प्राभवत् । तद्रन्ध्रे न प्राविशदित्यर्थः । निषेधस्य प्रसक्तिमूलक-त्वात्संक्षेप सूक्ष्मरूप एव सम्भवात् पूर्वं देव्यै प्रदर्शितं महद्रूपं विहाय सूक्ष्मरूपेणैव स्थित इति गम्यत इति तीर्थः । कतकस्तु । अङ्गुल्या योजयामास सूत्रनालोवद्धमङ्गुल्यां दृढं बबन्धेत्यर्थः । अस्य बन्धने भुजो न प्राभवत् । व्यक्ततया सर्वानुभवप्रसङ्गात् । गोपनीयत्वाच्च भुजो नोचितोऽभूदित्यर्थं इत्याह ॥ ६७ ॥

पार्श्वतः स्थितः सीतासमीपे स्थितः ॥ ६८ ॥ ६९ ॥

गिरिवरपवनावधूतमुक्तः
सुखितमनाः प्रतिसंक्रमं प्रपेदे ॥ ७० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
अष्टत्रिंशः सर्गः ॥ ३८ ॥

महार्हं वज्रमूल्यं प्रभावात् सामर्थ्यविशेषात्। राक्षसोभिर्यथा न ज्ञायते तथा धृतम्। गिरिवरपवनावधूतमुक्तः पर्वतश्रेष्ठोर्द्धभागीयपवनकम्पितः पश्चात्तेन कम्पेन मुक्तः स इव सुखितमनाः। अयमपि पूर्वं सीताया अदर्शनेन दुःखवशात्कम्पितस्ततस्तद्दर्शनेन ततः कम्पान् मुक्तोऽतः सुखितमनाः प्रतिसंक्रमं लङ्कादुर्गप्राकारं प्राप्तुं प्रपेदे यत्नमारभतेत्यर्थः ॥ ७० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

# एकोनचत्वारिंशः सर्गः

मणिं दत्त्वा ततः सीता हनूमन्तमथाब्रवीत् ।
अभिज्ञानमभिज्ञातमेतद्रामस्य तत्त्वतः ॥ १ ॥
मणिं दृष्ट्वा तु रामो वै त्रयाणां संस्मरिष्यति ।
वीरो जनन्या मम च राज्ञो दशरथस्य च ॥ २ ॥
स भूयस्त्वं समुत्साहचोदितो हरिसत्तम ! ।
अस्मिन् कार्य्यसमुत्साहे प्रचिन्तय यदुत्तरम् ॥ ३ ॥
त्वमस्मिन् कार्य्यनिर्य्योगे प्रमाणं हरिसत्तम ! ।
तस्य चिन्तय यो यत्नो दुःखक्षयकरो भवेत् ॥ ४ ॥

रामस्याभिज्ञातं रामेणाभिज्ञातमित्यर्थः ॥ १ ॥

त्रयाणां संस्मरिष्यति । कर्मणि शेषे षष्ठी । त्रीनाह,—जनन्या इति । अयं मणिर्विवाहकाले मज्जनन्या हस्तात् मत्पित्रादाय दशरथहस्ते मम शिरोभूषणतया दत्त इति मम जनन्याश्च मत्पितुर्दशरथस्य चेति त्रयाणां स्मारक इति भावः ॥ २ ॥

स त्वमस्मिन् समुत्साहे भूयश्चोदितो भविष्यसि तदत्र कार्य्यसमुत्साह-प्रचोदितः सन् यदुत्तरम् उत्तरकर्त्तव्यं तच्चिन्तय ॥ ३ ॥

मम का चिन्तने शक्तिरिति चेत्तत्राह,—त्वमिति । निर्य्योगो निर्वाहः । यस्तस्य रामस्य यत्नो दुःखक्षयकरो भवेत्तं चिन्तय ॥ ४ ॥

हनूमन्! यत्नमास्थाय दुःखक्षयकरो भव।
स तथेति प्रतिज्ञाय मारुतिर्भीमविक्रमः॥ ५॥
शिरसा वन्द्य वैदेहीं गमनायोपचक्रमे।
ज्ञात्वा संप्रस्थितं देवी वानरं पवनात्मजम्॥ ६॥
बाष्पगद्गदया वाचा मैथिली वाक्यमब्रवीत्।
हनूमन्! कुशलं ब्रूयाः सहितौ रामलक्ष्मणौ॥ ७॥
सुग्रीवञ्च सहामात्यं सर्वान् वृद्धांश्च वानरान्।
ब्रूयास्त्वं वानरश्रेष्ठ! कुशलं धर्मसंहितम्॥ ८॥
यथा च स महाबाहुर्मां तारयति राघवः।
अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि॥ ९॥
जीवन्तीं मां यथा रामः सम्भावयति कीर्त्तिमान।
तत्त्वया हनुमन्! वाच्यं वाचा धर्ममवाप्नुहि॥ १०॥
नित्यमुत्साहयुक्तस्य वाचः श्रुत्वा मयेरिताः।
वर्द्धिष्यते दाशरथेः पौरुषं मदवाप्तये॥ ११॥
मत्सन्देशयुता वाचस्त्वत्तः श्रुत्वैव राघवः।

यत्नमास्थायेति। यत्नं रामप्रवृत्त्यर्थमित्यर्थः॥ ५॥ ६॥ ७॥ ८॥

अम्बूनि संरुध्यन्ते यस्मिन्नित्यम्बुसंरोधः समुद्रः दुःखरूपात्समुद्रा-
दित्यर्थः। यथा तारयति तथा समाधातुं यत्नं कर्त्तुम्॥ ९॥

वाचा वाक्कृतसाहाय्येन॥ १०॥ ११॥

पराक्रमे मतिं वीरो विधिवत् संविधास्यति ॥ १२ ॥
सीतायास्तद्वचो श्रुत्वा हनूमान् मारुतात्मजः ।
शिरस्यञ्जलिमाधाय वाक्यमुत्तरमब्रवीत् ॥ १३ ॥
क्षिप्रमेष्यति काकुत्स्थो हर्य्यृक्षप्रवरैर्वृतः ।
यस्ते युधि विजित्यारीन् शोकं व्यपनयिष्यति ॥ १४ ॥
न हि पश्यामि मर्त्त्येषु नासुरेषु सुरेषु वा ।
यस्तस्य वमतो बाणान् स्थातुमुत्सहतेऽग्रतः ॥ १५ ॥
अप्यर्कमपि पर्जन्यमपि वैवस्वतं यमम् ।
स हि सोढुं रणे शक्तस्तव हेतोर्विशेषतः ॥ १६ ॥
स हि सागरपर्य्यन्तां महीं साधितुमर्हति ।
त्वन्निमित्तो हि रामस्य जयो जनकनन्दिनि ! ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा सम्यक् सत्यं सुभाषितम् ।
जानकी बहु मेने तं वचनञ्चेदमब्रवीत् ॥ १८ ॥
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनःपुनः ।

उक्तमेव आदराय पुनराह,—मत्सन्देशयुता इति ॥ १२ ॥ १३ ॥ १४ ॥
वमतो बाणान् विसृजत इत्यर्थः ॥ १५ ॥
पर्जन्य इन्द्रः ॥ १६ ॥
महीं साधितुमर्हति । जेतुमुद्युङ्क्ते इत्यर्थः । किमर्थं तत्राह,—त्वन्निमित्त इति । त्वत्प्राप्तिप्रयोजन इत्यर्थः ॥ १७ ॥ १८ ॥

भर्त्तृस्नेहान्वितं वाक्यं सौहार्दादनुमानयत् ॥ १९ ॥
यदि वा मन्यसे वीर! वसैकाहमरिन्दम!।
कस्मिंश्चित् संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ २० ॥
मम चैवाल्पभाग्यायाः सान्निध्यात्तव वानर!।
अस्य शोकस्य महतो मुहूर्त्तं मोक्षणं भवेत् ॥ २१ ॥
ततो हि हरिशार्दूल! पुनरागमनाय तु।
प्राणानामपि सन्देहो मम स्यान्नात्र संशयः ॥ २२ ॥
तवादर्शनजः शोको भूयो मां परितापयेत्।
दुःखाद्दुःखपरामृष्टां दीपयन्निव वानर! ॥ २३ ॥
अयञ्च वीर! सन्देहस्तिष्ठतीव ममाग्रतः।
सुमहांस्त्वत्सहायेषु हर्य्यृक्षेषु हरीश्वरः ॥ २४ ॥

भर्त्तृस्नेहान्वितं रामस्नेहान्वितं वाक्यं हनूमद्वाक्यं सौहार्दाद्राम-प्रेम्णा अनुमानयत् अपूजयत् ॥ १९ ॥ २० ॥

मोक्षणं भवेत्। अद्य स्थित्वा श्वो गमने इति शेषः ॥ २१ ॥

ततो हीति ततोऽपात्ययः। एकाहवासोत्तरं गमनेऽपि पुनरागमनाय तु सन्देह एव तत्सन्देहे सति मम प्राणानामपि सन्देह एव ॥ २२ ॥

तदाह,—तवेति। तथा च मज्जीवनसम्भावितमेव पुनरागमने इति भावः। दुःखाद्दुःखपरामृष्टाम् अतिदुःखप्राप्तां दीपने कर्त्ता शोकः ॥ २३ ॥

अयं सन्देहो ममाग्रतः पुरस्तादिव तिष्ठति। कोऽयं तमाह,—

कथन्नु खलु दुष्पारं तरिष्यति महोदधिम्।
तानि हर्य्यक्षसैन्यानि तौ वानरवरात्मजौ ॥ २५ ॥
अयाणामेव भूतानां सागरस्येह लङ्घने।
शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ २६ ॥
तदस्मिन् कार्य्यनिर्य्योगे वीरैवं दुरतिक्रमे।
किं पश्यसि समाधानं त्वं हि कार्य्यविदां वरः ॥ २७ ॥
काममस्य त्वमेवैकः कार्य्यस्य परिसाधने।
पर्य्याप्तः परवीरघ्न ! यशस्यस्ते फलोदयः ॥ २८ ॥
बलैः समग्रैर्य्युधि मां रावणं जित्य संयुगे।
विजयी स्वपुरं यायात्तत्तस्य सदृशं भवेत् ॥ २९ ॥

त्वत्सहायेष्विति। साक्षात्साधकस्य तव सहायभूतेषु मिलितेषु हर्य्यक्षेषु हरीश्वरः सुग्रीवः ॥ २४ ॥

कथमुदधिं तरिष्यति। सैन्यानि कथं तरिष्यन्ति। तौ वा कथं तरिष्यत इत्यर्थः ॥ २५ ॥

एवं सन्देहे बीजमाह,—त्रयाणामेवेति ॥ २६ ॥

किं समाधानं पश्यसि। कं कार्य्यसिध्युपायं पश्यसि ॥ २७ ॥

ननु किं तैरागतैस्त्वमेव पर्य्याप्तोऽस्य कार्य्यस्येत्यत्राह,—काममिति। त्वया कार्य्यसाधने तव यशस्योयशस्करः। फलोदयो जयरूपफलप्राप्तिर्भवति न तु रामस्येत्यर्थः ॥ २८ ॥

किं तद्युचितं तत्राह,—बलैरिति। समग्रैर्बलैः सहागत्य रावणं संयुगे जित्वा विजयी सन् मां गृहीत्वा यायात् तत् तस्य रामस्य सदृशं भवेत् ॥ २९ ॥

बलैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ २० ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः।
भवेदाहवशूरस्य तथा त्वमुपपादय ॥ २१ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम्।
निशम्य हनुमान् शेषं वाक्यमुत्तरमब्रवीत् ॥ २२ ॥
देवि! हर्य्यृक्षसैन्यानामीश्वरः प्लवतां वरः।
सुग्रीवः सत्यसम्पन्नस्तवार्थे कृतनिश्चयः ॥ २३ ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः।
क्षिप्रमेष्यति वैदेहि! राक्षसानां निवर्हणः ॥ २४ ॥
तस्य विक्रमसम्पन्नाः सत्ववन्तो महाबलाः।
मनःसङ्कल्पसम्पाता निदेशे हरयः स्थिताः ॥ २५ ॥
येषां नोपरि नाधस्तान्न तिर्य्यक् सज्जते गतिः।
न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ २६ ॥

आदरात् पुनराह,—बलैस्त्विति ॥ २० ॥

विक्रान्तं पराक्रमः ॥ २१ ॥

तदुक्तं सीतावाक्यं प्रश्रयः स्नेहः। शेषं श्लिष्टम्। प्रकृतोत्तरं वाक्यमब्रवीत् ॥ २२ ॥

तदेव वाक्यमाह,—देवीति ॥ २३ ॥ २४ ॥

कथमेष्यतीत्यत आह,—तस्य विक्रमेति। मनःसङ्कल्पवदतिदूरप-तनशीलाः ॥ २५ ॥

असकृत्तैर्महोत्साहैः ससागरधराधरा ।
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ ३७ ॥
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥ ३८ ॥
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ ३९ ॥
तदलं परितापेन देवि ! शोको व्यपेतु ते ।
एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥ ४० ॥
मम पृष्ठगतौ तौ च चन्द्रसूर्य्याविवोदितौ ।
त्वत्सकाशं महासङ्घौ नृसिंहावागमिष्यतः ॥ ४१ ॥
तौ हि वीरौ नरवरौ सहितौ रामलक्ष्मणौ ।
आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ ४२ ॥
सगणं रावणं हत्वा राघवो रघुनन्दनः ।

तदेव स्पष्टमाह,—येषामिति। न सज्जते न प्रतिबद्धा भवति ॥ ३६ ॥

सागरैर्धराधरैश्च सहिता ॥ ३७ ॥

प्रत्यवरो हीनबलपराक्रमः ॥ ३८ ॥

अहं तदपेक्षया न्यूनबलादिपौरुषः। तेषां स्वाधिकबलत्वं लोकन्यायेन दृढं बोधयति,—नहीति ॥ ३९ ॥

एकोत्पातेन एकोत्प्लवनेन ॥ ४० ॥

ननु भवत्येवं हरीणामागमनं राघवयोः कथं तत्राह,—ममेति। महासंघौ महासमुदाययुक्तौ ॥ ४१ ॥ ४२ ॥

त्वामादाय वरारोहे! स्वपुरीं प्रतियास्यति ॥ ४३ ॥
तदाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी।
न चिरात् द्रक्ष्यसे रामं प्रज्वलन्तमिवानलम् ॥ ४४ ॥
निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे।
त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥ ४५ ॥
क्षिप्रं त्वं देवि! शोकस्य पारं द्रक्ष्यसि मैथिलि!।
रावणञ्चैव रामेण द्रक्ष्यसे निहतं बलात् ॥ ४६ ॥
एवमाश्वास्य वैदेहीं हनूमान् मारुतात्मजः।
गमनाय मतिं कृत्वा वैदेहीं पुनरब्रवीत् ॥ ४७ ॥
तमरिघ्नं कृतात्मानं क्षिप्रं द्रक्ष्यसि राघवम्।
लक्ष्मणञ्च धनुष्पाणिं लङ्काद्वारमुपागतम् ॥ ४८ ॥
नखदंष्ट्रायुधान् वीरान् सिंहशार्दूलविक्रमान्।
वानरान् वारणेन्द्राभान् क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥ ४९ ॥
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु।
नर्दतां कपिमुख्यानामार्य्ये यूथान्यनेकशः ॥ ५० ॥
स तु मर्म्मणि घोरेण ताडितो मन्मथेषुणा।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ५१ ॥

रक्षःस्त्रामानन्दजनकमपत्यम् ॥ ४३ ॥

कालकाङ्क्षिणी दिवसगणनतत्परा ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

यूथान्यनेकशः द्रक्ष्यसीति शेषः ॥ ५० ॥

इह मा देवि ! शोकेन मा भूत्ते मनसो भयम् ।
शचीव भर्त्रा शक्रेण सङ्गमेष्यसि शोभने ! ॥ ५२ ॥
रामाद्विशिष्टः कोऽन्योऽस्ति कश्चित् सौमित्रिणा समः ।
अग्निमारुतकल्पौ तौ भ्रातरौ तव संश्रयौ ॥ ५३ ॥
नास्मिंश्चिरं वत्स्यसि देवि ! देशे
रक्षोगणैरध्युषितेतिरौद्रे ।
न ते चिरादागमनं प्रियस्य
क्षमस्व मत्सङ्गमकालमात्रम् ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रामस्य सर्वथा त्वत्प्राप्तिचिन्तैवास्ते इत्याह,—सत्विति ॥ ५१ ॥ ५२ ॥
सौमित्रिणा समः कश्चित् कोऽपि नास्तीति शेषः ॥ ५३ ॥
मत्सङ्गमकालमात्रं मया रामस्य यः सङ्गमस्तत्कालमात्रं प्रतीक्ष-
स्वेत्यर्थः ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

श्रुत्वा तु वचनं तस्य वायुसूनोर्महात्मनः ।
उवाचात्महितं वाक्यं सीता सुरसुतोपमा ॥ १ ॥
त्वां दृष्ट्वा प्रियवक्तारं सम्प्रहृष्यामि वानर ! ।
अर्द्धसञ्जातशस्येव वृष्टिं प्राप्य वसुन्धरा ॥ २ ॥
यथा तं पुरुषव्याघ्रं गात्रैः शोकाभिकर्षितैः ।
संस्पृशेयं सकामाहं तथा कुरु दयां मयि ॥ ३ ॥
अभिज्ञानञ्च रामस्य दद्या हरिगणोत्तम ! ।
क्षिप्तामिषीकां काकस्य कोपादेकाक्षिशातनीम् ॥ ४ ॥

आत्महितं आत्मदुःखोद्धारप्रयोजनम् ॥ १ ॥

अर्द्धसंजातानि अर्द्धं वयःप्राप्तानि ततःपरं जलाभावादासन्नशोषाणि शस्यानि यस्याः सा यथा दैवात्सम्पन्नवृष्ट्या सम्पन्नशस्या भवति तथाहमपि प्राप्तजीवितनाशाऽमृतोपमात्त्वद्दर्शनाल्लब्धजीवितेति भावः ॥ २ ॥

सकामा तत्स्पर्शेच्छावती ॥ ३ ॥

अभिज्ञानं चूडामण्यात्मकं दद्याः देहि तथा लोमात्काकस्यैकाक्षि-

मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ।
त्वया प्रणष्टे तिलके तं किल स्मर्त्तुमर्हसि ॥ ५ ॥
स वीर्य्यवान् कथं सीतां हृतां समनुमन्यसे ।
वसन्तीं रक्षसां मध्ये महेन्द्रवरुणोपम ! ॥ ६ ॥
एष चूड़ामणिर्दिव्यो मया सुपरिरक्षितः ।
एतं दृष्ट्वा प्रहृष्यामि व्यसने त्वामिवानघ ! ॥ ७ ॥
एष निर्य्यातितः श्रीमान् मया ते वारिसम्भवः ।
अतःपरं न शक्ष्यामि जीवितुं शोकलालसा ॥ ८ ॥

प्रातनोमिषीकाङ्क्षिसा काको रक्षित इत्यपरमभिज्ञानं दद्याः श्रावये-त्यर्थः ॥ ४ ॥

अथाभिज्ञानान्तरमाह,—सन्देशरूपेण मनःशिलाया इति । पूर्व-तने तिलके नष्टे सति त्वया रामेण मम गण्डपार्श्वे मनःशिलातिलको निवेशितः । तं किल स्वकृततिलकमित्यर्थः । स्मर्त्तुमर्हसि इति मयोक्त-मिति ब्रूहीति शेषः ॥ ५ ॥

अथ केवलसन्देशान्तरमाह,—स वीर्य्यवानिति । अनुमन्यसे सहसे इत्यर्थः ॥ ६ ॥

दिव्य एष चूड़ामणिरेतावत्कालं सुपरिरक्षितः । एतं व्यसने त्वा-मिव दृष्ट्वा प्रहृष्यामि । एतत्सन्निधाने रक्षोऽभिभवासम्भवादिति भावः ॥ ७ ॥

स एष निर्य्यातितो दत्तस्त्वदभिज्ञानार्थमिति शेषः अतः शीघ्र-मागमने एव कुशलमन्यथा परमं दुःखमिति भावः ॥ ८ ॥

असह्यानि च दुःखानि वाचश्च हृदयच्छिदः।
राक्षसैः सह संवासं त्वत्कृते मर्षयाम्यहम् ॥ ९ ॥
धारयिष्यामि मासन्तु जीवितं शत्रुसूदन!।
मासादूर्द्ध्वं न जीविष्ये त्वया हीना नृपात्मज! ॥ १० ॥
घोरो राक्षसराजोऽयं दृष्टिश्च न सुखा मयि।
त्वाञ्च श्रुत्वा विषज्जन्तं न जीवेयमपि क्षणम् ॥ ११ ॥
वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम्।
अथाब्रवीन् महातेजा हनूमान् मारुतात्मजः ॥ १२ ॥
त्वच्छोकविमुखो रामो देवि! सत्येन ते शपे।
रामे शोकाभिभूते तु लक्ष्मणः परितप्यते ॥ १३ ॥

त्वत्कृते त्वत्प्राप्तिप्रत्याशया मर्षयामि सहामि ॥ ९ ॥ १० ॥

यतोऽयं घोरस्तस्य दृष्टिश्च मादृग्बुद्धिर्न सुखा अवधिकालादूर्द्ध्व-कृतविनाशनिश्चया अतस्तत्पूर्वमेव मरणौचित्यादवधिकालस्याधिकत्वेऽपि मासादूर्द्ध्वमेव न जीविष्यामि। किञ्च त्वां विषज्जन्तं विलम्बं कुर्वन्तं यदि शृणुयां तदा यथा श्रुत्वा मासादर्वागेव क्षणमपि न जीवेयमित्युक्तमिति ब्रूहीति शेषः ॥ ११ ॥

वचनमुक्तसन्देशरूपम् ॥ १२ ॥

त्वच्छोकविमुखः त्वन्निश्चयपरिज्ञानजशोकेन त्वदुद्धारप्रवृत्तिविमुखः। न तु त्यक्तेति सत्येन ते शपे ॥ १३ ॥

दृष्ट्वा कथञ्चिद्भवती न कालः परिदेवितुम् ।
इमं मुहूर्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ! ॥ १४ ॥
तावुभौ पुरुषव्याघ्रौ राजपुत्रावनिन्दितौ ।
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ॥ १५ ॥
हत्वा तु समरे रक्षो रावणं सह बान्धवैः ।
राघवौ त्वां विशालाक्षि ! स्वां पुरीं प्रतिनेष्यतः ॥ १६ ॥
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ! ।
प्रीतिसञ्जननं भूयस्तस्य त्वं दातुमर्हसि ॥ १७ ॥
साब्रवीद्दत्तमेवाहो मयाभिज्ञानमुत्तमम् ।
एतदेव हि रामस्य दृष्ट्वा यत्नेन भूषणम् ॥ १८ ॥
श्रद्धेयं हनुमन् ! वाक्यं तव वीर ! भविष्यति ।
स तं मणिवरं गृह्य श्रीमान् प्लवगसत्तमः ॥ १९ ॥
प्रणम्य शिरसा देवीं गमनायोपचक्रमे ।
तमुत्पातकृतोत्साहमवेक्ष्य हरियूथपम् ॥ २० ॥

कथञ्चिद्भवती दृष्टा अतःपरं शोचितुं न कालः इमं मुहूर्तं अस्मिन् चिरकाले इत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥

यत्त्वभिज्ञानं राम एव निश्चित्य जानीयात्तच्च तस्य प्रीतिसञ्जननं तद्भूयः पुनरधिकञ्च दातुमर्हसि ॥ १७ ॥ १८ ॥

श्रद्धेयं विश्वसनीयम् ॥ १९ ॥

वर्द्धमानं महावेगमुवाच जनकात्मजा।
अश्रुपूर्णमुखी दीना बाष्पगद्गदया गिरा ॥ २१ ॥
हनूमन्! सिंहसङ्काशौ भ्रातरौ रामलक्ष्मणौ।
सुग्रीवञ्च सहामात्यं सर्वान् ब्रूया ह्यनामयम् ॥ २२ ॥
यथा च स महाबाहुर्मां तारयति राघवः।
अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ॥ २३ ॥

इमञ्च तीव्रं मम शोकवेगं
रक्षोभिरेभिः परिभर्त्सनञ्च।
ब्रूयास्तु रामस्य गतः समीपं
शिवश्च तेऽध्वास्तु हरिप्रवीर! ॥ २४ ॥
स राजपुत्र्या प्रतिवेदितार्थः
कपिः कृतार्थः परिहृष्टचेताः।

उत्पाते उत्प्लवने कृतोत्साहम् ॥ २० ॥ २१ ॥

अनामयमारोग्यम् ॥ २२ ॥

त्वं समाधातुमित्यस्य तथेत्यादिः समाधानं संविधानम्। यथापि स महाबाहुरिति पाठे यथेत्यपि पूरणीयमेव यद्यपि श्रुतवृत्तान्तः स्वयमेव यतिष्यति यथापि तथापि त्वमपि यथा मां शीघ्रं तारयति तथा संविधानं कुर्वित्यर्थः ॥ २३ ॥ २४ ॥

तत्कार्थं लङ्कागमनप्रयोजनम्। अल्पशेषं देवीदर्शनरूपस्य महतः

तदन्यशेषं प्रसमीक्ष्य कार्य्यं
दिशं ह्युदीचीं मनसा जगाम ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चत्वारिंशः सर्गः ॥ ४० ॥

प्रधानकृत्यस्य निष्पन्नत्वात्परबलदर्शनरूपस्यानुषङ्गिकत्वादन्यशेषत्वमित्याशयः ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

# एकचत्वारिंशः सर्गः ।

स च वाग्भिः प्रशस्ताभिर्गमिष्यन् पूजितस्तया ।
तस्माद्देशादपाक्रम्य चिन्तयामास वानरः ॥ १ ॥
अल्पशेषमिदं कार्य्यं दृष्टेयमसितेक्षणा ।
त्रीनुपायानतिक्रम्य चतुर्थ इह दृश्यते ॥ २ ॥
न सामरक्षःसु गुणाय कल्पते
न दानमर्थोपचितेषु युज्यते ।
न भेदसाध्या बलदर्पिता जनाः
पराक्रमस्त्वेव ममेह रोचते ॥ ३ ॥

तस्माद्देशादपाक्रम्य सीतासमीपात्किञ्चिद्दूरं गत्वा ॥ १ ॥

चिन्तयामासेत्युक्तां चिन्तां दर्शयति । अल्पशेषमिति । इयं सीता दृष्टेति इदं प्रधानकार्य्यं निष्पन्नमिति । आनुषङ्गिकं परबलदर्शनमवशिष्टमित्यल्पशेषत्वम् । इह कार्य्ये परबलज्ञानरूपे त्रीनुपायान् सामादीनतिक्रम्य चतुर्थो दण्ड एव साधनत्वेन दृश्यते ॥ २ ॥

तत्र युक्तिमाह,—नेति । अत्र सामफलाभावमसुरेषु तदाह,—रक्षःस्विति । बलदर्पिता भेदसाध्या न भेदउपायः बलवन्तो हि कुतोऽप्यमित्रं न गणयन्तीत्यर्थः ॥ ३ ॥

न चास्य कार्य्यस्य पराक्रमादृते
विनिश्चयः कश्चिदिहोपपद्यते।
हतप्रवीरा ह्य रणे तु राक्षसाः
कथञ्चिदीयुर्यदिहाद्य मार्दवम्॥ ४॥

कार्य्ये कर्मणि निर्वृत्ते यो बहून्यपि साधयेत्।
पूर्वकार्य्याविरोधेन स कार्य्यं कर्त्तुमर्हति॥ ५॥
न ह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने॥ ६॥

अस्य कार्य्यस्य परबलाशयपरिज्ञानरूपस्य। सर्वातिशायिपराक्रमवतो मम पराजय एव नास्तीत्याशयेनाह,—पराक्रमादृते इति। विनिश्चयः निश्चितोपायः स्वबलप्रकाशने प्रयोजनान्तरमप्यस्तीत्याह,—हतेति। अद्य हताः प्रवीराः श्रेष्ठाः येषां ते राक्षसाः यद्यस्मात् इह भाविनि रणे. मार्दवम् एकेनैवेयं पराक्रमः कृतस्ताद्दृशैरनेकैः कथमस्माकं जयाशेति रणप्रवृत्तिराहित्यं, प्राप्नुयुः। अतः पराक्रमात्परबलस्य मनोऽभङ्गरूपं कार्य्यं सिध्यतीत्याशयः॥ ४॥

ननु स्वामिसन्दिष्टकार्य्यातिरिक्तकार्य्यकरणे दोषः। स्वामिना हि अभिगम्य तु वैदेहीं निलयं रावणस्य चेत्येतावदेव सन्दिष्टमित्याशङ्क्य सन्दिष्टकार्य्याविरोधेन स्वामिहितकार्य्यान्तरसाधनं दूतस्यालङ्कार इत्याह,—कार्य्येति। कार्य्ये प्रधानकार्य्ये निर्वृत्ते सकार्य्यं कर्त्तुमर्हति। ननु सन्दिष्टमात्रस्य कथञ्चित्साधक इत्याशयः॥ ५॥

उक्तमेव विवृणोति। न ह्येति। यस्य स्वल्पस्यापि कर्मणः अति-

इहैव तावत् कृतनिश्चयो ह्ययं
प्रजेयमद्य प्लवगेश्वरालयम्।
परात्मसम्मर्दविशेषतत्त्ववित्
ततः कृतं स्यान्मम भर्तृशासनम्॥ ७॥

कथं नु खल्वद्य भवेत् सुखागतं
प्रसह्य युद्धं मम राक्षसैः सह।
तथैव खल्वात्मबलञ्च सारवत्
समानयेन्मांञ्च रणे दशाननः॥ ८॥

अयितयत्नेन सिद्धिहेतुर्भवति स्वसावेको मुख्यः साधको हेतुर्न भवति अपि तु यो ह्यर्थं प्रयोजनमल्पेन यत्नेन बहुधा कर्तुं वेद स एवार्थसाधने समर्थः॥ ६॥

तस्मादन्यदपि साम्यभीष्टं कृत्वैव गन्तव्यमित्याह,—यद्यप्यहम् इहैव सीतान्वेषण एव तावत्प्रथमं कृतनिश्चयस्तथापि यदि परात्मसम्मर्दविशेषतत्त्ववित् परस्यात्मनः स्वस्य च सम्मर्दे युद्धे यो विशेषस्तत्तत्त्वविद्भूत्वा यदि प्लवगेश्वरालयं सुग्रीवालयं प्रजेयं ततस्तदा भर्तृशासनं सम्यक् कृतं स्यात्। अन्यथा राक्षसबलं कीदृशमिति पृष्टे निरुत्तरः स्यामिति भावः॥ ७॥

एवं निश्चितार्थो युद्धप्रवृत्तिप्रकारं चिन्तयति। कथं न्विति। अद्य खलु ममेहागतमागमनं सुखागतं सुखफलकमागमनं कथं भवेत्। तथा राक्षसैः सह प्रसह्य स्वयमेव बलात्कृत्य युद्धञ्च कथं मम भवेत्।

ततः समासाद्य रणे दशाननं
समं त्रिवर्गं सबलं सयायिनम्।
हृदि स्थितं तस्य मतं बलञ्च
सुखेन मत्वाऽहमितः पुनर्व्रजे ॥ ९ ॥

इदमस्य नृशंसस्य नन्दनोपममुत्तमम्।
वनं नेत्रमनःकान्तं नानाद्रुमलतायुतम् ॥ १० ॥

इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः।
अस्मिन् भग्ने ततः कोपं करिष्यति स रावणः ॥ ११ ॥

ततो महत्साश्वमहारथद्विपं
बलं समानेष्यति राक्षसाधिपः।

तथा तथैव करणे सति सारवदूर्जितं स्वबलं मां च स दशाननः कथं मानयेत् श्लाघयेत्। यदा तथैव खलु युद्धकरणे खलु दशाननः आत्मबलं मां च सारवत् समानयेत् सम्यक् परिच्छिन्द्यादित्यर्थेन युद्धफलमुक्तम् ॥ ८ ॥

अथो मद्बलवशादेव मां रणे समासाद्य वर्तमानं सबलं सयायिनं ससारथिम् अन्तर्भावितण्यर्थाद्यातेर्णिनी यापयिता यायी सारथिस्तेन सहितं रावणं ज्ञात्वा हृदि स्थितं तस्य मतमभीष्टं बलञ्च सुखेन अक्लेशतो मत्वा ज्ञात्वा पुनरितो व्रजे व्रजिष्ये सबलं सयायिनमिति पाठः। सबलप्रयायिनमित्याधुनिककल्पितः पाठः ॥ ९ ॥

अथ प्रसह्य रणप्रवर्तनोपायं चिन्तयति। इदमिति। अस्येदं वनं नेत्रमनःकान्तं भवति अत इदं विध्वंसयामि ॥ १० ॥ ११ ॥

त्रिशूलकालायसपट्टिशायुधं
ततो महद्युद्धमिदं भविष्यति ॥ १२ ॥
अहन्तु तैः संयति चण्डविक्रमैः
समेत्य रक्षोभिरभङ्गविक्रमः।
निहत्य तद्रावणचोदितं बलं
सुखं गमिष्यामि हरीश्वरालयम् ॥ १३ ॥
ततो मारुतवत्क्रुद्धो मारुतिर्भीमविक्रमः।
ऊरुवेगेन महता द्रुमान् क्षेप्तुमथारभत् ॥ १४ ॥
ततस्तद्धनुमान् वीरो बभञ्ज प्रमदावनम्।
मत्तद्विजसमाघुष्टं नानाद्रुमलतायुतम् ॥ १५ ॥
तद्वनं मथितैर्वृक्षैर्भिन्नैश्च सलिलाशयैः।
चूर्णितैः पर्वताग्रैश्च बभूवा प्रियदर्शनैः ॥ १६ ॥
नानाशकुन्तविरुतैः प्रभिन्नैसलिलाशयैः।
ताम्रैः किसलयैः क्लान्तैः क्लान्तद्रुमलतायुतैः ॥ १७ ॥

समानेष्यति मां प्रति युद्धार्थं प्रापयिष्यति महद्युद्धं भविष्यतीत्यन्वयः ॥ १२ ॥

ततो हरीश्वरालयं गमिष्यामीति चिन्तयामासेत्यन्वयः ॥ १३ ॥

ततः सर्वं निश्चयानन्तरम् ॥ १४ ॥ १५ ॥

पर्वताग्रैः क्रीडापर्वताग्रैः उपलक्षितमिति शेषः ॥ १६ ॥ १७ ॥

न बभौ तद्वनं तत्र दावानलहतं यथा।
व्याकुलावरणा रेजुर्विक्लवा इव ता लताः ॥ १८ ॥

लतागृहैश्चित्रगृहैश्च सादितै-
र्व्यालैर्मृगैरार्त्तरवैश्च पक्षिभिः।
शिलागृहैरुन्मथितैस्तथा गृहैः
प्रनष्टरूपं तदभून्महद्वनम् ॥ १९ ॥

सा विक्लवाशोकलताप्रताना
वनस्थली शोकलताप्रताना।
जाता दशास्यप्रमदावनस्य
कपेर्बलाद्धि प्रमदावनस्य ॥ २० ॥

व्याकुलं स्रस्तमावरणं यासां ता अतएव विक्लवाः स्त्रिय इव ता लता रेजुः ॥ १८ ॥

सादितैर्विशीर्णैः व्यालैः शार्दूलैः ॥ १९ ॥

प्रमदावनस्य अन्तःपुरविहारोचितवनस्य। स्यादेतदेव प्रमदवनमन्तःपुरोचितमित्यमरः। दशास्यप्रमदानां स्त्रीणां कामसंवर्द्धनद्वारा अवनस्य रक्षकस्यास्य वनस्य सा विक्लवाशोकलताप्रताना चञ्चलाशोकलता समूहवती वनस्थली वृक्षगुल्मलता जलाशयादियुक्ता भूमिः। कपेर्बलात् शोच्यत इति शोकः शोच्यलताप्रताना जाता दृष्टचित्तशोकजनिका जातेत्यर्थः ॥ २० ॥

ततः स हत्वा जगतीपतेर्महान्
महद्व्यलीकं मनसो महात्मनः ।
ययुत्सुरेको बहुभिर्महाबलैः
श्रिया ज्वलंस्तोरणमाश्रितः कपिः ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकचत्वारिंशः सर्गः ॥ ४१ ॥

जगतीपतेः राज्ञो रावणस्य व्यलीकमप्रियम् ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः।

ततः पक्षिनिनादेन वृक्षभङ्गस्वनेन च।
बभूवुस्त्राससम्भ्रान्ताः सर्वे लङ्कानिवासिनः॥ १॥

विद्रुताश्च भयत्रस्ता विनेदुर्मृगपक्षिणः।
रक्षसाञ्च निमित्तानि क्रूराणि प्रतिपेदिरे॥ २॥

ततो गतायां निद्रायां राक्षस्यो विकृताननाः।
तद्वनं ददृशुर्भग्नन्तञ्च वीरं महाकपिम्॥ ३॥

स ता दृष्ट्वा महाबाहुर्महासत्त्वो महाबलः।
चकार सुमहद्रूपं राक्षसीनां भयावहम्॥ ४॥

ततस्तु गिरिसङ्काशमतिकायं महाबलम्।
राक्षस्यो वानरं दृष्ट्वा पप्रच्छुर्जनकात्मजाम्॥ ५॥

कोऽयं कस्य कुतो वायं किन्निमित्तमिहागतः।

तत इति॥ १॥

प्रतिपेदिरे प्रापानि॥ २॥

गतायां निद्रायां वनभङ्गध्वनिनेत्यर्थः॥ ३। ४॥

जनकात्मजां पप्रच्छुः तस्या निर्निद्रतयावस्थानं मत्वेति भावः॥ ५॥

कथं त्वया सहानेन संवादः कृत इत्युत ॥ ६ ॥
आचक्ष्व नो विशालाक्षि ! मा भूत्ते सुभगे ! भयम्।
संवादमसितापाङ्गि ! त्वया किं कृतवानयम् ॥ ७ ॥
अथाब्रवीत्तदा साध्वी सीता सर्वाङ्गशोभना।
रक्षसां कामरूपाणां विज्ञाने का गतिर्मम ॥ ८ ॥
यूयमेवास्य जानीत योऽयं यद्वा करिष्यति।
अहिरेव अहेः पादान्विजानाति न संशयः ॥ ९ ॥
अहमप्यतिभीतास्मि नैव जानामि को ह्ययम्।
वेद्मि राक्षसमेवैनं कामरूपिणमागतम् ॥ १० ॥

त्वयाऽनेन कथं संवादः कृत इति च पप्रच्छुः। यद्यपि ता निद्रिता वनभङ्गध्वनिना जागरिता इति संवादज्ञानस्यैवाभावात् तत्कथं प्रश्ना निरवसरस्तथापि निद्रामध्ये किञ्चिज्जागरेण ईषत्संवादश्रवणेऽपि देवमायया पुनर्निद्रेति तत्प्रश्नोपपत्तिरित्याहुः। सीतायास्तद्दर्शनेऽपि निर्भयप्रसन्नमुखतयावस्थानदर्शनादयं कश्चिदेतत्परिचित एतद्वृत्तान्तज्ञानार्थमेव प्रायेणागत इति सम्भाव्यानया संवादकरणञ्च सम्भाव्य तत्प्रश्ननिर्वाह इति कतकः। अथ विशिष्य संवादं पृच्छन्ति। संवादमिति ॥ ६ ॥ ७ ॥

का गतिः उपायः ॥ ८ ॥

युष्माकमेवैतत्स्वरूपज्ञानमुचितमित्यत्र न्यायमाह,—अहिरेवेति ॥ ९ ॥ १० ॥

वैदेह्या वचनं श्रुत्वा राक्षस्यो विद्रुता द्रुतम्।
स्थिताः काश्चिद्गताः काश्चिद्रावणाय निवेदितुम्॥ ११॥
रावणस्य समीपे तु राक्षस्यो विकृताननाः।
विरूपं वानरं भीमं रावणाय न्यवेदयुः॥ १२॥
अशोकवनिकामध्ये राजन् भीमवपुः कपिः।
सीतया कृतसंवादस्तिष्ठत्यमितविक्रमः॥ १३॥
न च तं जानकी सीता हरिं हरिणलोचना।
अस्माभिर्बहुधा पृष्टा निवेदयितुमिच्छति॥ १४॥
वासवस्य भवेद्दूतो दूतो वैश्रवणस्य वा।
प्रेषितो वापि रामेण सीतान्वेषणकाङ्क्षया॥ १५॥
तेनैवाद्भुतरूपेण यत्तत्तव मनोहरम्।
नानामृगगणाकीर्णं प्रमृष्टं प्रमदावनम्॥ १६॥
न तत्र कश्चिदुद्देशो यस्तेन न विनाशितः।

वैदेह्यावचनम् अज्ञानप्रतिपादकम्। अनेनात्मचाप्यादौ मृषावादो न दोषायेति ध्वनितम्। काश्चिद्विद्रुताः काश्चित् दृढं स्थिता एव काश्चिद्रावणाय निवेदितुं गताः॥ ११॥ १२॥

सीतायां कृतसंवादस्तथाऽपि यथातथ्योक्तम्॥ १३॥

न निवेदयितुमिच्छति प्रायेणेयं तं जानातीति तासामाशयः॥ १४॥ १५॥

प्रमृष्टं नाशितम्॥ १६॥

यत्र सा जानकी देवी स तेन न विनाशितः ॥ १७ ॥
जानकीरक्षणार्थं वा श्रमाद्वा नोपलक्ष्यते ।
अथवा कः श्रमस्तस्य सैव तेनाभिरक्षिता ॥ १८ ॥
चारुपल्लवपत्राढ्यं यं सीता स्वयमाश्रिता ।
प्रवृद्धः शिंशपावृक्षः स च तेनाभिरक्षितः ॥ १९ ॥
तस्योग्ररूपस्योग्रं त्वं दण्डमाज्ञातुमर्हसि ।
सीता सम्भाषिता येन वनन्तेन विनाशितम् ॥ २० ॥
मनःपरिगृहीतान्तां तव रक्षोगणेश्वर ! ।
कः सीतामभिभाषेत यो न स्यात्त्यक्तजीवितः ॥ २१ ॥
राक्षसीनां वचः श्रुत्वा रावणो राक्षसेश्वरः ।

उद्देशः प्रदेशः ॥ १७ ॥

कः श्रम इति महावनं भञ्जतस्तस्य श्रमोऽसम्भावित इत्यर्थः । अतः सा जानक्येव तेनाभिरक्षिता । तदाश्रयवृक्षाभङ्गेनेति शेषः ॥ १८ ॥

तस्यैवार्थस्य स्थिरीकरणाय पुनःप्रतिपादनम् । चार्विति । तेनाभिरक्षितः सीतारक्षणार्थमिति शेषः ॥ १९ ॥

आज्ञातुमाज्ञापयितुम् । सीतासम्भाषितेत्यनेन सापराधत्वमस्य बोधितम् ॥ २० ॥

तद्भाषणस्यापराधत्वमुपपादयति । मन इति । त्यक्तजीवितस्त्यक्तजीविताशः । राजपरिग्रहभार्यया पुंसोऽपराध इति भावः ॥ २१ ॥

चिताग्निरिव जज्वाल कोपसंवर्त्तितेक्षणः ॥ २२ ॥
तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ।
दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥ २३ ॥
आत्मनः सदृशान्वीरान् किङ्करान्नाम राक्षसान् ।
व्यादिदेश महातेजा निग्रहार्थं हनूमतः ॥ २४ ॥
तेषामशीतिसाहस्रं किङ्कराणान्तरस्विनाम् ।
निर्ययुर्भवनात्तस्मात् कूटमुद्गरपाणयः ॥ २५ ॥
महोदरा महादंष्ट्रा घोररूपा महाबलाः ।
युद्धाभिमनसः सर्वे हनूमद्ग्रहणोन्मुखाः ॥ २६ ॥
ते कपिं तं समासाद्य तोरणस्थमवस्थितम् ।
अभिपेतुर्महाभागाः पतङ्गा इव पावकम् ॥ २७ ॥
ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ।
आजघ्नुर्वानरश्रेष्ठं शरैरादित्यसन्निभैः ॥ २८ ॥
मुद्गरैः पट्टिशैः शूलैः प्रासतोमरपाणयः ।
परिवार्य्य हनूमन्तं सहसा तस्थुरग्रतः ॥ २९ ॥

संवर्त्तिते विवर्त्तिते ईक्षणे नेत्रे येन सः ॥ २२ ॥ २३ ॥ २४ ॥

अशीतिः साहस्रं सार्थेऽण्। कूटः अयस्कारः कूटसदृशायुधविशेषः ॥ २५ ॥ २६ ॥

अवस्थितं युद्धाय सन्नद्धम् ॥ २७ ॥

काञ्चनाङ्गदैः काञ्चनपट्टबन्धैः ॥ २८ ॥ २९ ॥

हनूमानपि तेजस्वी श्रीमान् पर्वतसन्निभः।
चितावाविध्य लाङ्गूलं ननाद च महाध्वनिम् ॥ ३० ॥
स भूत्वा तु महाकायो हनूमान्मारुतात्मजः।
पुच्छमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ३१ ॥
तस्यास्फोटितशब्देन महताचानुनादिना।
पेतुर्विहङ्गा गगनादुच्चैश्चेदमघोषयत् ॥ ३२ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ३३ ॥
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः।
हनूमाञ्छत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ३४ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत्।
शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥ ३५ ॥
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम्।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥ ३६ ॥

चिताविविध्य लाङ्गूलमिति स्वभावोक्तिरलङ्कारः ॥ ३० ॥ ३१ ॥
अनुनादिना प्रतिध्वनिमता ॥ ३२ ॥
जयति सर्वोत्कर्षेण वर्त्तते ॥ ३३ ॥ ३४ ॥
प्रतिबलं प्रतिस्पर्द्धाऽर्हबलमत् ॥ ३५ ॥
मिषतामित्यनादरे षष्ठी ॥ ३६ ॥

तस्य सन्नादशब्देन तेऽभवन् भयशङ्किताः ।
ददृशुश्च हनूमन्तं सन्ध्यामेघमिवोन्नतम् ॥ ३७ ॥
स्वामिसन्देशनिःशङ्कास्ततस्ते राक्षसाः कपिम् ।
चित्रैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ॥ ३८ ॥
स तैः परिवृतः शूरैः सर्वतः स महाबलः ।
आससादायसं भीमं परिघं तोरणाश्रितम् ॥ ३९ ॥
स तं परिघमादाय जघान रजनीचरान् ।
स पन्नगमिवादाय स्फुरन्तं विनतासुतः ॥ ४० ॥
विचचाराम्बरे वीरः परिगृह्य च मारुतिः ।
सूदयामास वज्रेण दैत्यानिव सहस्रदृक् ॥ ४१ ॥
स हत्वा राक्षसान् वीरः किङ्करान् मारुतात्मजः ।
युद्धाकाङ्क्षी महावीरस्तोरणं समवस्थितः ॥ ४२ ॥

सन्नादशब्देन आस्फोटशब्दजप्रतिध्वनिना सिंहनादेन च ॥ ३७ ॥

स्वामिनो रामस्य सन्देशेन नामग्रहणेन कस्यायं भट इति सन्देहरहिताः । किञ्च स्वामिसन्देशेन रावणाज्ञयाऽतिघोरेणाप्यनेन योद्धव्यमेवेति निश्चयात् पश्चान्निरस्तशङ्कारहिताः प्रहरणैरायुधैरभिपेतुः प्राहरन्नित्यर्थः ॥ ३८ ॥

तोरणाश्रितं तोरणसमीपे स्थापितम् ॥ ३९ ॥

स प्रसिद्धो विनतासुतः पन्नगमादायेव स हनूमान् तं परिघमादायेति योजना ॥ ४० ॥

ततस्तस्माद्भयान्मुक्ताः कतिचित्तत्र राक्षसाः।
निहतान् किङ्करान् सर्वान् रावणाय न्यवेदयन् ॥ ४३ ॥

स राक्षसानां निहतं महाबलं
निशम्य राजा परिवृत्तलोचनः।
समादिदेशाप्रतिमं पराक्रमे
प्रहस्तपुत्रं समरे सुदुर्जयम् ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
द्विचत्वारिंशः सर्गः ॥ ४२ ॥

परिगृह्य परिघमिति शेषः ॥ ४१ ॥ ४२ ॥
कतिचिद्धतावशेषाः द्विषाः ॥ ४३ ॥
प्रहस्तपुत्रो जम्बुमाली ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ।

ततः स किङ्करान् हत्वा हनूमान् ध्यानमास्थितः ।
वनं भग्नं मया चैत्यप्रासादो न विनाशितः ॥ १ ॥
तस्मात् प्रासादमप्येवमिमं विध्वंसयाम्यहम् ।
इति सञ्चिन्त्य हनुमान् मनसा दर्शयन् बलम् ॥ २ ॥
चैत्यप्रासादमुत्प्लुत्य मेरुशृङ्गमिवोन्नतम् ।
आरुरोह हरिश्रेष्ठो हनूमान् मारुतात्मजः ॥ ३ ॥
आरुह्य गिरिसङ्काशं प्रासादं हरियूथपः ।
बभौ स सुमहातेजाः प्रतिसूर्य इवोदितः ॥ ४ ॥
संप्रधृष्य तु दुर्धर्षं चैत्यप्रासादमुत्तमम् ।
हनूमान् प्रज्वलँल्लक्ष्म्या पारियात्रोपमोऽभवत् ॥ ५ ॥

अथ रावणसन्दिष्टसेनान्तरागमनात् पूर्वं तूष्णीं स्थित्वा न किञ्चित् प्रयोजनमिति विचार्य । प्रासादभङ्गादि चिकीर्षति । तत इति । ध्यानं विचारः । चैत्यप्रासादः रक्षःकुलदेवताप्रासादः ॥ १ ॥

एवं प्रमदवनवत् ॥ २ ॥

प्रासादमुत्प्लुत्यारुरोह ॥ ३ । ४ ॥

सम्प्रधृष्य भंक्त्वा पारियात्रः पर्वतविशेषः । औपम्यं साधारणधर्मः ॥ ५ ॥

स भूत्वा सुमहाकायः प्रभावान् मारुतात्मजः।
धृष्टमास्फोटयामास लङ्कां शब्देन पूरयन् ॥ ६ ॥
तस्यास्फोटितशब्देन महता श्रोत्रघातिना।
पेतुर्विहङ्गमास्तत्र चैत्यपालाश्च मोहिताः ॥ ७ ॥
अस्त्रविज्जयतां रामो लक्ष्मणश्च महाबलः।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ ८ ॥
दासोऽहं कोशलेन्द्रस्य रामस्याक्लिष्टकर्मणः।
हनूमांश्शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥ ९ ॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत्।
शिलाभिश्च प्रहरतः पादपैश्च सहस्रशः ॥ १० ॥
धर्षयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम्।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥ ११ ॥
एवमुक्त्वा महाकायश्चैत्यस्थो हरियूथपः।
ननाद भीमनिर्ह्रादो रक्षसां जनयन् भयम् ॥ १२ ॥
तेन नादेन महता चैत्यपालाः शतं ययुः।
गृहीत्वा विविधानस्त्रान् प्रासान् खड्गान् परश्वधान् ॥ १३ ॥
विसृजन्तो महाकाया मारुतिं पर्य्यवारयन्।

धृष्टं निर्भयम् ॥ ६ ॥
विहङ्गाश्चैत्यपालाश्च मोहिताः पेतुः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

ते गदाभिर्विचित्राभिः परिघैः काञ्चनाङ्गदैः ॥ १४ ॥

आजग्मुर्वानरश्रेष्ठं बाणैश्चादित्यसन्निभैः ।

आवर्त्त इव गङ्गायास्तोयस्य विपुलो महान् ॥ १५ ॥

परिक्षिप्य हरिश्रेष्ठं स बभौ रक्षसां गणः ।

ततो वातात्मजः क्रुद्धो भीमरूपं समास्थितः ॥ १६ ॥

प्रासादस्य महांस्तस्य स्तम्भं हेमपरिष्कृतम् ।

उत्पाटयित्वा वेगेन हनूमान् मारुतात्मजः ॥ १७ ॥

ततस्तं भ्रामयामास शतधारं महाबलः ।

तत्र चाग्निः समभवत् प्रासादश्चाप्यदह्यत ॥ १८ ॥

दह्यमानं ततो दृष्ट्वा प्रासादं हरियूथपः ।

स राक्षसशतं हत्वा वज्रेणेन्द्र इवासुरान् ॥ १९ ॥

अन्तरिक्षस्थितः श्रीमानिदं वचनमब्रवीत् ।

मादृशानां सहस्राणि विसृष्टानि महात्मनाम् ॥ २० ॥

शतं ययुः अनेके इत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥

परिक्षिप्येत्यत्र तोयस्यावर्त्त इवेति दृष्टान्तः ॥ १६ ॥

महांश्चासौ मारुतात्मज इत्यन्वयः ॥ १७ ॥

उत्पाटयित्वा तं शतधारं स्तम्भं भ्रामयामास तत्र च भ्राम्यमाणे स्तम्भान्तरेण सङ्घट्टनवशादग्निः समभवत्तेन प्रासादश्चाप्यदह्यत ॥ १८ ॥ १९ ॥

ततः स राक्षसशतं हत्वा । दह्यमानं प्रासादं दृष्ट्वा चान्तरिक्षे स्थित इदं वचोऽब्रवीत् ॥ २० ॥

बलिनां वानरेन्द्राणां सुग्रीववशवर्त्तिनाम्।
अटन्ति वसुधां कृत्स्नां वयमन्ये च वानराः ॥ २१ ॥
दशनागबलाः केचित् केचिद्दशगुणोत्तराः।
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ २२ ॥
सन्ति चौघबलाः केचित् सन्ति वायुबलोपमाः।
अप्रमेयबलाः केचित्तत्रासन् हरियूथपाः ॥ २३ ॥
ईदृग्विधैस्तु हरिभिर्वृतो दन्तनखायुधैः।
शतैः शतसहस्रैश्च कोटिभिश्चायुतैरपि ॥ २४ ॥
आगमिष्यति सुग्रीवः सर्वेषां वो निषूदनः।
नेयमस्ति पुरी लङ्का न यूयं न च रावणः।
यस्य त्विक्ष्वाकुवीरेण बद्धं वैरं महात्मना ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

एतदुक्तिप्रयोजनञ्च राक्षसहृदयपीड़ार्थम् ॥ २१ ॥ २२ ॥
ओघबलाः। ओघसंख्यातगजबलाः ॥ २३ ॥ २४ ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

जम्बुमाली महातेजा विव्याध निशितैः शरैः ॥ ६ ॥
अर्द्धचन्द्रेण वदने शिरस्येकेन कर्णिना ।
बाह्वोर्विव्याध नाराचैर्दशभिस्तु कपीश्वरम् ॥ ७ ॥
तस्य तच्छुशुभे ताम्रं शरेणाभिहतं मुखम् ।
शरदीवाम्बुजं फुल्लं विद्धं भास्कररश्मिना ॥ ८ ॥
तत्तस्य रक्तरक्तेन रञ्जितं शुशुभे मुखम् ।
यथाकाशे महापद्मं सिक्तं काञ्चनबिन्दुभिः ॥ ९ ॥
चुकोप बाणाभिहतो राक्षसस्य महाकपिः ।
ततः पार्श्वेति विपुलां ददर्श महतीं शिलाम् ॥ १० ॥
तरसा तां समुत्पाट्य चिक्षेप जववद्बली ।
तां शरैर्दशभिः क्रुद्धस्ताडयामास राक्षसः ॥ ११ ॥

तोरणविटङ्कः तोरणस्तम्भयोरुपरि तिर्य्यक् प्रतिष्ठापितकपोतपालिकादाव ॥ ६ ॥

कर्णी अङ्कुशाकाराग्रशरविशेषः ॥ ७ ॥

अम्बुजं रक्ताम्बुजम् ॥ ८ ॥

तत्तस्य रक्तं रक्तं क्षत इति शेषः । रक्तेन क्षतजेन रञ्जितमुखमाकाशे काञ्चनबिन्दुभिः रक्ताशोकपुष्परसबिन्दुभिः । सिक्तं महापद्मं महत्तरं रक्तपद्ममिवेत्य भूतोपमेयम् । अशोकः काञ्चनाङ्कयः ॥ ९ ॥ १० ॥

ताडयामास बिभेद ॥ ११ ॥

## चतुश्चत्वारिंशः सर्गः

सन्दिष्टो राक्षसेन्द्रेण प्रहस्तस्य सुतो बली ।
जम्बुमाली महादंष्ट्रो निर्जगाम धनुर्द्धरः ॥ १ ॥
रक्तमाल्याम्बरधरः स्रग्वी रुचिरकुण्डलः ।
महान् विवृत्तनयनश्चण्डः समरदुर्जयः ॥ २ ॥
धनुः शक्रधनुःप्रख्यं महद्रुचिरसायकम् ।
विस्फारयाणो वेगेन वज्राशनिसमस्वनम् ॥ ३ ॥
तस्य विस्फारघोषेण धनुषो महता दिशः ।
प्रदिशश्च नभश्चैव सहसा समपूर्य्यत ॥ ४ ॥
रथेन खरयुक्तेन तमागतमुदीक्ष्य सः ।
हनूमान् वेगसम्पन्नो जहर्ष च ननाद च ॥ ५ ॥
तं तोरणविटङ्कस्थं हनूमन्तं महाकपिम् ।

अथ जम्बुमाल्यागमनं तद्वधश्च सन्दिष्ट इति ॥ १ ॥ २ ॥
धनुर्विस्फारयाणः विस्फारयमाणः विस्फारो ज्याघोषः ॥ ३ ॥
समपूर्य्यत । दिगादिसमुदायापेक्षमेकवचनम् ॥ ४ ॥
जहर्ष स्वबलानुरूपशत्रुप्राप्त्या ॥ ५ ॥

विपन्नं कर्म तद्दृष्ट्वा हनूमांश्चण्डविक्रमः ।
सालं विपुलमुत्पाट्य भ्रामयामास वीर्य्यवान् ॥ १२ ॥
भ्रामयन्तं कपिं दृष्ट्वा सालवृक्षं महाबलम् ।
चिक्षेप सुबहून् बाणान् जम्बुमाली महाबलः ॥ १३ ॥
सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे ।
उरस्येकेन बाणेन दशभिस्तु स्तनान्तरे ॥ १४ ॥
स शरैः पूरिततनुः क्रोधेन महता वृतः ।
तमेव परिघं गृह्य भ्रामयामास वेगितः ॥ १५ ॥
अतिवेगोऽतिवेगेन भ्रामयित्वा महोत्कटः ।
परिघं पातयामास जम्बुमालेर्महोरसि ॥ १६ ॥
तस्य चैव शिरो नास्ति न बाहू जानुनी न च ।
न धनुर्न रथो नाश्वास्तत्रादृश्यन्त नेषवः ॥ १७ ॥
स हतस्तरसा तेन जम्बुमाली महारथः ।
पपात निहतो भूमौ चूर्णिताङ्ग इव द्रुमः ॥ १८ ॥
जम्बुमालिं सुनिहतं किङ्करांश्च महाबलान् ।
चुक्रोध रावणः श्रुत्वा क्रोधसंरक्तलोचनः ॥ १९ ॥
स रोषसंवर्त्तितताम्रलोचनः
प्रहस्तपुत्रे निहते महाबले ।

विपन्नं व्यर्थीकृतम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

अमात्यपुत्रानतिवीर्य्यविक्रमान्
समादिदेशाशु निशाचरेश्वरः ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

नाम्नाः रथेन खरयुक्तेनेत्युक्तेरश्वशब्देनात्र खरा उच्यन्ते ॥ १७ ॥
॥ १८ ॥ १९ ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

# पञ्चचत्वारिंशः सर्गः

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणः सुताः ।
निर्ययुर्भवनात्तस्मात् सप्तसप्तार्चिवर्चसः ॥ १ ॥
महद्बलपरीवारा धनुष्मन्तो महाबलाः ।
कृतास्त्रास्त्रविदां श्रेष्ठाः परस्परजयैषिणः ॥ २ ॥
हेमजालपरिचित्रैर्ध्वजवद्भिः पताकिभिः ।
तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३ ॥
तप्तकाञ्चनचित्राणि चापान्यमितविक्रमाः ।
विस्फारयन्तः संहृष्टास्तडित्वन्त इवाम्बुदाः ॥ ४ ॥

सप्तार्चिवर्चसः अग्नितुल्यतेजसः । आर्षो रेफलोपः ॥ १ ॥

महद्बलं महती सेना परिवारो येषाम् । कृतास्त्रास्त्रेति आर्षः सन्धिः कृतास्त्राः शिक्षितास्त्राः अस्त्रविदां श्रेष्ठाः परस्परजयैषिणः । अहमहमिकया स्वस्वोत्कर्षापेक्षिणः ॥ २ ॥

ध्वजवद्भिर्विचित्रध्वजदण्डयुक्तैः पताकिभिः प्रशस्तपताकावद्भिर्महारथैर्निर्ययुरिति सम्बन्धः ॥ ३ ॥ ४ ॥

जनन्यस्तास्ततस्तेषां विदित्वा किङ्करान् हतान्।
बभूवुः शोकसम्भ्रान्ताः सबान्धवसुहृज्जनाः ॥ ५ ॥
ते परस्परसङ्घर्षास्तप्तकाञ्चनभूषणाः।
अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितम् ॥ ६ ॥
सृजन्तो बाणवृष्टिं ते रथगर्जितनिःस्वनाः।
प्रावृट्काल इवाम्भोदा विचेरुर्नैर्ऋताम्बुदाः ॥ ७ ॥
अवकीर्णस्ततस्ताभिर्हनूमान् शरवृष्टिभिः।
अभवत् संवृताकारः शैलराडिव वृष्टिभिः ॥ ८ ॥
स शरान् वञ्चयामास तेषामाशुचरः कपिः।
रथवेगांश्च वीराणां विचरन् विमलेऽम्बरे ॥ ९ ॥
स तैः क्रीडन् धनुष्मद्भिर्व्योम्नि वीरः प्रकाशते।
धनुष्मद्भिर्यथा मेघैर्मारुतः प्रभुरम्बरे ॥ १० ॥

शोकसम्भ्रान्ताः निश्चितमरणा बुध्यतिशेषः ॥ ५ ॥

परस्परसङ्घर्षाः। अहमेवाग्र इति परस्परमभिमानात्। तोरणस्थमवस्थितम्। तत्र स्थितं निश्चलमित्यर्थः ॥ ६ ॥

सृजन्तो विसृजन्तः ॥ ७ ॥

संवृताकारः अदृश्य इति यावत् ॥ ८ ॥

वञ्चयामास स्थिरलक्ष्यं हि सुवेधं भवति। रथवेगांश्च वञ्चयामास ॥ ९ ॥

स कृत्वा निनदं घोरं त्रासयंस्तां महाचमूम् ।
चकार हनुमान् वेगं तेषु रक्षःसु वीर्य्यवान् ॥ ११ ॥
तलेनाभिहनत् कांश्चित् पादैः कांश्चित् परन्तपः ।
मुष्टिभिश्चाहनत् कांश्चिन्नखैः कांश्चिद्व्यदारयत् ॥ १२ ॥
प्रममाथोरसा कांश्चिदूरुभ्यामपरानपि ।
केचित्तस्यैव नादेन तत्रैव पतिता भुवि ॥ १३ ॥
ततस्तेष्ववपन्नेषु भूमौ निपतितेषु च ।
तत्सैन्यमगमत् सर्वं दिशो दश भयार्दितम् ॥ १४ ॥
विनेदुर्विस्वरं नागा निपेतुर्भुवि वाजिनः ।
भग्ननीड़ध्वजच्छत्रैर्भूश्च कीर्णाभवद्रथैः ॥ १५ ॥
स्रवता रुधिरेणाथ स्रवन्त्यो दर्शिताः पथि ।
विविधैश्च स्वनैर्लङ्का ननाद विकृतं तदा ॥ १६ ॥
स तान् प्रवृद्धान् विनिहत्य राक्षसान्
महाबलश्चण्डपराक्रमः कपिः ।

धनुर्भ्रद्भिरिति पाठे आर्षम् सत्वम् । धनुर्भ्रद्भिरैन्द्रधनुष्मद्भिः ॥ १० ॥
११ ॥ १२ १३ ॥
भयार्दितं सत् दशदिशो दुद्रावेति शेषः ॥ १४ ॥
नीड़ं रथस्य रथ्यधिष्ठानस्थानम् ॥ १५ ॥

युयुत्सुरन्यैः पुनरेव राक्षसै-
स्तदेव वीरोऽभिजगाम तोरणम् ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

स्रवन्त्यो नद्यः ननाद प्रतिध्वनिमत् रक्षो राक्षसीध्वनिना च ॥ ॥ १६ ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

## षट्चत्वारिंशः सर्गः

हतान् मन्त्रिसुतान् बुद्ध्वा वानरेण महात्मना ।
रावणः संवृताकारश्चकार मतिमुत्तमाम् ॥ १ ॥
स विरूपाक्षयूपाक्षौ दुर्द्धर्षञ्चैव राक्षसम् ।
प्रघसं भासकर्णञ्च पञ्चसेनाग्रनायकान् ॥ २ ॥
सन्दिदेश दशग्रीवो वीरान्नयविशारदान् ।
हनूमद्ग्रहणे व्यग्रान् वायुवेगसमान् युधि ॥ ३ ॥
यात सेनाग्रगाः सर्वे महाबलपरिग्रहाः ।
सवाजिरथमातङ्गाः स कपिः शास्यतामिति ॥ ४ ॥
यत्तैश्च खलु भाव्यं स्यात्तमासाद्य वनालयम् ।
कर्म चापि समाधेयं देशकालाविरोधितम् ॥ ५ ॥

संवृताकारः निगूहीतान्तर्गतभयः उत्तमां मतिं धैर्य्यविषयाम् ॥ १ ॥ २ ॥

हनूमद्ग्रहणे सन्दिदेश व्यग्रान् सर्वत्र कार्य्ये त्वरावतः ॥ ३ ॥

यात गच्छत ॥ ४ ॥

यत्तैः सावधानैः । किञ्चात्र देशकालविरोधिकर्म न कार्य्यमि-

न ह्यहं तं कपिं मन्ये कर्मणा प्रतितर्कयन्।
सर्वथा तन्महद्भूतं महाबलपरिग्रहम् ॥ ६ ॥
वानरोऽयमिति ज्ञात्वा न हि शुध्यति मे मनः।
नैवाहं तं कपिं मन्ये यथेयं प्रस्तुता कथा ॥ ७ ॥
भवेदिन्द्रेण वा सृष्टमस्मदर्थं तपोबलात्।
सनागयक्षगन्धर्वदेवासुरमहर्षयः ॥ ८ ॥
युष्माभिः सहितैः सर्वैर्मया सह विनिर्जिताः।
तैरवश्यं विधातव्यं व्यलीकं किञ्चिदेव नः ॥ ९ ॥
तदेव नात्र सन्देहः प्रसह्य परिगृह्यताम्।
यात सेनाग्रगाः सर्वे महाबलपरिग्रहाः ॥ १० ॥

त्याह,—देशकालाविरोधितं तदविरुद्धं तदुचितमिति यावत्। समाधेयं कार्य्यम् ॥ ५ ॥

यत्तेर्भाव्यमित्यत्र हेतुमाह,—न हीति। तस्य कर्मणा तं प्रतितर्कयन्। तं कपिं न मन्ये। किं तर्हि मन्यसे तत्राह,—सर्वथेति ॥ ६ ॥ ७ ॥

महतो भूतस्येह कः प्रसङ्गस्तत्राह,—भवेदिति। सनागेति। नागादिसहिता देवादय इत्यर्थः। सहितैः सर्वैर्युष्माभिः सह मया विनिर्जिता अतस्तैरवश्यं नोऽस्माकं किञ्चिद्व्यलीकम् अप्रियं विधातव्यं विधातुं प्राप्तकालं तस्मात्तदेव तत्सृष्टभूतमेव परिगृह्यतां बध्वा आनीयताम् ॥ ८ ॥ ९ ॥ १० ॥

सवाजिरथमातङ्गाः स कपिः शास्यतामिति ।
नावमन्यो भवद्भिश्च कपिर्धीरपराक्रमः ॥ ११ ॥
दृष्टा हि हरयः शीघ्रं मया विपुलविक्रमाः ।
वाली च सहसुग्रीवो जाम्बवांश्च महाबलः ॥ १२ ॥
नीलः सेनापतिश्चैव ये चान्ये द्विविदादयः ।
नैव तेषां गतिर्भीमा न तेजो न पराक्रमाः ॥ १३ ॥
न मतिर्न बलोत्साहो न रूपपरिकल्पनम् ।
महत्सत्त्वमिदं ज्ञेयं कपिरूपं व्यवस्थितम् ॥ १४ ॥
प्रयत्नं महदास्थाय क्रियतामस्य निग्रहः ।
कामं लोकास्त्रयः सेन्द्राः ससुरासुरमानवाः ॥ १५ ॥
भवतामग्रतः स्थातुं न पर्य्याप्ता रणाजिरे ।
तथापि तु नयज्ञेन जयमाकाङ्क्षता रणे ॥ १६ ॥
आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला ।
ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः ॥ १७ ॥

स वाजिरथेत्यादि पुनर्वचनं स्थैर्य्यार्थम् ॥ ११ ॥
सर्वथा महद्भूतमित्यत्र हेतुनिश्चायकमाह,—दृष्टा इति ॥ १२ ॥
ननु त्वदृष्टान्यतम एवायं नेत्याह,—नैवेति । यथास्य भीमा गतिः समुद्रप्लवनरूपा तथा तेषां नैव यथा चास्य तेज आदि तथा तेषां न । रूपपरिकल्पनं यथेप्सितरूपपरिग्रहः ॥ १३ ॥ १४ ॥
प्रयत्नमित्यार्षं क्लीबत्वम् । कामं यद्यपीत्यर्थः ॥ १५ ॥

समुत्पेतुर्महावेगा ज्वलनाग्निसमतेजसः।
रथैश्च मत्तैर्नागैश्च वाजिभिश्च महाजवैः ॥ १८ ॥
अस्त्रैश्च निशितैस्तीक्ष्णैः सर्वैश्चोपहिता बलैः।
ततस्तु ददृशुर्वीरा दीप्यमानं महाकपिम् ॥ १९ ॥
रश्मिमन्तमिवोद्यन्तं स्वतेजोरश्मिमालिनम्।
तोरणस्थं महावेगं महासत्त्वं महाबलम् ॥ २० ॥
महामतिं महोत्साहं महाकायं महाभुजम्।
तं समीक्ष्यैव ते सर्वे दिक्षु सर्वास्ववस्थिताः ॥ २१ ॥
तैस्तैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः।
तस्य पञ्चायसास्तीक्ष्णाः सिताः पीतमुखाः शराः।
शिरस्युत्पलपत्राभा दुर्धरेण निपातिताः ॥ २२ ॥
स तैः पञ्चभिराविद्धः शरैः शिरसि वानरः।
उत्पपात नदन् व्योम्नि दिशो दश विनादयन् ॥ २३ ॥

नयज्ञेन नीतिज्ञेन आत्मा स्वदेहः। युद्धसिद्धिर्युद्धजयः ॥ १६ ॥
॥ १७ ॥ १८ ॥ १९ ॥

सत्वं चित्तम् ॥ २० ॥

दिक्षु सर्वास्ववस्थिताः 'प्राक् तत्समीपमागन्तु'मवस्थिता इति भावः ॥ २१ ॥

तीक्ष्णा मर्मच्छिदः पीतमुखाः फलभागे स्वर्णखचिताः। उत्पलपत्राभा एव न तु तत्पीडाशंसा इत्यर्थः ॥ २२ ॥

ततस्तु दुर्धरो वीरः सरथः सज्यकार्मुकः।
किरन् शरशतैर्नैकैरभिपेदे महाबलः॥ २४॥
स कपिर्वारयामास तं व्योम्नि शरवर्षिणम्।
वृष्टिमन्तं पयोदान्ते पयोदमिव मारुतः॥ २५॥
अर्द्यमानस्ततस्तेन दुर्धरेणानिलात्मजः।
चकार निनदं भूयो व्यवर्द्धत च वीर्य्यवान्॥ २६॥
स दूरं सहसोत्पत्य दुर्धरस्य रथे हरिः।
निपपात महावेगो विद्युद्राशिर्गिराविव॥ २७॥
ततः स मथिताष्टाश्वं रथं भग्नाक्षकूबरम्।
विहाय न्यपतद्भूमौ दुर्धरस्त्यक्तजीवितः॥ २८॥
तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि।
तौ जातरोषौ दुर्धर्षौ उत्पेततुररिन्दमौ॥ २९॥
स ताभ्यां सहसोत्प्लुत्य विष्ठितो विमलेऽम्बरे।
मुद्गराभ्यां महाबाहुर्वक्षस्यभिहतः कपिः॥ ३०॥

स्वयं नदन्। तेन नादेन दिशो नादयन्नित्यर्थः। उत्पपात तोरणादिति शेषः॥ २३॥

अभिपेदे प्राप्तः॥ २४॥

कपिर्व्योम्नि स्थित्वा तं स्वनादेन हुङ्कारादिरूपेण वारयामास। पयोदान्ते जलदात्ययवर्षाकालान्ते॥ २५॥ २६॥

रथे निपपातेत्यन्वयः॥ २७॥ २८॥ २९॥

तयोर्वेगवतोर्वेगं निहत्य स महाबलः।
निपपात पुनर्भूमौ सुपर्ण इव वेगितः॥ ३१॥
स सालवृक्षमासाद्य समुत्पाट्य च वानरः।
तावुभौ राक्षसौ वीरौ जघान पवनात्मजः॥ ३२॥
ततस्तांस्त्रीन् हतान् ज्ञात्वा वानरेण तरस्विना।
अभिचक्राम वेगेन प्रहस्य प्रघसो बली॥ ३३॥
भासकर्णश्च संक्रुद्धः शूलमादाय वीर्य्यवान्।
एकतः कपिशार्दूलं यशस्विनमवस्थितौ॥ ३४॥
पट्टिशेन शिताग्रेण प्रघसः प्रत्यपोथयत्।
भासकर्णश्च शूलेन राक्षसः कपिकुञ्जरम्॥ ३५॥
स ताभ्यां विक्षतैर्गात्रैरसृग्दिग्धतनूरुहः।
अभवद्वानरः क्रुद्धो बालसूर्य्यसमप्रभः॥ ३६॥
समुत्पाट्य गिरेः शृङ्गं समृगव्यालपादपम्।
जघान हनुमान् वीरो राक्षसौ कपिकुञ्जरः।
गिरिशृङ्गसुनिष्पिष्टौ तिलशस्तौ बभूवतुः॥ ३७॥

ताभ्यां कर्कशाभ्यां मुद्गराभ्यां करणाभ्यामभिहतः॥ ३०॥
निहत्य वञ्चयस्तत्त्वाद्व्यर्थीकृत्य॥ ३१॥ ३२॥ ३३॥
एकतोऽवस्थितावित्यन्वयः। परस्परसाहाय्यबुद्ध्यैकदेशे स्थिता-
वित्यर्थः॥ ३४॥ ३५॥

ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु ।
बलं तदवशेषन्तु नाशयामास वानरः ॥ ३८ ॥
अश्वैरश्वान् गजैर्नागान् योधैर्योधान् रथैरथान् ।
स कपिर्नाशयामास सहस्राच इवासुरान् ॥ ३९ ॥
हयैर्नागैस्तुरङ्गैश्च भग्नाचैश्च महारथैः ।
हतैश्च राक्षसैर्भूमीरुद्धमार्गा समन्ततः ॥ ४० ॥
ततः कपिस्तान् ध्वजिनीपतीन् रणे
निहत्य वीरान् सबलान् सवाहनान् ।
तथैव वीरः परिगृह्य तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षट्चत्वारिंशः सर्गः ॥ ४६ ॥

विचतैर्गात्रैरुपलक्षितः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥
ध्वजिनीपतीन् सेनापतीन्। परिगृह्याश्रित्य स्थित इति शेषः।
कृतक्षणो लब्धावसरः ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ।

सेनापतीन् पञ्च स तु प्रमापितान्
हनूमता सानुचरान् सवाहनान् ।
निशम्य राजा समरोद्धतोन्मुखं
कुमारमक्षं प्रसमैक्षताक्षम् ॥ १ ॥

स तस्य दृष्ट्यर्पणसम्प्रचोदितो
प्रतापवान् काञ्चनचित्रकार्मुकः ।
समुत्पपाताथ सदस्युदीरितो
द्विजातिमुख्यैर्हविषेव पावकः ॥ २ ॥

ततो महान् बालदिवाकरप्रभं
प्रतप्तजाम्बूनदजालसन्ततम् ।

प्रमापितान् मारितान् । समरोद्धतोन्मुखं समरोद्धतत्वात् समरायोन्मुखस्य तम् । अक्षं समक्षमवस्थितम् । अक्षाख्यं कुमारं निशम्य दृष्ट्वा प्रसमैक्षत दृष्ट्वा युद्धार्थमाज्ञापयामासेत्यर्थः ॥ १ ॥

तदेवाह,—स इति । सदसि यज्ञशालायां द्विजातिमुख्यैर्हविषोदीरितः प्रेरितः पावक इव समुत्पपात ॥ २ ॥

रथं समास्थाय ययौ स वीर्य्यवान्
महाहरिं तं प्रति नैर्ऋतर्षभः ॥ ३ ॥
ततस्तपःसंग्रहसञ्चयार्जितं
प्रतप्तजाम्बूनदजालचित्रितम् ।
पताकिनं रत्नविभूषितध्वजं
मनोजवाष्टाश्ववरैः सुयोजितम् ॥ ४ ॥
सुरासुराधृष्यमसङ्गचारिणं
तडित्प्रभं व्योमचरं समाहितम् ।
स तूणमष्टासिनिबद्धबन्धुरं
यथाक्रमावेशितशक्तितोमरम् ॥ ५ ॥
विराजमानं प्रतिपूर्णवस्तुना
सहेमदाम्ना शशिसूर्य्यवर्च्चसा ।

महान् स इत्यन्वयः । जाम्बूनदजालेन तत्समूहेन सन्ततं व्याप्तम् ॥ ३ ॥

उक्तमेवार्थं विशिष्याह,—तत इति । तपःसंग्रहस्य तपोऽनुष्ठानस्य सञ्चयेन सम्यक्सार्जितम् ॥ ४ ॥

अतएव व्योमचरम् । असङ्गचारिणम् । पर्वतादिष्वपीति भावः । समाहितं सज्जं तूणं इषुधिः । अष्टस्य दिव्यसिभिः सह निबद्ध बन्धुराः रथपताका यस्मिन् तं यथाक्रमं यथास्थानमावेशितं शक्तितोमरं यस्मिन् तम् ॥ ५ ॥

दिवाकराभं रथमास्थितस्ततः
स निर्जगामामरतुल्यविक्रमः ॥ ६ ॥
स पूरयन् खञ्च महीञ्च साचलां
तुरङ्गमातङ्गमहारथस्वनैः।
बलैः समेतैः सह तोरणस्थितं
समर्थमासीनमुपागमत् कपिम् ॥ ७ ॥
स तं समासाद्य हरिं हरीक्षणो
युगान्तकालाग्निमिव प्रजाक्षये।
अवस्थितं विस्मितजातसम्भ्रमं
समैक्षताक्षो बहुमानचक्षुषा ॥ ८ ॥
स तस्य वेगञ्च कपेर्महात्मनः
पराक्रमञ्चारिषु रावणात्मजः।
विचारयन् स्वञ्च बलं महाबलो
युगक्षये सूर्य्य इवाभिवर्द्धत ॥ ९ ॥

प्रतिपूर्णवसुना युद्धपरिकरवस्तुना। भूमिसूर्य्यवर्चसा सर्वाभिवर्चसा हेमदामसहितेन वस्तुना विराजमानम् ॥ ६ ॥

तोरणस्थितं तोरणाश्रयम् आसीनमुपविष्टम् ॥ ७ ॥

हरीक्षणः सिंहवत्क्रूरदृष्टिः युगान्तकालाग्निमिवत् प्रजाक्षयेऽवस्थितं हरिं समासाद्य समैक्षत। विस्मितञ्च तं जातसम्भ्रमञ्च। वानरोऽयं मां योद्धुमिच्छतीति विस्मयः रावणपुत्रत्वाच्च तत्र जातादरत्वम् ॥ ८ ॥

स जातमन्युः प्रसमीक्ष्य विक्रमं
स्थितः स्थिरः संयति दुर्निवारणम् ।
समाहितात्मा हनुमन्तमाहवे
प्रचोदयामास शितैः शरैस्त्रिभिः ॥ १० ॥

ततः कपिं तं प्रसमीक्ष्य गर्वितं
जितश्रमं शत्रुपराजयोचितम् ।
अवेक्षताक्षः समुदीर्णमानसं
स बाणपाणिः प्रगृहीतकार्मुकः ॥ ११ ॥

स हेमनिष्काङ्गदचारुकुण्डलः
समाससादाशुपराक्रमः कपिम् ।
तयोर्बभूवाप्रतिमः समागमः
सुरासुराणामपि सम्भ्रमप्रदः ॥ १२ ॥

ररास भूमिर्न तताप भानुमान्
ववौ न वायुः प्रचचाल चाचलः ।

अभिवर्द्धत । तेजसा अभ्यवर्द्धतेत्यर्थः ॥ ९ ॥

स्थिरः स्थितः सः । प्रसमीक्ष्य विक्रमं सन्दर्शनीयपराक्रमं संयति रणे दुःखं निवारणं यस्य तं त्रिभिः शरैः प्रचोदयामास युद्धाय प्रेरयामास ॥ १० ॥ ११ ॥

निष्कमुरोभूषणम् आशुपराक्रमः तीक्ष्णपौरुष इति यावत् समागमो युद्धं सम्भ्रमप्रदः भयप्रदः ॥ १२ ॥

कपेः कुमारस्य च वीर्य्यसंयुगं
ननाद च द्यौ रुदधिश्च चुक्षुभे॥ १३॥
स तस्य वीरः सुमुखान् पतत्त्रिणः
सुवर्णपुङ्खान् सविषानिवोरगान्।
समाधिसंयोगविमोक्षतत्त्ववि-
च्छरानथ त्रीन् कपिमूर्द्ध्न्यताड़यत्॥ १४॥
स तैः शरैर्मूर्द्ध्नि समं निपातितैः
क्षरन्नसृग्दिग्धविवृत्तनेत्रः।
नवोदितादित्यनिभः शरांशुमान्
व्यराजतादित्य इवांशुमालिकः॥ १५॥
ततः प्लवङ्गाधिपमन्त्रिसत्तमः
समीक्ष्य तं राजवरात्मजं रणे।

भूमिर्भूमिस्थप्राणिजातं, ररास। वीर्य्यप्रवृत्तं संयुगं वीर्य्येति शेषः॥ १३॥

समाधिर्लक्ष्यदर्शनम्। संयोगः शरसन्धानं विमोक्षः सहितस्य त्यागस्तेषां तत्त्ववित्। अताड़यत् अपातयत्॥ १४॥

असृग्दिग्धश्चासौ विवृत्तनेत्रश्च। विवृत्तलोचन इति पाठे अव-संरोचितचक्षुरित्यर्थः। नवोदितादित्यसन्निभः रक्तवर्ण इत्यर्थः। शरांशुमान् समस्तकस्थशररूपांशुमान् अंशुमालाढ्यः सूर्य इव अरा-जत॥ १५॥

उदग्रचित्रायुधचित्रकार्मुकं
जहर्ष चापूर्य्यत चाहवोन्मुखः ॥ १६ ॥
स मन्दराग्रस्थ इवांशुमाली
विनिःसृतो वीर्य्यमहद्भिरावृतः ।
कुमारमक्षं सबलं सवाहनं
ददाह नेत्राग्निमरीचिभिस्तदा ॥ १७ ॥
ततः स बाणासनशक्रकार्मुकः
शरप्रवर्षो युधि राक्षसाम्बुदः ।
शरान् मुमोचाशु हरीश्वराचले
बलाहको वृष्टिमिवाचलोत्तमे ॥ १८ ॥
कपिस्ततस्तं रणचण्डविक्रमं
प्रवृद्धतेजोबलवीर्य्यसायकम् ।
कुमारमक्षं प्रसमीक्ष्य संयुगे
ननाद हर्षाद्घनतुल्यनिःस्वनः ॥ १९ ॥
स बालभावात् युधि वीर्य्यदर्पितः
प्रवृद्धमन्युः क्षतजोपमेक्षणः ।

आपूर्य्यत अवर्द्धत ॥ १६ ॥
मन्दराग्रस्थत्वेन मध्यन्दिनस्थत्वं लक्ष्यते ॥ १७ ॥
बाणासनमेव शक्रकार्मुकं यस्य सः ॥ १८ ॥
तेज आदिसायकान्ताः प्रवृद्धा यस्य ॥ १९ ॥

समासमादाप्रतिमं रणे कपिं
गजो महाकूपमिवावृतं हरिः॥ २०॥
स तेन बाणैः प्रसभं निपातितै-
श्चकार नादं घननादनिःस्वनः।
समुत्सहेनाशु नभः समारुजन्
भुजोरुविक्षेपणघोरदर्शनः॥ २१॥
तमुत्पतन्तं समभिद्रवद्बली
स राक्षसानां प्रवरः प्रतापवान्।
रथी रथिश्रेष्ठतरः किरञ्छरैः
पयोधरः शैलमिवाश्मवृष्टिभिः॥ २२॥
स तांश्छरांस्तस्य हरिर्विमोचयन्
चचार वीरः पथि वायुसेविते।
शरान्तरे मारुतवद्विनिष्पतन्
मनोजवः संयति भीमविक्रमः॥ २३॥
तमात्तबाणासनमाहवोन्मुखं
खमास्तृणन्तं विविधैः शरोत्तमैः।

इयोरावृतं महाकूपं गजपातनार्थं कृतगर्त्तम्॥ २०॥

घननादनिःस्वनः मेघशब्दसदृशशब्दः समुत्सहेन समुत्साहेन फल-
प्रायं। भुजयोरूर्वोर्विक्षेपणेन घोरं दर्शनं यस्य सः॥ २१॥

समभिद्रवत् अभ्यद्रवत्॥ २२॥

अवेक्ष्यताक्षं बहुमानचक्षुषा
जगाम चिन्तां स च मारुतात्मजः ॥ २४ ॥
ततः शरैर्भिन्नभुजान्तरः कपिः
कुमारवर्य्येण महात्मना नदन् ।
महाभुजः कर्मविशेषतत्त्ववित्
विचिन्तयामास रणे पराक्रमम् ॥ २५ ॥
अबालवद्बालदिवाकरप्रभः
करोत्ययं कर्म महान् महाबलः ।
न चास्य सर्वाहवकर्मशालिनः
प्रमापणे मे मतिरत्र जायते ॥ २६ ॥
अयं महात्मा च महांश्च वीर्य्यतः ।
समाहितश्चातिसहश्च संयुगे ।

शरान् विमोक्षयन् व्यर्थीकुर्वन् । तदुपायः शरान्तर इति ॥ २३ ॥ २४ ॥

एवं शरान् व्यर्थीकुर्वतोऽपि भुजान्तरभेदरूपकर्मविशेषतत्त्वज्ञः । पराक्रमविशेषेण चिन्तयामास ॥ २५ ॥

चिन्ताप्रकारः । अबालवदिति । सर्वाहवकर्मशालिनः सर्वप्रकाराहवकर्मशालिनः अस्यास्मिन् कालेऽस्य प्रमापणे मे मतिर्न जायते । प्रमापणे मामतिरत्र जायते इति पाठेऽयं जन इति वत्स्यैव हनुमतो मामतिरिति निर्देशः ॥ २६ ॥

असंशयं कर्मगुणोदयादयं
सनागयक्षैर्मुनिभिश्च पूजितः ॥ २७ ॥
पराक्रमोत्साहविवृद्धमानसः
समीक्षते मां प्रमुखोऽग्रतः स्थितः ।
पराक्रमो ह्यस्य मनांसि कम्पयेत्
सुरासुराणामपि शीघ्रकारिणः ॥ २८ ॥
न खल्वयं नाभिभवेदुपेक्षितः
पराक्रमो ह्यस्य रणे विवर्द्धते ।
प्रमापणं ह्यस्य ममाद्य रोचते
न वर्द्धमानोऽग्निरुपेक्षितुं क्षमः ॥ २९ ॥
इति प्रवेगन्तु परस्य तर्कयन्
स्वकर्मयोगञ्च विधाय वीर्य्यवान् ।
चकार वेगन्तु महाबलस्तदा
मतिञ्च चक्रेऽस्य वधे तदानीम् ॥ ३० ॥

समाहितोऽवहितः अतिसहोऽतिरभसोऽप्रसह्यः कर्मगुणोदयादय-कर्मणो गुणोदयोऽत्यभ्युदयस्य दर्शनाद्धेतोः पूजित इत्यर्थः ॥ २७ ॥

पराक्रमविषयोत्साहेन विवृद्धं मानसं यस्य तादृशः सन् मां समीक्षते न तु कातर्य्येणेत्यर्थः । प्रमुखः वीरमुख्यः ॥ २८ ॥

उपेक्षितोऽयं न नाभिभवेत् । अभिभवेदेवेत्यर्थः । स्वकर्मयोगं स्वस्य कर्मणि योगं ज्ञानबलविशेषावस्थानरूपमुपायम् ॥ २९ ॥ ३० ॥

स तस्य तानष्टवरान् महाहयान्
समाहितान् भारसहान् विवर्त्तने ।
जघान वीरः पथि वायुसेविते
तलप्रहारैः पवनात्मजः कपिः ॥ ३१ ॥

ततस्तलेनाभिहतो महारथः
स तस्य पिङ्गाधिपमन्त्रिनिर्जितः ।
स भग्ननीडः परिवृत्तकूबरः
पपात भूमौ हतवाजिरम्बरात् ॥ ३२ ॥

स तं परित्यज्य महारथो रथं
सकार्मुकः खड्गधरः खमुत्पतन् ।
ततोऽभियोगादृषिरुग्रवीर्य्यवान्
विहाय देहं मरुतामिवालयम् ॥ ३३ ॥

कपिस्ततस्तं विचरन्तमम्बरे
पतत्त्रिराजानिलसिद्धसेविते ।
समेत्य तं मारुतवेगविक्रमः
क्रमेण जग्राह च पादयोर्दृढम् ॥ ३४ ॥

विवर्त्तने नानाविधमण्डलगमने समाहितान् शिक्षितान् वायुसेविते पथि स्थितः स्थितांश्च ॥ ३१ ॥

नीडं रथ्यधिष्ठानस्थानम् ॥ ३२ ॥

मरुतामालयं स्वर्गमुत्पतन्नृषिरिव ॥ ३३ ॥

स तं समाविध्य सहस्रशः कपि-
र्महोरगं गृह्य इवाण्डजेश्वरः ।
मुमोच वेगात् पितृतुल्यविक्रमो
महीतले संयति वानरोत्तमः ॥ ३५ ॥

स भग्नबाहूरुकटीपयोधरः
क्षरन्नसृक् निर्मथितास्थिलोचनः ।
सम्भिन्नसन्धिः प्रविकीर्णबन्धनो
हतः क्षितौ वायुसुतेन राक्षसः ॥ ३६ ॥

महाकपिर्भूमितले निपीड्य तं
चकार रक्षोधिपतेर्महद्भयम् ।
महर्षिभिश्चक्रचरैः समागतैः
समेत्य भूतैश्च सयक्षपन्नगैः ।
सुरैश्च सेन्द्रैर्भृशजातविस्मयै-
र्हते कुमारे स कपिर्निरीक्षितः ॥ ३७ ॥

पतत्रीति । गरुड़वायुसिद्धसेविते तं समेत्य तं पादयोर्जग्राहेत्य-न्वयः ॥ ३४ ॥

समाविध्य भ्रामयित्वा गृह्य इव । असन्धिरार्षः । गृहीत्वे-वेत्यर्थः ॥ ३५ ॥ ३६ ॥

चक्रचरैर्ज्योतिश्चक्रचरैर्ग्रहादिभिः समेत्य समागतैः जातविस्मयै-र्निरीक्षित इत्यन्वयः ॥ ३७ ॥

निहत्य तं वज्रिसुतोपमं रणे
कुमारमक्षं क्षतजोपमेक्षणम् ।
तदेव वीरोऽभिजगाम तोरणं
कृतक्षणः काल इव प्रजाक्षये ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

वज्रिसुतोपमं जयन्ततुल्यं कृतक्षणः पुनर्युद्धे कृतोत्साहः ॥ ३८

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ।



ततस्तु रक्षोधिपतिर्महात्मा

हनूमताक्षे निहते कुमारे ।

मनः समाधाय स देवकल्पं

समादिदेशेन्द्रजितं सरोषः ॥ १ ॥

त्वमस्त्रविच्छस्त्रभृतां वरिष्ठः

सुरासुराणामपि शोकदाता ।

सुरेषु सेन्द्रेषु च दृष्टकर्मा

पितामहाराधनसञ्चितास्त्रः ॥ २ ॥

तवास्त्रबलमासाद्य ससुराः समरुद्गणाः ।

न शेकुः समरे स्थातुं सुरेश्वरसमाश्रिताः ॥ ३ ॥

न कश्चित्त्रिषु लोकेषु संयुगे न गतश्रमः ।

भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः ।

मनः समाधाय पुत्रनाशखिन्नमपि चेतोऽधीरतयाऽधृष्याभिलभयं प्रतिष्ठाप्य ॥ १ ॥

पितामहाराधनेन सञ्चितास्त्रः प्राप्तब्रह्मास्त्रोऽसीत्यर्थः ॥ २ ॥

सुरेश्वरसमाश्रिता अपि रणे स्थातुं न शेकुः ॥ ३ ॥

देशकालप्रधानश्च त्वमेव मतिसत्तमः ॥ ४ ॥

न तेऽस्त्यशक्यं समरेषु कर्मणां
न तेऽस्त्यकार्य्यं मतिपूर्वमन्त्रणे ।
न सोऽस्ति कश्चित् त्रिषु संग्रहेषु
न वेद यस्तेऽस्त्रबलं बलस्य ॥ ५ ॥

ममानुरूपं तपसो बलस्य ते
पराक्रमस्यास्त्रबलस्य संयुगे ।
न त्वां समासाद्य रणावमर्द्दे
मनः श्रमं गच्छति निश्चितार्थम् ॥ ६ ॥

कश्चित्त्वदन्यो न गतश्रमो न सर्वं प्राप्तश्रमा इत्यर्थः । भुजवीर्य्याभिगुप्तः । तपसाभिरक्षितदेशकालप्रधानश्च मतः सुतमः प्रशस्ततरश्च त्वमेवेत्यन्वयः ॥ ४

समरेषु कर्त्तव्यानां कर्मणां मध्येऽशक्यं नास्ति । कर्मणा इत्येव पाठः साम्प्रदायिक इति कतकः । मतिपूर्वमन्त्रणे शास्त्रानुरूपबुद्धिपूर्वकर्त्तव्यराजकार्य्यविचारे तेऽकार्य्यं नास्ति कार्य्याकार्य्यविचारो नास्तीत्यर्थः । त्रिषु संग्रहेषु त्रिष्वपि लोकेषु भोक्तृभिः कर्मणा संगृह्यन्त इति संग्रहा लोकास्तेषु तेऽस्त्रबलं स्वबलस्य बलं यो न वेद स कश्चिदपि नास्ति सर्वप्रसिद्धबलवीर्य्यबलवानित्यर्थः ॥ ५ ॥

ममानुरूपं मत्सदृशं रणावमर्द्दे युद्धसङ्घर्षे त्वां समासाद्य प्राप्य मे मनो जयविजये निश्चितार्थं सत् श्रमं विषादं न गच्छति तद्बलं त्वाश्रितमीत्यर्थः ॥ ६ ॥

निहता: किङ्करा: सर्वे जम्बुमाली च राक्षस: ।
अमात्यपुत्रा वीराश्च पञ्चसेनाग्रगामिन: ॥ ७ ॥
बलानि सुसमृद्धानि साश्वनागरथानि च ।
महोदरश्च ग्रथित: कुमारोऽक्षश्च सूदित: ।
नतु तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ! ॥ ८ ॥

इदञ्च दृष्ट्वा निहतं महद्बलं
कपे: प्रभावञ्च पराक्रमञ्च ।
त्वमात्मनश्चापि निरीक्ष्य सारं
कुरुष्व वेगं स्वबलानुरूपम् ॥ ९ ॥
बलावमर्दस्त्वयि सन्निकृष्टे
यथा गते शाम्यति शान्तशत्रु: ।
तथा समीक्ष्यात्मबलं परञ्च
समारभस्वास्त्रभृतां वरिष्ठ ! ॥ १० ॥

प्रकृतमाह,—निहता इति ॥ ७ ॥

हे अरिनिषूदन त्वयि मे यः सारः उत्कर्षबुद्धिः स तेषु न त्वेवेत्यन्वयः। यद्वा मे सारः सर्वजगज्जयसामर्थ्यं स त्वय्येव त्वत्साहाय्यनिमित्त एव न तु तेषु। न तु तत्साहाय्यनिमित्तक इत्यर्थः॥ ८ ॥ ९ ॥

गते युद्धाय निर्गते त्वयि सन्निकृष्टे सति बलावमर्दैः अनेकबलप्रमथनहेतुभिः शान्तशत्रुः उपशान्तबलः शत्रुः यथा शाम्यति क्षीणो भवति तथात्मबलं परबलञ्च समीक्ष्यारभस्व बलावमर्दैरिति शान्त-

न वीरसेना गणशो च्यवन्ति
न वज्रमादाय विशालसारम्।
न मारुतस्यास्ति गतिप्रमाणं
न चाग्निकल्पः करणेन हन्तुम् ॥ ११ ॥

शत्रुरिति पाठे कतकः। बलावमर्द इति भ्रान्तशत्रो इति च पठित्वा हे रत्नभर्ता वरिष्ठ त्वयि युद्धाय गते सन्निकृष्टे हनूमत्समीपं प्राप्ते बलावमर्दः सेनानाशो यथा भ्राम्यति न भवति तथारभस्वेत्यर्थ इति तीर्थः॥ १० ॥

अथ तत्र सेनादिपरिग्रहो व्यर्थ इत्याह,—न वीरेति। हे वीर सेना न ग्राह्या यतस्ता गणशः सङ्घशश्च्यवन्ति पलायन्ते नश्यन्ति च। तथा विशालसारम् अतितैक्ष्ण्यकाठिन्यवत् अतएव वज्रं तत्तुल्यम् आयुधजालमादायापि न प्रयोजनं गणशः प्रयुक्तस्य तस्यापि प्रच्यवादेव गणशो च्यवन्तीत्यन्वेत्व्यमार्थं कुतस्तत्राह,—नेति मरुतोऽपत्यस्य मारुतस्य गतेः सामर्थ्यस्य प्रमाणं परिच्छेदः, एतावद्बलं निग्रहीतुं शक्त इति परिच्छेदो नास्ति। अतो लोकं निखिलमपि बलं तस्याकिञ्चित्करमित्यर्थः। किञ्चाग्निकल्पोऽग्नितुल्योऽसौ करणेन शस्त्रादिरूपेण हन्तुं न शक्यः। जयत्यतिबलो राम इत्येतद्घोषणसमये हनूमांश्चतुसत्यानां निहन्ता मारुतात्मज इत्युक्तेरिह रावणस्य मारुतस्येत्युक्तिर्नासमञ्जसा पराक्रमातिशयदर्शनादुत्प्रेक्षामात्रेण तु किञ्चिद्रूतमिति प्रागुक्तं केचित्तु गणान् प्रोचयतीति गणशोऽरूक् हनूमान् तस्मिन् सेनाः नावन्ति ततो न रक्षन्तीत्यर्थं इति वदन्ति। तत्रावतेस्त्रायति समानार्थत्वात्समीपार्थौ सम्भ्यार्थौ तद्योत्यवदेवं विशालसारमित्यत्र विश बल-

तमेवमर्थं प्रसमीक्ष्य सम्यक्
स्वकर्मसाम्याद्धि समाहितात्मा।
स्मरंश्च दिव्यं धनुषोऽस्य वीर्य्यं
व्रजाशु तं कर्म समारभस्व ॥ १२ ॥
न खल्वियं मतिश्रेष्ठ! यत्त्वां संप्रेषयाम्यहम्।
इयस्तु राजधर्माणां क्षत्त्रस्य च मतिर्मता ॥ १३ ॥
नानाशास्त्रेषु संग्रामे वैशारद्यमरिन्दम!।
अवश्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥ १४ ॥

सारमिति छेदं कुर्वन्ति अलसारं कुण्ठसारं त्वम् तत्तुल्यमप्यायुधमादाय न विशु रणं न प्रविशेति च व्याचक्षते। अलतेर्धातोः पर्य्याप्त्यर्थत्वेन पर्य्याप्तसारमिति व्याख्यातुं योग्यं कुण्ठत्वर्थस्य ततोऽलाभात् ॥ ११ ॥

किं बलावष्टम्भेन गन्तव्यमिति शङ्कायां तत्प्रविशेषमुपदिशति तमिति। तं मदुक्तमर्थम् एवमेव प्रसमीक्ष्य एवमेव तत्त्वमिति निश्चित्य स्वकर्मसाम्यात् स्वेनैव कर्मणः प्रक्रान्तकार्य्यस्य साम्यात् सिद्धेः सम्पादनीयत्वात्त्वं समाहितात्मा समाहितचित्तो भूत्वाऽस्य विषये दिव्यं धनुषो वीर्य्यं दिव्यास्त्रमोक्षसामर्थ्यं स्मरन्निश्चिन्वन् व्रज। गत्वा चाशु तं परकीयप्रहारहीनं यथा भवति तथा शत्रुपराभवकर्मारभस्व ॥ १२ ॥

हे मतिश्रेष्ठ प्रशस्तबुद्धे अहं त्वाम् अतिप्रियं पुत्रम् इन्द्रजित्संकटे प्रेषयामि। इयं प्रेषणा नोचिता खलु। अथापि इयं मतिः राजधर्माणामन्यकां तथा क्षत्त्रस्य क्षत्रियस्य च मतैव शास्त्रतः सम्मतैव ॥ १३ ॥

ततः पितुस्तद्वचनं निशम्य
प्रदक्षिणं दक्षसुतप्रभावः।
चकार भर्त्तारमतित्वरेण
रणाय वीरः प्रतिपन्नबुद्धिः॥ १५॥
ततस्तैः स्वगणैरिष्टैरिन्द्रजित्प्रतिपूजितः।
युद्धोद्धतकृतोत्साहः संग्रामं सम्प्रपद्यत॥ १६॥
श्रीमान् पद्मविशालाक्षो राक्षसाधिपतेः सुतः।

अथ राज्ञः क्षत्रियस्य च कृत्यमाह,—नानेति। नानाशास्त्रेषु धर्मार्थनीत्यादिशास्त्रेषु संग्रामे च वैशारद्यं सम्पाद्यमिति शेषः। यस्य रणे विजयः काम्यो भवति। तेनोक्तं नानाशास्त्रमवश्यं बोद्धव्यमेवेत्यर्थः। यद्वा परस्य नानाशास्त्रेषु यद्वैशारद्यमस्ति तद्योद्धा अवश्यमेव बोद्धव्यम्। बुद्ध्वापि रणे स्वस्य विजयः प्रार्थ्य एव। अहं जेष्याम्येवेति बुद्ध्वा युद्धमारभ्यमेव न तु तादृशशत्रोरपि निवर्त्तितव्यमित्यर्थः। केचित्तु नानाशास्त्रैरिति योद्धव्यमिति च पठित्वा नानाशास्त्रकरणकसंग्रामे वैशारद्ये सामर्थ्ये तवास्ति अतस्त्वयाऽवश्यं योद्धव्यमेव रणे जयश्च प्रार्थनीय एवेति व्याचक्षते॥ १४॥

दक्षसुताः देवाः। प्रदक्षिणं चकार। भर्त्तारं राजानं रावणं रणाय अतित्वरेणातित्वरया गन्तुं कृतबुद्धिः॥ १५॥

स्वगणैः अन्यैः सभाज्यैः राक्षसैर्युद्धे उद्धतश्चासौ कृतोत्साहश्च सम्प्रपद्यत सम्प्रापद्यत॥ १६॥

निर्जगाम महातेजाः समुद्र इव पर्वणि ॥ १७ ॥

स पक्षिराजोपमतुल्यवेगै-

र्व्यालैश्चतुर्भिः स तु तीक्ष्णदंष्ट्रैः ।

रथं समायुक्तमसह्यवेगः

समारुरोहेन्द्रजिदिन्द्रकल्पः ॥ १८ ॥

स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः ।

रथेनाभिययौ क्षिप्रं हनूमान् यत्र सोऽभवत् ॥ १९ ॥

स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च ।

निशम्य हरिवीरोऽसौ सम्प्रहृष्टतरोऽभवत् ॥ २० ॥

इन्द्रजिच्चापमादाय शितशल्यांश्च सायकान् ।

हनूमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ २१ ॥

तस्मिंस्ततः संयति जातहर्षे

रणाय निर्गच्छति बाणपाणौ ।

दिशश्च सर्वाः कलुषा बभूवु-

र्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २२ ॥

पर्वणीति वर्द्धमान इति शेषः ॥ १७ ॥

पक्षिराजोपमैरन्योऽन्यतुल्यवेगैश्च। व्यालैः सपैः ॥ १८ ॥ १९ ॥ २० ॥

शितशल्यान् तीक्ष्णाग्रान् ॥ २१ ॥

संयति तद्विषये जातहर्षे दिशश्चेत्युत्पातवर्णनं रौद्रा मृगाः क्रोष्टु-

प्रभृतयः ॥ २२ ॥

समागतास्तत्र तु नागयक्षा
महर्षयश्चक्रचराश्च सिद्धाः ।
नभः समावृत्य च पक्षिसङ्घा
विनेदुरुच्चैः परमप्रहृष्टाः ॥ २३ ॥

आयान्तं स रथं दृष्ट्वा तूर्णमिन्द्रध्वजं कपिः ।
ननाद च महानादं व्यवर्द्धत च वेगवान् ॥ २४ ॥

इन्द्रजित् स रथं दिव्यमाश्रितश्चित्रकार्मुकः ।
धनुर्विस्फारयामास तडिदूर्जितनिःस्वनम् ॥ २५ ॥

ततः समेतावतितीक्ष्णवेगौ
महाबलौ तौ रणनिर्विशङ्कौ ।
कपिश्च रक्षोऽधिपतेस्तनूजः
सुरासुरेन्द्राविव बद्धवैरौ ॥ २६ ॥

स तस्य वीरस्य महारथस्य
धनुष्मतः संयति सम्मतस्य ।
शरप्रवेगं व्यहनत् प्रवृद्ध-
श्चचार मार्गे पितुरप्रमेयः ॥ २७ ॥

चक्रचरायक्षाः परमप्रहृष्टा विनेदुरिति शुभनिमित्तम् ॥ २३ ॥
इन्द्रध्वजं इन्द्राकारचिह्नवत् ध्वजम् ॥ २४ ॥
तडिदूर्जितनिःस्वनं तडिदिभमूर्जितस्वनञ्च ॥ २५ ॥ २६ ॥
व्यहनत् वञ्चितवान् ॥ २७ ॥

ततः शरानायततीक्ष्णशल्यान्
सुपत्रिणः काञ्चनचित्रपुङ्खान्।
मुमोच वीरः परवीरहन्ता
सुसन्नतान् वज्रसमानवेगान् ॥ २८ ॥

ततः स तत्स्यन्दननिःस्वनञ्च
मृदङ्गभेरीपटहस्वनञ्च।
विकृष्यमाणस्य च कार्मुकस्य
निशम्य घोषं पुनरुत्पपात ॥ २९ ॥

शराणामन्तरेष्वाशु व्यावर्त्तत महाकपिः।
हरिस्तस्याभिलक्ष्यस्य मोक्षयन् लक्ष्यसंग्रहम् ॥ ३० ॥

शराणामग्रतस्तस्य पुनः समभिवर्त्तत।
प्रसार्य्य हस्तौ हनुमानुत्पपातानिलात्मजः ॥ ३१ ॥

तावुभौ वेगसम्पन्नौ रणकर्मविशारदौ।
सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ ३२ ॥

सुपत्रिणः कङ्कादिपक्षयुक्तान् सुसन्नतान्। अविरतान् ॥ २८ ॥ २९ ॥

अभिलक्ष्यस्य अभिमतलक्ष्यस्य। लक्ष्यसंग्रहं लक्ष्यत्वेन संग्रहणं मोक्षयन् मोघीकुर्वन् व्यर्थीकुर्वन्निति यावत्। शराणामन्तरेषु व्यावर्त्तत परिवर्त्तते स्म इत्यर्थः ॥ ३० ॥

अभिवर्त्तत अभ्यवर्त्तत ततः शरमोक्षसमये पुनरुत्पपात ॥ ३१ ॥ ३२ ॥

हनूमतो वेद न राक्षसोऽन्तरं
न मारुतिस्तस्य महात्मनोऽन्तरम् ।
परस्परं निर्विषहौ बभूवतुः
समेत्य तौ देवसमानविक्रमौ ॥ ३३ ॥

ततस्तु लक्ष्ये स विहन्यमाने
शरेष्वमोघेषु च सम्पतत्सु ।
जगाम चिन्तां महतीं महात्मा
समाधिसंयोगसमाहितात्मा ॥ ३४ ॥

ततो मतिं राक्षसराजसूनु-
श्चकार तस्मिन् हरिवीरमुख्ये ।
अवध्यतां तस्य कपेः समीक्ष्य
कथं निगच्छेदिति निग्रहार्थम् ॥ ३५ ॥

ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः ।
सन्दधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३६ ॥

निर्विषहौ दुःसहवेगौ ॥ ३३ ॥

अमोघेषु शरेषु सम्पतत्स्वपि लक्ष्ये लक्ष्यभूते हनूमति विहन्यमाने शरेभ्यः स्वयमेवमुच्यमाने शरैरभिद्यमाने सतीत्यर्थः । हन्तेर्गत्यर्थात् कर्मकर्तरि शानच् । समाधिसंयोगेन ध्यानकारणेन तत्स्वरूपज्ञानाय समाहितात्मा एकाग्रचित्तः ॥ ३४ ॥

ततो ध्यानानन्तरम् । अवध्यायमिति ध्यानेन ज्ञात्वा । निग्रहार्थं

अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित्।
निजग्राह महाबाहुं मारुतात्मजमिन्द्रजित् ॥ ३७ ॥
तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः।
अभवन्निर्विचेष्टश्च पपात च महीतले ॥ ३८ ॥
ततोऽथ बुद्ध्वा स तदास्त्रबन्धं
प्रभोः प्रभावाद्विगताल्पवेगः।
पितामहानुग्रहमात्मनश्च
विचिन्तयामास हरिप्रवीरः ॥ ३९ ॥
ततः स्वायम्भुवैर्मन्त्रैर्ब्रह्मास्त्रस्याभिमन्त्रितम्।
हनुमांश्चिन्तयामास वरदानं पितामहात् ॥ ४० ॥

बन्धनार्थं बन्धनमुद्दिश्य कथं निगच्छेत् कथं निश्चेष्टो भवेदिति मतिं विचारं चकार ॥ ३५ ॥ ३६ ॥

ब्रह्मास्त्रेणाप्यवध्यतां ज्ञात्वा तदस्त्रेण तं निजग्राह बबन्ध ॥ ३७ ॥ ३८ ॥

स हनुमान् तस्य तदस्त्रबन्धं ब्रह्मास्त्रबन्धं सन्तं बुद्ध्वापि प्रभोर्ब्रह्मणः प्रभावाद्वरदानाद्विगताल्पवेगः विगतः अप्राप्तः अल्पोऽपि वेगः पीड़ा येन तादृशः अभीतचित्त इति यावत् आत्मनः पितामहानुग्रहं मुहूर्त्तमात्रेण मदस्त्रनिरोधमुक्तिरित्येवं रूपम् ॥ ३९ ॥

उक्तमेवार्थं स्पष्टयति तत इति। स्वायम्भुवैः स्वयम्भूदैवत्यैरनेकविधैर्मन्त्रैरभिमन्त्रितं तत् सिद्धं भवति तादृशं ब्रह्मास्त्रं तत्कृतनिरोधं बुद्ध्वा पितामहात्तत्कं वररूपं दानं प्राग्दत्तरूपं चिन्तयामास ॥ ४० ॥

न मेऽस्य बन्धस्य च शक्तिरस्ति
विमोक्षणे लोकगुरोः प्रभावात् ।
इत्येवमेवं विहितोऽस्त्रबन्धो
मयात्मयोनेरनुवर्त्तितव्यः ॥ ४१ ॥
स वीर्य्यमस्त्रस्य कपिर्विचार्य्य
पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं परिचिन्तयित्वा
पितामहाज्ञामनुवर्त्तते स्म ॥ ४२ ॥

अस्त्रेणापि हि बद्धस्य भयं मम न जायते ।
पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥ ४३ ॥
ग्रहणे चापि रक्षोभिर्महन् मे गुणदर्शनम् ।
राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥ ४४ ॥

लोकगुरोः प्रभावान्मे हनूमतोऽस्यास्त्रबन्धस्य विमोक्षणे शक्तिर्नास्तीत्येवं ध्यानेन ज्ञात्वा एवमनुभूयमानप्रकारेण ममानेन विहित आत्मयोनेरस्त्रबन्धो मयानुवर्त्तितव्य एव मुहूर्त्तमात्रं सोढ़व्य एव ॥ ४१ ॥

विमोक्षशक्तिं मुहूर्त्तानन्तरभाविनीं तां चिन्तयित्वा मुहूर्त्तमात्रं पितामहाज्ञामनुवर्त्तते स्म ॥ ४२ ॥

भयं न जायते तत्र हेतुः । पितामहेत्यादि । आदित्यग्रासप्रवृत्तिसमये एव ब्रह्मानुग्रहः प्रागुक्तः ॥ ४३ ॥

मे महद्गुणदर्शनमस्तीति शेषः । राक्षसेन्द्रेण संवाद इति ॥ ४४ ॥

स निश्चितार्थः परवीरहन्ता
समीक्ष्यकारी विनिवृत्तचेष्टः ।
परैः प्रसह्याभिगतैर्निगृह्य
ननाद तैस्तैः परिभर्त्स्यमानः ॥ ४५ ॥

ततस्ते राक्षसा दृष्ट्वा विनिश्चेष्टमरिन्दमम् ।
बबन्धुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥ ४६ ॥

स रोचयामास परैश्च बन्धं
प्रसह्य वीरैरभिगर्हणञ्च ।
कौतूहलान् मां यदि राक्षसेन्द्रो
द्रष्टुं व्यवस्येदिति निश्चितार्थः ॥ ४७ ॥

स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्य्यवान् ।
अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्त्तते ॥ ४८ ॥

निश्चितार्थः उत्तरीत्येति भावः । समीक्ष्यकारी विचारपूर्वकं कार्य्यकर्त्ता । अभिगतैरभिद्रुत्यागतैः परैः प्रसह्य बलाद्गृहीत्वा परिभर्त्स्यमानः सन्ननाद पीड़ित इवेति भावः ॥ ४५ ॥

शणवल्कैः तज्जन्यरज्जुभिः संहितैरज्जुरूपेण कृतैर्द्रुमचीरैः द्रुमवल्कलैः ॥ ४६ ॥

कौतूहलान् मां द्रष्टुं व्यवस्येदिति निश्चितार्थः निश्चितकार्य्यतत्त्वः सन् स्वस्य तत्सम्भाषणापेक्षितत्वात् बन्धादिकं रोचयामास ॥ ४७ ॥

अस्त्रबन्धमोक्षोऽपि तदैवाजायत इत्याह,—स इति । वल्केन

अथेन्द्रजित्तं द्रुमचीरबद्धं
विचार्य्य वीरः कपिसत्तमन्तम् ।
विमुक्तमस्त्रेण जगाम चिन्ता-
मन्येन बद्धोऽप्यनुवर्त्ततेऽस्त्रम् ॥ ४९ ॥

अहो महत्कर्म कृतं निरर्थं
न राक्षसैर्मन्त्रगतिर्विमृष्टा ।
पुनश्च नास्त्रे विहतेऽस्त्रमन्यत्
प्रवर्त्तते संशयिताः स्म सर्वे ॥ ५० ॥

तज्जन्यरज्ज्वैव बद्धः अस्त्रेण तु विमुक्तः कुतस्तत्राह,—अस्त्रबन्धो मन्त्रबन्धोऽन्यं बन्धं नानुवर्त्तते इतरबन्धेन सह न तिष्ठति तस्मिन् सति मन्त्रबन्धो नश्यतीत्यर्थः ॥ ४८ ॥

इममर्थमिन्द्रजिदपि ज्ञातवानित्याह,—अथेति । अस्त्रेण विमुक्तं विचार्य्य ज्ञात्वा अन्येन बद्धोऽपि हनुमानस्त्रमनुवर्त्तते अस्त्रेण बद्ध इव वर्त्तत इत्यपि विचार्य्य चिन्तां जगामेति सम्बन्धः । नान्येन बन्धे ह्यनुवर्त्ततेऽस्त्रमिति पाठे चिन्तास्वरूपमिदं राक्षसैः स्वकृतबन्धनवशात् खेदं जगामेत्यर्थः ॥ ४९ ॥

चिन्तामाह,—अहो इति । पाठान्तरे चिन्ताकारमिदं मया कृतं महत्कर्म निरर्थं कृतं राक्षसैर्यतस्तैर्मन्त्रगतिर्न विमृष्टा न विचारिता । अन्यबन्धे मन्त्रबन्धो नश्यतीति न ज्ञातमित्यर्थः । पुनरस्त्रं तदेव प्रयोक्तुं तत्राह,—अस्त्रे ब्राह्मे विहते पुनरन्यदस्त्रं तदस्त्रप्रयोगान्तरं

अस्त्रेण हनुमान् मुक्तो नात्मानमवबुध्यते।
कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीड़ितः॥ ५१ ॥
हन्यमानस्ततः क्रूरै राक्षसैः कालमुष्टिभिः।
समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः॥ ५२ ॥

अथेन्द्रजित्तं प्रसमीक्ष्य मुक्त-
मस्त्रेण बद्धं द्रुमचीरसूत्रैः।
व्यदर्शयत्तत्र महाबलं तं
हरिप्रवीरं सगणाय राज्ञे॥ ५३ ॥

तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम्।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन्॥ ५४ ॥
कोऽयं कस्य कुतो वापि किं कार्य्यं कोऽभ्युपाश्रयः।
इति राक्षसवीराणां दृष्ट्वा सञ्जज्ञिरे कथाः॥ ५५ ॥

न प्रवर्त्ततेऽतः सर्वे वयं संशयिताः संशयितजया एव मुक्तोऽयं सर्वानपि हन्यादिति भावः॥ ५० ॥

अस्त्रविमोक्षं राक्षसमोक्षवदपरोक्षतया ज्ञातवानपि हनूमान् तथा ज्ञापयतीत्याह,—अस्त्रेणेति। अवबुध्यते अन्तर्भावितण्यर्थतया नाव-बोधयति स्म अस्त्रमोक्षं न प्रकाशयति स्मेत्यर्थः तैर्बन्धैर्वाल्किकबन्धैः अतएव कृष्यमाणत्वादिगुणकः राक्षसेन्द्रसमीपं प्राकृष्यत॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥

हन्यतां दह्यतां वापि भक्ष्यतामिति चापरे ।
राक्षसास्तत्र संक्रुद्धाः परस्परमथाब्रुवन् ॥ ५६ ॥

अतीत्य मार्गं सहसा महात्मा
स तत्र रक्षोऽधिपपादमूले ।
ददर्श राज्ञः परिचारवृद्धान्
गृहं महारत्नविभूषितञ्च ॥ ५७ ॥

स ददर्श महातेजा रावणः कपिसत्तमम् ।
रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥ ५८ ॥
राक्षसाधिपतिञ्चापि ददर्श कपिसत्तमः ।
तेजोबलसमायुक्तं तपन्तमिव भास्करम् ॥ ५९ ॥

सरोषसंवर्त्तिततास्रदृष्टि-
र्दशाननस्तं कपिमन्ववेक्ष्य ।
अथोपविष्टान् कुलशीलवृद्धान्
समादिशत्तं प्रति मुख्यमन्त्रीन् ॥ ६० ॥

कस्य सुत इति शेषः । कोऽभ्युपाश्रयः कस्याश्रयेणैवं निर्भय इत्यर्थः ॥ ५५ ॥

अथ रावणस्थितस्थलगत्या राक्षसाः एवमब्रुवन्नित्यर्थः ॥ ५६ ॥

परिचारवृद्धान् वृद्धान् परिचारकानित्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥

वक्ष्यमाणसंक्षेपोऽयमिति । मन्त्रीन् मन्त्रिण इत्यर्थः ॥ ६० ॥

यथाक्रमं तैः स कपिश्च पृष्टः
कार्य्यार्थमर्थस्य च मूलमादौ।
निवेदयामास हरीश्वरस्य
दूतः सकाशादहमागतोऽस्मि ॥ ६१ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

कार्य्यार्थं कर्त्तव्यमर्थस्तत्प्रयोजनञ्च समाहारद्वन्द्वः। अर्थस्य मूल-मुक्तप्रयोजनप्रवर्त्तकम्। उत्तरार्धस्यस्तु दूतं कृत्यं प्रेरकः सुग्रीव इति ॥ ६१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः ।
हनूमान् क्रोधताम्राक्षो रक्षोऽधिपमवैक्षत ॥ १ ॥
भ्राजमानं महार्हेण काञ्चनेन विराजता ।
मुक्ताजालवृतेनाथ मुकुटेन महाद्युतिम् ॥ २ ॥
वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ।
हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३ ॥
महार्हक्षौमसंवीतं रक्तचन्दनरूषितम् ।
स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥ ४ ॥
विचित्रं दर्शनीयैश्च रक्ताक्षैर्भीमदर्शनैः ।
दीप्ततीक्ष्णमहादंष्ट्रं प्रलम्बं दशनच्छदैः ॥ ५ ॥

तस्य इन्द्रजितः यत्तु रावणस्येति तन्न । तेन हनूमति कस्याऽपि कर्मणोऽकृतत्वादिति कतकः । मुखद्वारालम्बनकर्मणेत्यर्थः ॥ १ ॥ २ ॥

वज्रसंयोगेन सत् घट्टनेन संयुक्तैर्घटितैर्महार्हमणिविग्रहैः बहुमूल्यमणिप्रधानस्वरूपैः ॥ ३ ॥

भक्तिभिः पत्रवल्लिपुष्पवत् रचनाविशेषैः ॥ ४ ॥

विचित्रमाश्चर्यभूतैर्दशनच्छदैः प्रलम्बं लम्बदशनच्छदवन्तम् ॥ ५ ॥

शिरोभिर्दशभिर्वीरो भ्राजमानं महौजसम्।
नानाव्यालसमाकीर्णैः शिखरैरिव मन्दरम् ॥ ६ ॥
नीलाञ्जनचयप्रख्यं हारेणोरसि राजता।
पूर्णचन्द्राभवक्त्रेण सबालार्कमिवाम्बुदम् ॥ ७ ॥
बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः।
भ्राजमानाङ्गदैर्भीमैः पञ्चशीर्षैरिवोरगैः ॥ ८ ॥
महती स्फाटिके चित्रे रत्नसंयोगचित्रिते।
उत्तमास्तरणास्तीर्णेषूपविष्टं वरासने ॥ ९ ॥
अलङ्कृताभिरत्यर्थं प्रमदाभिः समन्ततः।
वालव्यजनहस्ताभिरारात्समुपसेवितम् ॥ १० ॥
दुर्द्धरेण प्रहस्तेन महापार्श्वेन रक्षसा।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥ ११ ॥
उपोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितम्।
कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥ १२ ॥

शिरोभिर्दशभिरिति। हनूमतोदर्शनकाले रक्षो इव भीषणरूप-करणादिति बोद्धव्यम् ॥ ६ ॥

हारेणोपलक्षितम् ॥ ७ ॥

केयूराङ्गदयोरवान्तरविशेष ऊह्यः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

चतुर्भिः सागरैः परिवृतं तं कृत्स्नं लोकं भूमण्डलमिदं-त्यर्थः ॥ १२ ॥

मन्त्रिभिर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभदर्शिभिः ।
आश्वास्यमानं सचिवैः सुरैरिव सुरेश्वरम् ॥ १३ ॥
अपश्यद्राक्षसपतिं हनूमानतितेजसम् ।
वेष्टितं मेरुशिखरे सतोयमिव तोयदम् ॥ १४ ॥
स तैः सम्पीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ।
विस्मयं परमं गत्वा रक्षोऽधिपमवैक्षत ॥ १५ ॥
भ्राजमानं ततो दृष्ट्वा हनूमान् राक्षसेश्वरम् ।
मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १६ ॥
अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७ ॥
यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १८ ॥

मन्त्रो बुद्धिसहायः सचिवः कार्य्यसहायः ॥ १३ ॥ १४ ॥

रक्षोऽधिपमवैक्षत न तु रक्षःकृतपीड़ामित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥

सर्वसम्पत्तिमतोऽप्यधर्मवतो महान् दोष इत्याह,—यदीति । बलवानेवंविधसमृद्धेरप्युन्मूलनक्षमोऽधर्मो यद्यस्मिन्न स्यात्तदायं राक्षसेश्वरः शक्रस्य सुरलोकस्यापि विष्णुवद्रक्षिता स्यात् । यद्यऽधर्म इत्यत्र आद्यजन्तम् । अयं बलवान् राक्षसेश्वरो यद्यधर्मवान्न स्यात्तदा शक्रस्येत्यादिप्राग्वत् । अधर्मवत्त्वात्तु स्वप्रजानामपि नाशक एवेति भावः ॥ १८ ॥

अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः ।
सर्वे बिभ्यति खल्वस्माल्लोकाः सामरदानवाः ॥ १९ ॥
अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् ।
इति चिन्तां बहुविधामकरोन्मतिमान् कपिः ।
दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकोनपञ्चाशः सर्गः ॥ ४९ ॥

के न बिभ्यतीति पाठे के न इति पदच्छेदः ॥ १९ ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ।

तमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतः स्थितम् ।
रोषेण महताविष्टो रावणो लोकरावणः ॥ १ ॥
शङ्काहतात्मा दध्यौ स कपीन्द्रं तेजसावृतम् ।
किमेष भगवान्नन्दी भवेत्साक्षादिहागतः ॥ २ ॥
येन शप्तोऽस्मि कैलासे मया प्रहसिते पुरा ।
सोऽयं वानरमूर्त्तिः स्यात् किं स्विद्बाणोऽपि वासुरः ॥ ३ ॥
स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् ।
कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४ ॥
दुरात्मा पृच्छ्यतामेष कुतः किं वास्य कारणम् ।
वनभङ्गे च कोऽस्यार्थो राक्षसानाञ्च तर्जने ॥ ५ ॥

आविष्टः आसीदिति शेषः ॥ १ ॥

तेजसा वृतं दध्याविति शेषः । शङ्काहतात्मेत्युक्तां शङ्कामेवाह,— नन्दी वानरमुख एव प्रमथगणाधिपः ॥ २ ॥

शप्तः मन्मुखसदृशमुखैः तव नाशो भविष्यतीति शापः । बलिसुतो बाणो वा महेश्वरभक्तत्वान्नन्दिना प्रेषित इति शङ्का ॥ ३ ॥

कालयुक्तं कालोचितम् ॥ ४ ॥

मत्पुरीमप्रधृष्यां वै गमने किं प्रयोजनम्।
आयोधने वा किं कार्य्यं पृच्छ्यतामेष दुर्मतिः॥ ६॥
रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत्।
समाश्वसिहि भद्रन्ते न भीः कार्य्या त्वया कपे!॥ ७॥
यदि तावत्त्वमिन्द्रेण प्रेषितो रावणालयम्।
तत्त्वमाख्याहि मा ते भूद्भयं वानर! मोच्यसे॥ ८॥
यदि वैश्रवणस्य त्वं यमस्य वरुणस्य च।
चाररूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम्॥ ९॥
विष्णुना प्रेषितो वापि दूतो विजयकाङ्क्षिणा।
न हि ते वानरं तेजो रूपमात्रन्तु वानरम्॥ १०॥
तत्त्वतः कथयस्वाद्य ततो वानर! मोच्यसे।
अनृतं वदतश्चापि दुर्लभं तव जीवितम्॥ ११॥

कुत आगत इति शेषः। किं वा कारणं को वास्य प्रेषक इत्यर्थः॥ ५॥

मत्पुरीमुद्दिश्येति शेषः। आयोधने किङ्करादिभिर्युद्धे। यद्वा मत्पुरीगमने मत्पुरीप्राप्ताविति शेषः। आर्षः षष्ठ्यभावः॥ ६॥ ७॥

मोच्यसे बन्धनादिति शेषः॥ ८॥

चाररूपं चाराणां प्रच्छन्नवेषत्वाच्छद्मकृतवानररूपम्॥ ९॥

कुत एवं चिन्ता तत्राह,—नहीति। वानरमितीदमर्थानुसारेणोक्तम्॥ १०॥ ११॥

अथवा यन्निमित्तस्ते प्रवेशो रावणालये ।
एवमुक्तो हरिवरस्तदा रक्षोगणेश्वरम् ॥ १२ ॥
अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य च ।
धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ॥ १३ ॥
जातिरेव मम त्वेषा वानरोऽहमिहागतः ।
दर्शने राक्षसेन्द्रस्य तदिदं दुर्लभं मया ॥ १४ ॥
वनं राक्षसराजस्य दर्शनार्थे विनाशितम् ।
ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ॥ १५ ॥

अथवेति । अथ वेत्यर्थः । यन्निमित्तः यत्प्रयोजनः तत्कथयस्वेति सम्बन्धः । एवमुक्तः प्रहस्तेनेति शेषः । रक्षोगणेश्वरं प्रहस्तमन्तर्वीकृत्य रावणमेव तथा कृत्वाब्रवीदित्युत्तरेणान्वयः ॥ १२ ॥

वरुणस्य वा दूत इति शेषः । धनदेन विष्णुना च न मे सख्यमतस्ताभ्यां चोदितो नास्मि ॥ १३ ॥

एषा वानरजातिर्मम जातिरेव जन्मकृतैव । अतो वानर एवाहमिहागतः वानरस्यात्रागमने किं प्रयोजनं तत्राह,—दर्शन इति । राक्षसेन्द्रस्य तव दर्शने दर्शननिमित्तमिहागत इत्यर्थः । तदिदं तव दर्शनं दुर्लभं प्रकारान्तरेणाशक्यलाभमिति ज्ञात्वा तव दर्शनार्थे वनं विनाशितम् अयं दर्शनोपायो भवत्वित्याह,—ततः वनभङ्गाद्धेतोरित्यर्थः ॥ १४ ॥ १५ ॥

रक्षणार्थञ्च देहस्य प्रतियुद्धा मया रणे।
अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि॥ १६॥
पितामहादेष वरो ममापि हि समागतः।
राजानं द्रष्टुकामेन मयास्त्रमनुवर्त्तितम्॥ १७॥
विमुक्तोऽप्यहमस्त्रेण राक्षसैस्त्वभिवेदितः।
केनचिद्रामकार्य्येण आगतोऽस्मि तवान्तिकम्॥ १८॥
दूतोऽहमिति विज्ञाय राघवस्यामितौजसः।

इदानीं युद्धप्रयोजनमाह,—रक्षणार्थमिति। प्रतियुद्धाः मया प्रतिभटतया स्थित्वा कृतयुद्धाः नन्वेवं भाविबन्धावपर्य्यालोच्य कथं युद्धं कृतं तत्राह।स्त्रेति। अस्त्रैर्ब्रह्मास्त्रान्तैः पाशैर्यमपाशान्तैः। एवञ्चेतरपाशकथापि दूरापास्तेत्युक्तं देवासुरैर्मिलितैरपीत्यर्थः॥ १६॥

कुतस्तवैवं बलं तत्राह,—पितामहादिति। तदनुग्रहादित्यर्थः। ममापि न तु केवलं तवैवेत्यर्थः। एष वर इति। बलविशेषरूप इत्यर्थः। तर्हि कथं बन्धनमुपगतं तत्राह,—राजानमिति। अस्त्रं ब्रह्मास्त्रम् अनुवर्त्तितं निवृत्तमप्यनुवर्त्तितमिव॥ १७॥

तदेवाह,—विमुक्त इति। विमुक्तोऽपि साक्ष इव। अभिवेदितः आनीय तव ज्ञापितः एवं पीड़ामनुभूय मम दर्शने किं प्रयोजनं तत्राह,—केनचिदिति। रामकार्य्येणेति पाठः प्राक्षः॥ १८॥

रामस्य तव च कः सम्बन्धस्तत्राह,—दूत इति। ननु रामदूते-

श्रूयतामेव वचनं मम पथ्यमिदं प्रभो ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
पञ्चाशः सर्गः ॥ ५० ॥

नापि सीतान्वेषणमेव कार्य्यम्। एवम्प्रयासेन मद्दर्शने किं फलं तत्राह,—श्रूयतामिति। वचनं सन्देशवचनम्। तत्कथनार्थमयं प्रयास इति ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ।

तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिसत्तमः ।
वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १ ॥
अहं सुग्रीवसन्देशादिह प्राप्तस्तवान्तिके ।
राक्षसेश हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ २ ॥
भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थसहितं वाक्यमिह चामुत्र च क्षमम् ॥ ३ ॥
राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥ ४ ॥
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियतरः प्रभुः ।
पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकाननम् ॥ ५ ॥

अथ सुग्रीवसन्देशकथनव्याजेन सामदण्डान्यतरविषयत्वनिश्चयाय न्यायानुसारी न वेति जिज्ञासति । तमित्यादि ॥ १ ॥

भ्राता हरीश इति स्नेहप्रकाशिका लोकोक्तिः । कुशलमब्रवीत् प्राक्षीदित्यर्थः ॥ २ ॥

क्षमं सुखसम्पादकम् ॥ ३ ॥

लक्ष्मणेन सह भ्रात्रा सीतया सह भार्य्यया ।
रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥ ६ ॥
तस्य भार्य्या जनस्थाने भ्रष्टा सीतेति विश्रुता ।
वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७ ॥
मार्गमाणस्तु तां देवीं राजपुत्रः सहानुजः ।
ऋष्यमूकमनुप्राप्तः सुग्रीवेण च सङ्गतः ॥ ८ ॥
तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ।
सुग्रीवस्यापि रामेण हरिराज्यं निवेदितुम् ॥ ९ ॥
ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् ।
सुग्रीवः स्थापितो राज्ये हर्य्यृक्षाणां गणेश्वरः ॥ १० ॥
त्वया विज्ञातपूर्वश्च वाली वानरपुङ्गवः ।
स तेन निहतः संख्ये शरेणैकेन वानरः ॥ ११ ॥

अयं सन्देशं वक्तुमुपोद्घातो राजेति पितेव बन्धुः रक्षक इत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥

भ्रष्टा मृताऽपहृतावेति विभ्रंश्य न ज्ञातमित्यर्थः ॥ ७ ॥

तां मार्गमाणः स रामः ऋष्यमूकं प्राप्तः सुग्रीवेण च सङ्गतश्च । अनेनैव ज्ञायते नेदं सुग्रीवसन्देशवाक्यं तदा हि मया चैव सुसङ्गत इत्येव वदेत् ॥ ८ ॥

निवेदितुं प्रतिज्ञातमित्यनुकर्षः ॥ ९ ॥ १० ॥

स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसङ्गरः ।
हरीन् संप्रेषयामास दिशः सर्वा हरीश्वरः ॥ १२ ॥
तां हरीणां सहस्राणि शतानि नियुतानि च ।
दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥ १३ ॥
वैनतेयसमाः केचित् केचित्तत्रानिलोपमाः ।
असङ्गगतयः शीघ्रा हरिवीरा महाबलाः ॥ १४ ॥
अहन्तु हनुमान्नाम मारुतस्यौरसः सुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ १५ ॥
समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः ।
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ १६ ॥
तद्भवान् दृष्टधर्मार्थस्तपःकृतपरिग्रहः ।
परदारान् महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १७ ॥

त्वया विज्ञातपूर्वो वालीति रावणं प्रति ममोक्तिः । तेन रामबलातिशयबोधनम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

त्वां दिदृक्षुरिहागत इति पाठः । त्वां सुग्रीवभ्रातरं रावणम् । तस्मिन् दृष्टे सर्वलोकदृष्टान्तत्वः स सीतागतिं वक्ष्यतीति सुग्रीवेच्छा । तत्त्वात्त्वां दिदृक्षुरिहागतः दैवात् मक्कूपरि गङ्गापातवत्तव गृहे भ्रमता मया जानकी दृष्टा ॥ १६ ॥

अतःपरं यद्वक्तव्यं मित्रपक्षस्य तद्वदामीत्याह,—तद्भवानिति । दृष्टधर्मार्थः धर्मार्थतत्त्वसाक्षात्कारवान् तपःकृतपरिग्रहः तपोबल-

न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १८ ॥
कश्च लक्ष्मणमुक्तानां रामकोपानुवर्त्तिनाम् ।
शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १९ ॥
न चापि त्रिषु लोकेषु राजन् विद्येत कश्चन ।
राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ २० ॥
तत्त्रिकालहितं वाक्यं धर्म्ममर्थानुयायि च ।
मन्यस्व नरशार्दूल जानकी प्रतिदीयताम् ॥ २१ ॥

जातधनधान्यादिपरिग्रहः यत एतादृशस्त्वमतः परदारानुपरोद्धुं नार्हसि। दृष्टधर्मार्थतत्त्वत्वादेव महाप्राज्ञत्वम् ॥ १७ ॥

नन्वनेन मम का हानिस्तत्राह,—नहीति। धर्मविरुद्धत्वादेव बह्वपायेषु बह्वनर्थकारणेषु। ननु सर्वापायप्रतीकारसमर्थस्य किमनया विभीषिकयेत्यत आह,—मूलघातिषु समूलं नष्टस्य कथं प्रतीकारसामर्थ्यमिति भावः ॥ १८ ॥

मूलघातित्वमेव प्रपञ्चयति। कश्चेति ॥ १९ ॥

विद्येत विद्यते व्यलीकमपराधम् ॥ २० ॥

तस्मात्त्रिकालहितं सीतादानेन पूर्वापराधनाशात्। वर्त्तमानेऽर्थाविरोधात्। भाविसुखहेतुत्वाच्च त्रिकालहितत्वम्। अर्थानुयायिनीति शास्त्रानुगतं वाक्यं मयोच्यमानम्। नरशार्दूलेति पाङ्क्तः पाठः इति कतकः। पुरुषश्रेष्ठ इत्यर्थः। तदेव वाक्यमाह,—जानकी प्रतिदीयतामिति ॥ २१ ॥

दृष्टा ह्रीयं मया देवी लब्धं यदिह दुर्लभम्।
उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः॥ २२॥
लक्षितेयं मया सीता तथा शोकपरायणा।
गृहे यां नाभिजानासि पञ्चास्यामिव पन्नगीम्॥ २३॥
नेयं जरयितुं शक्या सासुरैरमरैरपि।
विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा॥ २४॥
तपःसन्तापलब्धस्ते सोऽयं धर्मपरिग्रहः।
न स नाशयितुं न्याय्य आत्मप्राणपरिग्रहः॥ २५॥

अथ सीता नास्तीत्यपह्नवस्त्वशक्य इत्याह,—दृष्टा हीति। यतस्त्वद्गृहे मया दृष्टाऽतोऽपलापोऽशक्य इति भावः। किञ्च यद्यमर-कोटिभिरपि दुर्लभं सीतादर्शनं तन्मया लब्धम् अतः शेषं शिष्टं यदु-त्तरं कर्म सीतानयनरूपं तत्र तत्साधने राघवः स एव निमित्तं कारणं मत्कृत्यन्तु अन्विष्य निवेदनमात्रमिति भावः॥ २२॥

पुनः रावणहितमाह,—पन्नगीमिव स्वनाशकां यां न जानासि सा मया शोकपरायणा लक्षिता। तदीयशोकाग्निनैव पन्नगी विषाग्नि-नेव त्वन्नगरं दग्धं भविष्यतीति भावः॥ २३॥

ओजसा आहारशक्तिबलेन॥ २४॥

तपःसन्तापेन तपःकरणेन यो लब्धो धर्मपरिग्रहो धर्मसाध्यः परिग्रह ऐश्वर्य्यम् आत्मप्राणपरिग्रहस्य आत्मप्राणानां चिरकालं परिग्रह आयुर्वृद्धिश्च स परदारपरिग्रहरूपपरमाधर्मेण नाशयितुं न न्याय्यः॥ २५॥

अवध्यतां तपोभिर्यां भवान् समनुपश्यति ।
आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २६ ॥
सुग्रीवो न च देवोऽयं न यक्षो न च राक्षसः ।
मानुषो राघवो राजन् ! सुग्रीवश्च हरीश्वरः ।
तस्मात् प्राणपरित्राणं कथं राजन् ! करिष्यसि ॥ २७ ॥
न तु धर्मोपसंहारमधर्मफलसंहितम् ।
तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ॥ २८ ॥

अपि च यां देवाद्यवध्यतां मन्यसे तत्रापि तपोजन्यसुकृतमेव कारणमतो धर्मस्य हानिर्न कार्य्येति वदति । अवध्यतामिति । तत्रापि अयं महानयमेव तपोमयधर्मस्कन्ध एव हेतुरित्यर्थः ॥ २६ ॥

किञ्च देवाद्यवध्यस्यापि प्राणत्राणं दुष्करमित्याह,—सुग्रीव इति । यस्मादवध्यत्ववेलायां त्वयाऽङ्कितदेवादिभ्योऽन्य एवायं रामस्तातस्तस्मात् सुग्रीवात् ते प्राणत्राणे सामर्थ्यं नास्तीति भावः ॥ २७ ॥

ननु तपोबलात् मे सर्वतो जयो भविष्यतीत्यत आह,—न त्विति । यः पुमानधर्मफलसंहितबलवत्तया फलोन्मुखाधर्मसम्बद्धस्तं पुरुषं धर्मोपसंहारमपि धर्मोपसंग्रहवन्तमपि न त्वन्वेति । धर्मफलमिति शेषः । किन्तु तदेव फलं फलोन्मुखाधर्ममेवान्वेति । ननु धर्मबलाद-धर्मनाशो भविष्यतीत्यत आह,—धर्मश्चेति । उत्कटोऽधर्मोत्तरभावी धर्मः अधर्मस्य नाशनः । चादुत्कटाधर्मो धर्मनाशकः । एवं चास्याधर्मस्य त्वत्कृतसकलधर्मापेक्षयोत्कटत्वादुत्तरकालत्वाच्चायमेव त्वया प्राक्सञ्चि-तस्य सकलधर्मस्य नाशक इति भावः । केचित्तु धर्मोपसंहारमधर्म-

प्राप्तं धर्मफलं तावद्भवता नात्र संशयः।
फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ॥ २९ ॥
जनस्थानबधं बुद्ध्वा वालिनश्च बधं तथा।
रामसुग्रीवसख्यञ्च बुध्यस्व हितमात्मनः ॥ ३० ॥
कामं खल्वहमप्येकः सवाजिरथकुञ्जराम्।
लङ्कां नाशयितुं शक्तस्तस्यैष तु न निश्चयः ॥ ३१ ॥

फलसंहितमिति पाठः। धर्मोपसंहारं धर्ममुपसंक्रियतेऽनेनेति धर्मफलं सुखं तदधर्मफलसंहितं न सम्भवति। अधर्मफलेन दुःखेन सहानुभवं न भवति। तत्तस्मादेव फलमन्वेति। धर्मो धर्मफलं सुखमेवान्वेति। एवमधर्मो दुःखं दुःखरूपं फलमेवान्वेति। अपरे धर्मो नाधर्मनाशन इति पाठः। पूर्वकृतो धर्मोऽधर्मस्येदानीं कृतस्य न नाशनस्तादधर्मोऽपि धर्मनाशनो नेत्यर्थ इति वदन्ति। तत्रार्थसामञ्जस्यं सुतयमैर्विभाव्यम्॥२८॥

ननु किं मे धर्मो व्यर्थ एव नेत्याह,—प्राप्तमिति। तावत्प्रथमम्। इतः पूर्वमिति यावत्। अस्य परदारहरणरूपस्य। क्षिप्रमेव प्रपत्स्यसे। अत्युत्कटैः पुण्यपापैरिति न्यायादिति भावः॥ २९॥

अतः स्वहितं चिन्तयेत्याह,—जनस्थानेति। सख्यञ्च बुद्ध्वा आत्मनो हितं बुध्यस्वेत्यन्वयः॥ ३०॥

नन्वेवं कटुवादिनस्तव को रक्षक इति चेत् तत्राह,—काममिति। यथेष्टमित्यर्थः। तर्हि कुतस्तन्नाशं न करोषीत्यत्राह,—तस्य यस्याहं दूतस्तस्य रामस्य एषः मत्कर्तृकलङ्कानाशविषयो निश्चयो न। स्वाम्याज्ञां विना तदनुष्ठानमशक्यमिति भावः॥ ३१॥

रामेण हि प्रतिज्ञातं हर्य्यृक्षगणसन्निधौ ।
उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता ॥ ३२ ॥
अपकुर्वन् हि रामस्य साक्षादपि पुरन्दरः ।
न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ॥ ३३ ॥
यां सीतेत्यभिजानासि येयं तिष्ठति ते गृहे ।
कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ॥ ३४ ॥
तदलं कालपाशेन सीताविग्रहरूपिणा ।
स्वयंस्कन्धावसक्तेन क्षेममात्मनि चिन्त्यताम् ॥ ३५ ॥
सीतायास्तेजसा दग्धां रामकोपप्रदीपिताम् ।
दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम् ॥ ३६ ॥
स्वानि मित्राणि मन्त्रींश्च ज्ञातीन् भ्रातॄन् सुतान् हितान् ।
भोगान् दारांश्च लङ्कांश्च मा विनाशमुपानय ॥ ३७ ॥

तदीयनिश्चयाभावं सूचयति । रामेणेति । स्वामिना स्वकर्त्तव्यत्वेन प्रतिज्ञातस्यार्थस्य सेवकेनानुष्ठानमयुक्तं कर्त्तुमिति भावः ॥ ३२ ॥

उक्तमेवार्थं दार्ढ्याय पुनरप्याह,—अपकुर्वन्निति ॥ ३३ ॥

कालरात्रीमहाप्रलयकर्त्री भगवतः शक्तिः ॥ ३४ ॥

विग्रहः शरीरम् । स्कन्धावसक्तेन स्कन्धसम्बद्धकरपाशेन । आत्मनि आत्मनाशे ॥ ३५ ॥

दह्यमानां वर्त्तमानसमीपे लट् । प्रतोलिका वीथिः ॥ ३६ ॥ ३७ ॥

सत्यं राक्षसराजेन्द्र ! शृणुष्व वचनं मम ।
रामदासस्य दूतस्य वानरस्य विशेषतः ॥ ३८ ॥
सर्वान् लोकान् सुसंहृत्य सभूतान् सचराचरान् ।
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥ ३९ ॥
देवासुरनरेन्द्रेषु यक्षरक्षोरगेषु च ।
विद्याधरेषु नागेषु गन्धर्वेषु मृगेषु च ॥ ४० ॥
सिद्धेषु किन्नरेन्द्रेषु पतत्रिषु च सर्वतः ।
सर्वत्र सर्वभूतेषु सर्वकालेषु नास्ति सः ॥ ४१ ॥
यो रामं प्रतियुध्येत विष्णुतुल्यपराक्रमम् ।
सर्वलोकेश्वरस्येह कृत्वा विप्रियमीदृशम् ।
रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ४२ ॥
देवाश्च दैत्याश्च निशाचरेन्द्र-
गन्धर्वविद्याधरनागयक्षाः ।

विशेषतः निष्कृष्योच्यमानं वचनमित्यर्थः । रामदासस्येत्यादि विशेषणत्रयेण राममहिमवेत्तृत्वं स्वस्य परोक्तवाक्यानुवादपूर्वं हितोपदेशाधिकारं नैरर्थक्योतिरिक्तजात्यन्तरत्वेनापक्षपातितां च्यवस्थापत्वञ्च सूचितम् ॥ ३८ ॥

सभूतान् सर्वजातीयप्राणिसहितान् । अनेन जगत्स्थित्युत्पत्तिसंहारकर्तृत्वं बोधितम् ॥ ३९ ॥ ४० ॥

सर्वत्र देशे ॥ ४१ ॥ ४२ ॥

रामस्य लोकत्रयनायकस्य
स्थातुं न शक्ताः समरेषु सर्वे ॥ ४३ ॥
ब्रह्मा स्वयम्भूश्चतुराननो वा
रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा ।
इन्द्रो महेन्द्रः सुरनायको वा
स्थातुं न शक्ता युधि राघवस्य ॥ ४४ ॥
स सौष्ठवोपेतमदीनवादिनः
कपेर्निशम्याप्रतिमोऽप्रियं वचः ।
दशाननः कोपविवृत्तलोचनः
समादिशत्तस्य वधं महाकपेः ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकपञ्चाशः सर्गः ॥ ५१ ॥

उक्तमेवार्थं दार्ढ्याय पुनराह,—देवाश्चेति ॥ ४३ ॥

रामक्रुद्धा देवताभिरपि न त्राणमित्याह,—ब्रह्मेत्यादि । ब्रह्मा स्वयम्भूरित्यनेन हिरण्यगर्भः सर्वादिरुक्तः । चतुराननस्ततः प्राप्तसृष्ट्यधिकारः । त्रिनेत्रस्त्रिपुरान्तको रुद्रो वेत्यनेन संहाराधिकारी । सुरनायको महेन्द्रो महैश्वर्य्यवान् इन्द्र उपेन्द्रो विष्णुः पालनाधिकारी । एवं त्रिमूर्त्तिभिरपि रक्षा न सिद्ध्यति रामस्यैव त्रिमूर्त्तित्वात् ॥४४॥४५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

## त्रिपञ्चाशः सर्गः ।



स तस्य वचनं श्रुत्वा वानरस्य महात्मनः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ १ ॥
वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।
निवेदितवतो दौत्यं नानुमेने विभीषणः ॥ २ ॥
तं रक्षोऽधिपतिं क्रुद्धं तच्च कार्य्यमुपस्थितम् ।
विदित्वा चिन्तयामास कार्य्यं कार्य्यविधौ स्थितः ॥ ३ ॥
निश्चितार्थस्ततः साम्ना पूज्यं शत्रुजिदग्रजम् ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ४ ॥
क्षमस्व रोषं त्यज राक्षसेन्द्र !
प्रसीद मे वाक्यमिदं शृणुष्व ।

स इति ॥ १ ॥

दौत्यं स्वीयं दूतकर्म यथावन्निवेदितवतो हनूमतोऽवध्यत्वं मत्वा रावणाज्ञप्तं वधं नानुमेने ॥ २ ॥

तच्च कार्य्यं दूतवधरूपम् । कार्य्यविधौ उचितकार्य्यसम्पादने स्थितः । निश्चितबुद्धिरित्यर्थः ॥ ३ ॥

शत्रुजितश्च तमग्रजश्च ॥ ४ ॥

वधं न कुर्वन्ति परावरज्ञा
दूतस्य सन्तो वसुधाधिपेन्द्राः ॥ ५ ॥

राजन्! धर्मविरुद्धञ्च लोकवृत्तेश्च गर्हितम् ।
तव चासदृशं वीर! कपेरस्य प्रमापणम् ॥ ६ ॥
धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः ।
परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥ ७ ॥
गृह्यन्ते यदि रोषेण त्वादृशोऽपि विचक्षणाः ।
ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ८ ॥
तस्मात्प्रसीद शत्रुघ्न! राक्षसेन्द्र दुरासद! ।
युक्तायुक्तं विनिश्चित्य दूतदण्डो विधीयताम् ॥ ९ ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ।
कोपेन महताविष्टो वाक्यमुत्तरमब्रवीत् ॥ १० ॥
न पापानां वधे पापं विद्यते शत्रुसूदन! ।

प्रतिज्ञां त्यज रोषं क्षमस्वेत्यन्वयः । परावरज्ञाः सर्वकार्य्यविषयकोत्कर्षापकर्षज्ञाः सन्तो दूतस्य वधं न कुर्वन्ति ॥ ५ ॥

लोकवृत्तेर्लोकव्यवहारस्य । प्रमापणं वधः ॥ ६ ॥

कृतज्ञत्वेनापकारिष्वेव वधान्याय्यो, न तादृशोऽस्मिन् ॥ ७ ॥

त्वादृश इति । गृह्यन्ते बहुवचनम् । शास्त्रविपश्चित्त्वं शास्त्रपाण्डित्यसम्पादनश्रमः केवलं श्रम एव व्यर्थप्रयास एवेत्यर्थः ॥ ८ ॥

दूतदण्डः दूते विहितो दण्डः ॥ ९ ॥ १० ॥

तस्मादिमं वधिष्यामि वानरं पापकारिणम् ॥ ११ ॥

अधर्ममूलं बहुदोषयुक्त-
मनार्य्यजुष्टं वचनं निशम्य।
उवाच वाक्यं परमार्थतत्त्वं
विभीषणो बुद्धिमतां वरिष्ठः ॥ १२ ॥

प्रसीद लङ्केश्वर राक्षसेन्द्र!
धर्मार्थतत्त्वं वचनं शृणुष्व।
दूता न बध्याः समयेषु राजन्!
सर्वेषु सर्वत्र वदन्ति सन्तः ॥ १३ ॥

असंशयं शत्रुरयं प्रवृद्धः
कृतं ह्यनेनाप्रियमप्रमेयम्।
न दूतबध्यं प्रवदन्ति सन्तो
दूतस्य दृष्टा बहवो हि दण्डाः ॥ १४ ॥

वैरूप्यमङ्गेषु कशाभिघातो
मौण्ड्यं तथा लक्षणसन्निपातः।
एतान् हि दूते प्रवदन्ति दण्डान्
बधस्तु दूतस्य न नः श्रुतोऽस्ति ॥ १५ ॥

पापकारिणं राजद्रोहिणम् ॥ ११ ॥
अधर्मस्य मूलम् अधर्ममूलम्। दोषोऽपकीर्त्तिरूपः ॥ १२ ॥
समयेषु सखामिमि योगानुष्ठानकालेषु ॥ १३ ॥ १४ ॥

कथञ्च धर्मार्थविनीतबुद्धिः
परावरप्रत्ययनिश्चितार्थः ।
भवद्विधः कोपवशे हि तिष्ठेत्
कोपं न गच्छन्ति हि सत्त्ववन्तः ॥ १६ ॥

न धर्मवादे न च लोकवृत्ते
न शास्त्रबुद्धिग्रहणेषु वापि ।
विद्येत कश्चित्तव वीर ! तुल्य-
स्त्वं ह्युत्तमः सर्वसुरासुराणाम् ॥ १७ ॥

पराक्रमोत्साहमनस्विनाञ्च
सुरासुराणामपि दुर्जयेन ।
त्वयाप्रमेयेण सुरेन्द्रसङ्घा-
जिताश्च युद्धेष्वसकृन्नरेन्द्राः ।

• मोघङ्गं मुण्डनम् । लक्षणसन्निपातः दूतयोग्याङ्गसम्भूत इति तीर्थः । वैरूप्यादीनामेकैकं वा । तथा लक्षणानां सन्निपातः सर्वानुष्ठानमेत्यर्थः इत्यन्ये । नोऽस्माकं श्रुतोऽपि नास्ति । दर्शनन्तु दूरापास्तमिति भावः ॥ १५ ॥

परावरप्रत्ययनिश्चितार्थः उत्कर्षापकर्षज्ञानेन निश्चितकार्य्यः । १६ ।

किञ्च त्वमेवोपदेश्योऽस्माकमित्याह,—नेति । शास्त्राणां बुद्ध्या निश्चयात्मिकया ग्रहणेष्वित्यर्थः ॥ १७ ॥

इत्थंविधस्यामरदैत्यशत्रोः
शूरस्य वीरस्य तवाजितस्य।
कुर्वन्ति वीरा मनसाप्यलीकं
प्राणैर्विमुक्ता न तु भोः पुरा ते।

न चाप्यस्य कपेर्घाते कञ्चित्पश्याम्यहं गुणम्।
तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः॥ १८॥
साधुर्वा यदि वासाधुः परैरेष समर्पितः।
ब्रुवन् परार्थं परवान्न दूतो बधमर्हति॥ १९॥
अपि चास्मिन् हते नान्यं राजन्! पश्यामि खेचरम्।
तस्मान्नास्य बधे यत्नः कार्य्यः परपुरञ्जय!।
भवान् सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति॥ २०॥

अस्मिन् विनष्टे न हि भूतमन्यं
पश्यामि यस्तौ नरराजपुत्रौ।
युद्धाय युद्धप्रिय! दुर्विनीता-
वुद्योजयेद्वै भवता विरुद्धौ॥ २१॥

एतदुत्तरं श्लोकद्वयं प्रक्षिप्तमिति कतकः। न चाप्यस्य कपेरिति॥१८॥
समर्पितः प्रेषितः॥ १९॥
नान्यं पश्यामि। यो चागच्छेदित्यर्थः॥ २०॥
नन्वस्मिन् हतेऽन्यस्यानागमने च का मम क्षतिः। विपरीतमिष्टमे

पराक्रमोत्साहमनस्विनाञ्च
सुरासुराणामपि दुर्जयेन।
त्वया मनोनन्दन! नैर्ऋतानां
युद्धाय निर्नाशयितुं न युक्तम्॥ २२॥
हिताश्च शूराश्च समाहिताश्च
कुलेषु जाताश्च महागुणेषु।
मनस्विनः शस्त्रभृतां वरिष्ठाः
कोपप्रशस्ताः सुभृताश्च योधाः॥ २३॥

वेदं तत्राह,—यस्मिन् विमर्द इति। तौ राजपुत्रौ यौ योद्धा उद्-योजयेत्तं न पश्यामि। ननु तदुद्योगाभावोऽपि ममेष्ट एव नेत्याह,—युद्धप्रियेति सम्बोधनेन स्वपराक्रमविजयकीर्त्तिवेष्ट किल ते उभे अप्येतद्विनाशे नश्यत इत्याशयः। रावणस्य रजःप्रकृतित्वात् तत्प्रकृत्यनु-सारेण युद्धादिव्यापारेण प्रलोभनम्। तत्प्रीत्यर्थमेव दुर्विनीताविव्या-दुक्तिः॥ २१॥

हे नैर्ऋतानां मनोनन्दन। सुरासुराणामपि दुर्जयेन त्वया। परा-क्रमे य उत्साहस्तेन प्रशस्तमनोवतां नैर्ऋतानां मनः युद्धाय प्रसक्तं निर्ना-शयितुं न युक्तम्। नैर्ऋतानामित्यत्र मन इत्यत्र च तन्त्रम्। यद्वा तादृशानां नैर्ऋतानां मनोनन्दन तादृशेन त्वया युद्धायत्तियुद्धागमो नाशयितुं न युक्तमित्यर्थः॥ २२॥

ननु युद्धे कदाचिद्विपरीतमपि सम्भाव्येत तत्राह,—हिताश्चेति।

तदेकदेशेन बलस्य तावत्
केचित्तवादेशकृतोऽभ्ययान्तु ।
तौ राजपुत्रावुपगृह्य मूढौ
परेषु ते भावयितुं प्रभावम् ॥ २४ ॥
निशाचराणामधिपोऽनुजस्य
विभीषणस्योत्तमवाक्यनिष्ठम् ।
जग्राह बुध्या सुरलोकशत्रु-
र्महाबलो राक्षसराजमुख्यः ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
द्विपञ्चाशः सर्गः ॥ ५२ ॥

समाश्रिताः दानादिभिर्वशीकृताः । सम्यक् पालिताः । तादृशभृत्यवतो जय एव भावीति भावः ॥ २३ ॥

तत्तस्मादुपगृह्य आयान्त्विति शेषः । परेषु ते प्रभावं भावयितु प्रकाशयितुं युक्तमिति शेषः ॥ २४ ॥

उत्तमवाक्यनिष्ठं तत्प्रतिपाद्यमर्थतत्त्वं जग्राह ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ।

तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः ।
देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १ ॥
सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ।
अवश्यन्तु वधादन्यः क्रियतामस्य निग्रहः ॥ २ ॥
कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् ।
तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ ३ ॥
ततः पश्यन्त्वमुं दीनमङ्गवैरूप्यकर्षितम् ।
सुमित्रज्ञातयः सर्वे बान्धवाः ससुहृज्जनाः ॥ ४ ॥
आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम् ।
लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥ ५ ॥

तस्य विभीषणस्य ॥ १ ॥

दूतवध्या दूतवधः । आर्षमिदं साधु ॥ २ ॥

दग्धेन दाहकृतेनोपलक्षितो गच्छतु । स्वस्वामिसमीपमिति शेषः ॥ ३ ॥

ततः स्वीयसमीपगमनानन्तरम् । सुमित्राणि समसुखदुःखाः । ज्ञातयो भ्रात्रादयः । बान्धवाः सम्बन्धिनः । सुहृज्जनाः स्निग्धजनास्तत्सहिता बान्धवा इत्यर्थः ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः।
वेष्टन्ते तस्य लाङ्गूलं जीर्णैः कार्पासिकैः पटैः॥ ६॥
संवेष्ट्यमाने लाङ्गूले व्यवर्द्धत महाकपिः।
शुष्कमिन्धनमासाद्य वनेष्विव हुताशनम्॥ ७॥
तैलेन परिसिच्याथ तेऽग्निं तत्रोपपादयन्।
लाङ्गूलेन प्रदीप्तेन राक्षसांस्तानताड़यत्॥ ८॥
रोषामर्षपरीतात्मा बालसूर्य्यसमाननः।
स भूयः सङ्गतैः क्रूरै राक्षसैर्हरिपुङ्गवः॥ ९॥
सहस्त्रीबालवृद्धाश्च जग्मुः प्रीतिं निशाचराः।
निबद्धः कृतवान् वीरस्तत्कालसदृशीं मतिम्॥ १०॥

अथ रावणः स्वपुरदुर्गमहाबलमहैश्वर्य्याणि परेभ्यः प्रकाशयितुं सर्वपुरपरावर्त्तनं दीप्तपुच्छस्याज्ञापयदित्याह,—आज्ञापयदिति। परिणीयतामित्याज्ञापयदिति योजना ॥५॥

वेष्टन्ते। अवेष्टयन्तेत्यर्थः॥ ६॥

शुष्कमिति। आरण्यका यथा शुष्कमिन्धनमासाद्य हुताशनमुत्पादयन्ति तथा जीर्णपटवेष्टितलाङ्गूलं तैलेन परिषिच्य तत्र तेऽग्निमुपपादयन् उदपादयन्नित्यर्थ इति कतकः। हुताशन इति पाठे वृद्धौ दृष्टान्तोऽयम्। उपपादयन्नित्यस्य समयोजयन् इत्यर्थ इत्यन्ये। तान् बध्वानेतृन्॥ ७॥ ८॥

सङ्गतैर्मिलितै राक्षसैः स भूयो निबद्ध इति शेषः॥ ९॥

कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः।
छित्त्वा पाशान् समुत्पत्य हन्यामहमिमान् पुनः॥ ११॥
यदि भर्तृहितार्थाय चरन्तं भर्तृशासनात्।
निबध्नन्ते दुरात्मानो न तु मे निष्कृतिः कृता॥ १२॥
सर्वेषामेव पर्य्याप्तो राक्षसानामहं युधि।
किन्तु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम्॥ १३॥
लङ्का चारयितव्या मे पुनरेव भवेदिति।
रात्रौ न हि सुदृष्टा मे दुर्गकर्मविधानतः॥ १४॥

अथ बन्धसंहारशक्तावपि सनोचित इत्यचिन्तयदित्याह,—कृतवानिति॥ १०॥

तां मतिमभिनयति। काममिति। निबद्धस्यापि निबद्धवदवस्थितस्यापि मे न शक्ताः सर्वथा बन्धनादात्रिति शेषः। तदेव समर्थयति। छित्त्वेति॥ ११॥

तर्हि कुतोऽहन्यन्ते तत्राह,—यदीति। भर्तू रामस्य हितार्थाय हितनिमित्तं चरन्तं मां भर्तू रावणस्य शासनाद्यदि एते मां निबध्नन्ते निबध्नन्तु केवलम्। नतु मे निष्कृतिः कृता मया कृतस्य प्रतिक्रिया तु न कृता॥ १२॥

यदि तां बधरूपां चिकीर्षेयुस्तदा सर्वान् हनिष्याम्येवेत्याह,—सर्वेषामिति। यदि पर्य्याप्तस्तर्हि क्रियतां शत्रुवधस्तत्राह,—रामस्येति। प्रीत्यर्थं सर्वराक्षसवधजप्रीत्यविघ्नार्थम्। ईदृशं बन्धनादिकम्॥ १३॥

पक्षान्तरार्थमपि सोढव्यमेवेत्याह,—लङ्केति। एते रावणाज्ञया

अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये।
कामं बध्नन्तु मे भूयः पुच्छस्योद्दीपनेन च॥ १५॥
पीड़ां कुर्वन्ति रक्षांसि न मेऽस्ति मनसः श्रमः।
ततस्ते संवृताकारं सत्त्ववन्तं महाकपिम्॥ १६॥

पुनरेव सकललङ्काचारयितव्या चारणेन दर्शयितव्याऽतो विघष्ठिष्ये। ननु दृष्टायाः किं पुनर्दर्शनेन तत्राह,—रात्राविति। दुर्गकर्म्मविधानतः दुर्गस्य दुर्गमत्वरूपकर्मविधानाद्धेतोर्दुर्गांशो इति शेषः॥ १४॥

निशाक्षये इत्यनेन सीतासम्भाषणार्थं कतिपयदिनवासो गम्यते। तथाहि। फाल्गुने रावणेन सीतापहारः! आश्विनशुक्लसमाप्तौ हनुमत्प्रेरणयापञ्चावधिदानेन वानरान् प्रति दूतप्रेषणम्। ततः कार्त्तिकशुक्लप्रतिपदि अन्वेषणार्थं वानरप्रस्थानम्। मार्गशुक्लदशम्यां सम्पातिदर्शनम्। तदा सुग्रीवदत्तमासावधेर्गतत्वस्य वानरैरुक्तिः। अग्रे एकादश्यां हनूमतो लङ्कागमनम्। तद्राचिशेषे सीतादर्शनम्। ततो द्वादश्यां दिने स्थित्वा रात्रौ सीतायाः सम्यग्दर्शनम्। तत्र रावणेन मासान् द्वादशभामिनीति स्वदत्तावधौ मासद्वयावशेषवचने कतिपयदिनाधिक्यन्तु मासत्वानवच्छिन्नत्वेनाल्पान्तरत्वान्न विवक्षितम्। ततस्त्रयोदश्यां प्रातः सीतया सह कथालापः। तद्दिने एवाशोकवनिकाभङ्गादि। चतुर्दश्यामक्षान्तवधो लङ्कादाहश्च। पूर्णिमायां वा। पूर्वं वासन्तिकरुत्त्वायां पुष्पितत्त्वोक्तिस्तु तदर्थं चयमासेनोपपादिता उत्पातैश्च। लक्ष्मणस्य सुग्रीवनिकटे प्रेषणसमये रामेण मासचतुष्टयरूपकालावधेरपगमोक्तिस्तु प्रागुपपादितरहस्येति दिक्। पुच्छस्योद्दीपनेन चेत्यस्योत्तरश्लोकेनान्वयः॥ १५॥

परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् ।
शङ्खभेरीनिनादैश्च घोषयन्तः स्वकर्मभिः ॥ १७ ॥
राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् ।
अन्वीयमानो रक्षोभिर्ययौ सुखमरिन्दमः ॥ १८ ॥
हनूमांश्चारयामास राक्षसानां महापुरीम् ।
अथापश्यद्विमानानि विचित्राणि महाकपिः ॥ १९ ॥
संवृतान् भूमिभागांश्च सुविभक्तांश्च चत्वरान् ।
रथ्याश्च गृहसम्बाधाः कपिः शृङ्गाटकानि च ॥ २० ॥
तथा रथ्योपरथ्याश्च तथैव च गृहान्तरान् ।
चत्वरेषु चतुष्केषु राजमार्गे तथैव च ॥ २१ ॥
घोषयन्ति कपिं सर्वं चार इत्येव राक्षसाः ।

मनसः. श्रमो मनःखेदो न मेऽस्ति इति चिन्तयामासेत्यन्वयः । तत एवं तस्य चिन्तानन्तरमित्यर्थः ॥ १६ ॥

स्वकर्मभिः राजद्रोहिणो दुष्टस्यैवं दण्ड इत्येवमादिभिर्घोषयन्तः । पूर्ववृत्तान्तस्य सर्वान् प्रति प्रकटं प्रतिपादनं घोषणम् ॥ १७ ॥ १८ ॥

चारयामास । स्वार्थे णिच् । चरणेन ददर्शेत्यर्थः ॥ १९ ॥

चत्वरान् द्वारसमीपे बहिर्वेद्यान् । गृहैः सम्बाधाः निबिडाः । शृङ्गाटकानि चतुष्पथान् ॥ २० ॥

उपरथ्याः स्वल्पवीथ्यः । गृहान्तरान् गृहद्वयमध्यभागान् । चतुष्केषु चतुष्पथेषु ॥ २१ ॥

दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनूमतः ॥ २२ ॥
राक्षस्तास्तावि(?)रूपाक्ष्यः शंसुर्देव्यास्तदप्रियम्।
यस्त्वया कृतसंवादः सीते! ताम्रमुखः कपिः ॥ २३ ॥
लाङ्गूलेन प्रदीप्तेन स एष परिणीयते।
श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम् ॥ २४ ॥
वैदेही शोकसन्तप्ता हुताशनमुपागमत्।
मङ्गलाभिमुखी तस्य सा तदासीन्महाकपेः ॥ २५ ॥
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम्।
यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥ २६ ॥
यदि वा त्वेकपत्नीत्वं शीतो भव हनूमतः।
ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः ॥ २७ ॥

चारीक इति पाठेऽपि चार इत्येवार्थः। आर्षं साधुत्वम्। चार-शब्दात् स्वार्थे आर्ष इकः ॥ २२ ॥

तस्य हनूमतो लाङ्गलाग्रे दीप्यमाने तदप्रियं देव्याः शंसुः शशंसुः ॥ २३ ॥

परिणीयते परितो नीयते आत्मापहरणोपमं तादृग्दुःखजनकम् ॥ २४ ॥

उपागमत् ध्यानेनोपासितवती। यद्वा तत्र समीपे ज्वलन्तमग्निमुपासितवती ॥ २५ ॥

प्रयता शुद्धिमती ॥ २६ ॥

जज्वाल मृगशावाक्ष्याः शंसन्निव शुभं कपेः ।
हनूमज्जनकश्चैव पुच्छानलयुतोऽनिलः ॥ २८ ॥
ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः ।
दह्यमाने च लाङ्गूले चिन्तयामास वानरः ।
प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः ॥ २९ ॥
दृश्यते च महाज्वालः करोति च न मे रुजम् ।
शिशिरस्येव सम्पातो लाङ्गूलाग्रे प्रतिष्ठितः ॥ ३० ॥
अथवा तदिदं व्यक्तं यद्दृष्टं प्लवता मया ।
रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ ॥ ३१ ॥

एकपत्नीत्वं पातिव्रत्यम् । शीतो भव हुताशनेति शेषः । अस्याः सीताछायात्वेऽपि तस्मिन् तदभेदबुद्धिसत्त्वान्नैतदनुपपत्तिः । ततः सीतोपासनानन्तरं तीक्ष्णार्चिरप्यनलः प्रदक्षिणशिखो जज्वाल ॥ २७ ॥

तथा सीतायाः कपेः शिवं स्वकृतं शंसन्निवाभूत् । किञ्च हनूमज्जनकोऽनिलो वायुः पुच्छानलयुतोऽपि देव्याः सम्मुखे स्वास्थ्यकरः कपेः स्वास्थ्यसूचकः सन् प्रालेयानिलशीतलो ववौ ॥ २८ ॥

सर्वतः प्रदीप्तोऽग्निरित्यन्वयः ॥ २९ ॥

लाङ्गूलाग्रे शिशिरस्य हिमस्य सम्पातः पिण्ड इव प्रतिष्ठित इत्यन्वयः ॥ ३० ॥

तत्रोपपत्तिं चिन्तयति । अथवेति । यद्यस्मात् प्लवता मया सरितां पतौ रामप्रभावात् समुद्रे पर्वतरूपमाश्चर्यं दृष्टं ततो रामप्रभावादेवेदमपीत्यर्थः ॥ ३१ ॥

यदि तावत्समुद्रस्य मैनाकस्य च धीमतः।
रामार्थं सम्भ्रमस्तादृक्समग्निर्न करिष्यति ॥ ३२ ॥
सीतायाश्चानृशंस्येन तेजसा राघवस्य च।
पितुश्च मम सख्येन न मां दहति पावकः ॥ ३३ ॥
भूयः सञ्चिन्तयामास मुहूर्त्तं कपिकुञ्जरः।
कथमस्मद्विधस्येह बन्धनं राक्षसाधमैः ॥ ३४ ॥
प्रतिक्रियास्य युक्ता स्यात्सति मह्यं पराक्रमे।
ततश्छित्त्वा च तान् पाशान् वेगवान् वै महाकपिः ॥ ३५ ॥"
उत्पपाताथ वेगेन ननाद च महाकपिः।
पुरद्वारं ततः श्रीमांश्छैलशृङ्गमिवोन्नतम् ॥ ३६ ॥
विभक्तरक्षःसम्बाधमाससादानिलात्मजः।
स भूत्वा शैलसङ्काशः क्षणेन पुनरात्मवान् ॥ ३७ ॥

ननु समुद्रप्रेरणेन मैनाकोत्थानं प्रयुज्यतेऽग्नेस्तु स्वभाववैपरीत्यं कुतस्तत्राह,—यदीति। तावदिति वाक्यालङ्कारे। रामार्थं रामोपकारार्थं तादृक्सम्भ्रमो यदि स्यादरपूर्वकत्वरा यदि तदा रामेण नित्यमुपासितोऽग्निः रामोपकारार्थं कथमपि शैत्यं न करिष्यतीत्यर्थः ॥ ३२ ॥

आनृशंस्यमाश्रितजनदया ॥ ३३ ॥

चिन्तयामास। अनन्तरकर्त्तव्यमिति शेषः ॥ ३४ ॥

प्रतिक्रिया लङ्कादहनरूपा। मह्यं मम ॥ ३५ ॥

उत्पपात पुच्छाग्निना बन्धनेन च सहैवेति शेषः ॥ ३६ ॥

ह्रस्वतां परमां प्राप्तो बन्धनान्यवशातयत् ।
विमुक्तश्चाभवच्छ्रीमान् पुनः पर्वतसन्निभः ॥ ३८ ॥
वीक्ष्यमाणश्च ददृशे परिघं तोरणाश्रितम् ।
स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ।
रक्षिणस्तान् पुनः सर्वान् सूदयामास मारुतिः ॥ ३९ ॥

स तान्निहत्वा रणचण्डविक्रमः
समीक्ष्यमाणः पुनरेव लङ्काम् ।
प्रदीप्तलाङ्गूलकृतार्चिमाली
प्रकाशितादित्य इवार्चिमाली ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
त्रिपञ्चाशः सर्गः ॥ ५३ ॥

विभक्तरक्षः सम्बाधं रक्षःसम्मर्दरहितम् ॥ ३७ ॥

शैलसङ्काशो महान् भूत्वा । ह्रस्वतां प्राप्त इत्यनेन देहसौक्ष्म्यात् स्वयमेव बन्धगलनमुक्तम् । एवं रीत्या बन्धनान्यवशातयत् दूरीकृतवान् ॥ ३७ ॥

विमुक्तयनन्तरं पुनः पर्वताकारोऽभवत् ॥ ३९ ॥

अर्चिमालीत्यत्र मीरेफतार्धो ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुःपञ्चाशः सर्गः।



वीक्ष्यमाणस्ततो लङ्कां कपिः कृतमनोरथः।
वर्द्धमानसमुत्साहः कार्य्यशेषमचिन्तयत् ॥ १ ॥
किन्नु खल्ववशिष्टं मे कर्त्तव्यमिह साम्प्रतम्।
यदेषां रक्षसां भूयः सन्तापजननं भवेत् ॥ २ ॥
वनं तावत्प्रमथितं प्रकृष्टा राक्षसा हताः।
बलैकदेशः क्षपितः शेषं दुर्गविनाशनम् ॥ ३ ॥
दुर्गे विनाशिते कर्म भवेत् सुखपरिश्रमम्।
अल्पयत्नेन कार्य्येऽस्मिन् मम स्यात् सफलः श्रमः ॥ ४ ॥

वीक्ष्यमाण इति ॥ १ ॥

यदेषां भूयः सन्तापजननं भवेत् तादृशमवशिष्टं साम्प्रतं कर्त्तव्यं किमिति कार्य्यशेषमचिन्तयदित्यर्थः ॥ २ ॥

तदेव निश्चिनोति। शेषं दुर्गविनाशनमिति ॥ ३ ।

कर्म समुद्रलङ्घनादि। सुखपरिश्रमं सफलप्रयासं तपश्चर्य्यादिवदित्यर्थः। उक्तमेव विवृणोति अल्पेति। अस्मिन् सीतान्वेषणप्रवृत्तिरूपे कार्य्ये यो मया कृतः श्रमः सल्पकेन यत्नेन स्वल्पयत्नेन साध्येन करिष्यमाणलङ्कादाहेन सफलो भविष्यति ॥ ४ ॥

योऽ ह्ययं मम लाङ्गूले दीप्यते हव्यवाहनः ।
अस्य सन्तर्पणं न्याय्यं कर्त्तुमेभिर्गृहोत्तमैः ॥ ५ ॥
ततः प्रदीप्तलाङ्गूलः सविद्युदिव तोयदः ।
भवनाग्रेषु लङ्काया विचचार महाकपिः ॥ ६ ॥
गृहाद्गृहं राक्षसानामुद्यानानि च वानरः ।
वीक्ष्यमाणो ह्यसन्त्रस्तः प्रासादांश्च चचार सः ॥ ७ ॥
अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ।
अग्निं तत्र विनिक्षिप्य श्वसनेन समो बली ॥ ८ ॥
ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्य्यवान् ।
मुमोच हनुमानग्निं कालानलशिखोपमम् ॥ ९ ॥
वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ।
शुकस्य च महातेजाः सारणस्य च धीमतः ॥ १० ॥
तथा चेन्द्रजितो वेश्म ददाह हरियूथपः ।
जम्बुमालेः सुमालेश्च ददाह भवनं ततः ॥ ११ ॥
रश्मिकेतोश्च भवनं सूर्य्यशत्रोस्तथैव च ।
ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ १२ ॥

तदेवाह,—योऽहीति । न्याय्यं स्वस्य पीडाया अकरणादिति भावः ॥ ५ ॥

तोयदः सन्ध्यातोयदः हनूमतो रक्तवर्णत्वात् ॥ ६ ॥

उद्यानानि गृहारामाः ॥ ७ ॥

यज्ञोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः।
विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥ १३ ॥
करालस्य विशालस्य शोणिताक्षस्य चैव हि।
कुम्भकर्णस्य भवनं मकराक्षस्य चैव हि ॥ १४ ॥
नरान्तकस्य कुम्भस्य निकुम्भस्य महात्मनः।
यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च ॥ १५ ॥
वर्जयित्वा महातेजा विभीषणगृहं प्रति।
क्रममाणः क्रमेणैव ददाह हरिपुङ्गवः ॥ १६ ॥
तेषु तेषु महार्हेषु भवनेषु महायशाः।
गृहेष्वृद्धिमतामृद्धिं ददाह कपिकुञ्जरः ॥ १७ ॥
सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान्।
आससादाथ लक्ष्मीवान् रावणस्य निवेशनम् ॥ १८ ॥
ततस्तस्मिन् गृहे मुख्ये नानारत्नविभूषिते।
मेरुमन्दरसङ्काशे नानामङ्गलशोभिते ॥ १९ ॥
प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम्।

प्रहस्तस्य प्रधानमन्त्रित्वादादौ तद्गृहेऽग्निप्रक्षेपः। प्रथमं तत्र भावनस्यौचित्यात् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

भवनं ददाहेत्यनुकर्षः ॥ १४ ॥ १५ ॥

विभीषणेन स्वस्य वधतोरक्षणाद्विभीषणगृहं वर्जयित्वा प्रतिगृहं क्रममाण इत्यन्वयः ॥ १६ ॥

ननाद हनुमान् वीरो युगान्तजलदो यथा ॥ २० ॥
श्वसनेन च संयोगादतिवेगो महाबलः ।
कालाग्निरिव जज्वाल प्रावर्द्धत हुताशनः ॥ २१ ॥
प्रदीप्तमग्निं पवनस्तेषु वेश्मसु चारयन् ।
तानि काञ्चनजालानि मुक्तामणिमयानि च ॥ २२ ॥
भवनानि व्यशीर्यन्त रत्नवन्ति महान्ति च ।
तानि भग्नविमानानि निपेतुर्वसुधातले ॥ २३ ॥
भवनानीव सिद्धानामम्बरात्पुण्यसंक्षये ।
संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् ॥ २४ ॥
स्वे स्वे गृहपरित्राणे भग्नोत्साहोज्झितश्रियाम् ।
नूनमेषोऽग्निरायातः कपिरूपेण हा इति ॥ २५ ॥

पूर्वं 'रावणाद्भीतोऽप्यग्निः सीतातेजःसम्बन्धेन' निःशङ्कं ददाहेत्युक्तं प्राक् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

श्वसनेन संयोगात्सीताश्वासमिश्रितवायुसंयोगात् अतएव वायोरपि निर्भयता ॥ २१ ॥

चारयन्निति हेतौ शता । यतश्चारयतिस्म ततश्चारणाद्धेतोस्तानि व्यशीर्यन्तेत्यन्वयः ॥ २२ ॥

भग्नविमानानि भग्नप्रासादानि ॥ २३ ॥ २४ ॥

भग्नोत्साहाश्च ते उज्झितश्रियश्चेत्यर्थः । हा इति तुमुलः शब्दः संजज्ञे इत्यन्वयः ॥ २५ ॥

क्रन्दन्त्यः सहसा पेतुस्तनन्धयधराः स्त्रियः।
काश्चिदग्निपरीताङ्ग्यो हर्म्येभ्यो मुक्तमूर्द्धजाः॥ २६ ॥
पतन्त्यो रेजिरेऽभ्रेभ्यः सौदामन्य इवाम्बरात्।
वज्रविद्रुमवैदूर्य्यमुक्तारजतसंहतान्॥ २७ ॥
विचित्रान् भवनाद्धातून् स्यन्दमानान् ददर्श सः।
नाग्निस्तृप्यति काष्ठानां तृणानाञ्च यथा तथा॥ २८ ॥
हनूमान् राक्षसेन्द्राणां बधे किञ्चिन्न तृप्यति।
न हनूमद्विशस्तानां राक्षसानां वसुन्धरा॥ २९ ॥
हनूमता वेगवता वानरेण महात्मना।
लङ्कापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा॥ ३० ॥
ततः स लङ्कापुरपर्वताग्रे
समुत्थितो भीमपराक्रमोऽग्निः।

पेतुरधाविति शेषः॥ २६॥

अभ्रेभ्यो मेघेभ्यः॥ २७॥

धातुसम्बन्धाद्भवनाद्धेमरजतादिधातून् स्यन्दमानान् ददर्श। यथा काष्ठतृणादिदाहादग्निर्न तृप्यति तथा राक्षसबधे क्रियमाणे हनूमान् किञ्चिदीषदपि न तृप्यति॥ २८॥

वसुन्धरा नेति। मृतराक्षसानां शयनाय लङ्काभूमिर्न पर्य्याप्ता भूदिति शेषः॥ २९॥ ३०॥

प्रमार्थ्य चूड़ावलयं प्रदीप्तो
हनूमता वेगवतोपसृष्टः ॥ ३१ ॥
युगान्तकालानलतुल्यरूपः
समारुतोऽग्निर्ववृधे दिवस्पृक्।
विधूमरश्मिर्भवनेषु सक्तो
रक्षःशरीराज्यसमर्पितार्चिः ॥ ३२ ॥
आदित्यकोटीसदृशः सुतेजा
लङ्कां समस्तां परिवार्य्य तिष्ठन्।
शब्दैरनेकैरशनिप्ररूढै-
र्भिन्दन्निवाण्डं प्रबभौ महाग्निः ॥ ३३ ॥
तत्राम्बरादग्निरतिप्रवृद्धो
रूक्षप्रभः किंशुकपुष्पचूड़ः।
निर्वाणधूमाकुलराजयश्च
नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥ ३४ ॥

लङ्कापुरपर्वताग्रे लङ्कापुराधारभूतत्रिकूटाचलशिखरे चूड़ावलयं शिखासमूहं प्राप्तो भूदिति शेषः ॥ ३१ ॥

विधूमरश्मिर्विधूमज्वालः रक्षःशरीररूपाज्येन समर्पिता सम्पादिता अर्चिर्ज्वालाविशेषो यस्य सः ॥ ३२ ॥

तिष्ठन् भूदिति शेषः। अशनिप्ररूढैरशनिवत्प्रगल्भैः। महाग्निः प्रलयाग्निः ॥ ३३ ॥

वज्री महेन्द्रस्त्रिदशेश्वरो वा
साचाद्यमो वा वरुणोऽनिलो वा।
रौद्रोऽग्निरर्को धनदश्च सोमो
न वानरोऽयं स्वयमेव कालः॥ ३५॥
किं ब्रह्मणः सर्वपितामहस्य
लोकस्य धातुश्चतुराननस्य।
इहागतो वानररूपधारी
रक्षोपसंहारकरः प्रकोपः॥ ३६॥
किं वैष्णवं वा कपिरूपमेत्य
रक्षोविनाशाय परं सुतेजः।
अचिन्त्यमव्यक्तमनन्तमेकं
स्वमायया साम्प्रतमागतं वा॥ ३७॥
इत्येवमूचुर्बहवो विशिष्टा
रक्षोगणास्तत्र समेत्य सर्वे।

आम्बरादम्बरपर्य्यन्तम्। रूक्षप्रभः, क्रूरकान्तिः। किंशुकपुष्पवच्चूड़ा शिखा यस्य सः। निर्वाणानामधोविच्छिन्नानाञ्च एव वर्त्तमानानां धूमानामाकुला राजयो नीलोत्पलाभा अभ्राकाराः सत्यः, प्रचकाशिरे॥ ३४॥

वज्रित्वत्रिदशेश्वरत्वविशिष्टो महेन्द्र इत्यर्थः। रौद्रोऽग्निः रुद्रतृतीयनयनसम्बन्ध्यग्निः॥ ३५॥ ३६॥ ३७॥

सप्राणिसङ्घां सगृहां सवृक्षां
दग्धां पुरीं तां सहसा समीक्ष्य ॥ ३८ ॥

ततस्तु लङ्का सहसा प्रदग्धा
सराक्षसा साश्वरथा सनागा ।
सपक्षिसङ्घा समृगा सवृक्षा
रुरोद दीना तुमुलं सशब्दम् ॥ ३९ ॥

हा तात! हा पुत्रककान्तमित्र !
हा! जीवितेशाङ्ग हतं सुपुण्यम् ।
रक्षोभिरेवं बहुधा ब्रुवद्भिः
शब्दः कृतो घोरतरः सुभीतः ॥ ४० ॥

हुताशनज्वालसमावृता सा
हतप्रवीरा परिवृत्तयोधा ।
हनूमतः क्रोधबलाभिभूता
बभूव शापोपहतेव लङ्का ॥ ४१ ॥

ससम्भ्रमं त्रस्तविषण्णरक्षसां
समुज्ज्वलज्ज्वाल हुताशनाङ्किताम् ।

विशिष्टा महाबलाः प्रहस्तादय इत्यर्थः । समीक्ष्य इत्येवमूचुरित्यन्वयः ॥ ३८ ॥ ३९ ॥

सुपुण्यमतिशयितमर्जितं पुण्यम् ॥ ४० ॥

परिवृत्तयोधा पर्यस्तयोधा ॥ ४१ ॥

ददर्श लङ्कां हनुमान् महामना:
स्वयम्भुरोषोपहतामिवावनिम् ॥ ४२ ॥
भंक्का वनं पादपरत्नसङ्कुलं
हत्वा तु रक्षांसि महान्ति संयुगे।
दग्ध्वा पुरीं तां गृहरत्नमालिनीं
तस्थौ हनूमान् पवनात्मज: कपि: ॥ ४३ ॥
स राक्षसांस्तान् सुबहूंश्च हत्वा
वनञ्च भंक्का बहुपादपं तत्।
विसृज्य रक्षोभवनेषु चाग्निं
जगाम रामं मनसा महात्मा ॥ ४४ ॥
ततस्तु तं वानरवीरमुख्यं
महाबलं मारुततुल्यवेगम्।
महामतिं वायुसुतं वरिष्ठं
प्रतुष्टुवुर्देवगणाश्च सर्वे ॥ ४५ ॥
देवाश्च सर्वे मुनिपुङ्गवाश्च
गन्धर्वविद्याधरपन्नगाश्च।
भूतानि सर्वाणि महान्ति तत्र
जग्मु: परां प्रीतिमतुल्यरूपाम् ॥ ४६ ॥
भंक्का वनं महातेजा हत्वा रक्षांसि संयुगे।
दग्ध्वा लङ्कापुरीं भीमां रराज स महाकपि: ॥ ४७ ॥

गृहाग्रशृङ्गाग्रतले विचित्रे
प्रतिष्ठितो वानरराजसिंहः ।
प्रदीप्तलाङ्गूलकृतार्चिमाली
व्यराजतादित्य इवार्चिमाली ॥ ४८ ॥

लङ्कां समस्तां संपीड्य लाङ्गूलाग्निं महाकपिः ।
निर्वापयामास तदा समुद्रे हरिपुङ्गवः ॥ ४९ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
दृष्ट्वा लङ्कां प्रदग्धां तां विस्मयं परमं गताः ॥ ५० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चतुःपञ्चाशः सर्गः ॥ ५४ ॥

स्वयम्भूरोषोपहताम् । खदिनान्त इति शेषः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

गृहाग्राणां गृहश्रेष्ठानां शृङ्गाग्रतले प्रासादाग्रभूमौ । प्रदीप्तलाङ्गूलेन कृतार्चिर्माला यस्यास्ति सः ॥ ४८ ॥

समुद्रे निर्वापयामास । लाङ्गूलप्रक्षेपणेनेति शेषः ॥ ४९ ॥ ५० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

## पञ्चपञ्चाशः सर्गः ।



सन्दीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीम् ।
अवेक्ष्य हनुमान् लङ्कां चिन्तयामास वानरः ॥ १ ॥
तस्याभूत् स महांस्त्रासः कुत्सा चात्मन्यजायत ।
लङ्कां प्रदहता कामं किं स्वित् कृतमिदं मया ॥ २ ॥
धन्याः खलु महात्मानो ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ३ ॥
क्रुद्धः पापं न कुर्य्यात् कः क्रुद्धो हन्यात् गुरूनपि ।
क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ ४ ॥

सन्दीप्यमानामिति ॥ १ ॥

कुत्सा चात्मन्यजायतेत्युक्तां कुत्सामाह,—लङ्कामिति । किं स्वित्कर्म-कृतम् । कुत्सितमेव कृतमित्यर्थः ॥ २ ॥

उक्तां कुत्सितकार्य्यमूलं कोप इति निश्चित्य तमधिक्षिपन्नाह स्तौति । धन्या इति । दुःखातिशयादेव महात्मपदपौनरुक्त्यं न दोषाय ॥ ३ ॥

क्रुद्धः पापं न कुर्य्यात्क इति पाठे क्रुद्धो यः कश्चित्पापं कुर्य्यान्न । नञि काकुः । अपि तु कुर्य्यादेव । अकरणमशक्यमेवेत्यर्थः । तदेव दर्शयति । क्रुद्धो हन्यादिति ॥ ४ ॥

वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्य्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ५ ॥
यः समुत्पतितं क्रोधं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ६ ॥
धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ।
अचिन्तयित्वा तां सीतामग्निदं स्वामिघातकम् ॥ ७ ॥
यदि दग्धा त्वियं सर्वा नूनमार्य्यापि जानकी ।
दग्धा तेन मया भर्त्तुर्हतं कार्य्यमजानता ॥ ८ ॥
यदर्थमयमारम्भस्तत्कार्य्यमवसादितम् ।
मया हि दहता लङ्कां न सीता परिरक्षिता ॥ ९ ॥
ईषत्कार्य्यमिदं कार्य्यं कृतमासीन्न संशयः ।
तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥ १० ॥

न जानातीत्येतदेव स्पष्टयति । नाकार्य्यमिति । क्रुद्धस्याकार्य्यमयुक्तबुद्ध्याऽकरणीयं न किञ्चिदप्यस्ति । अतो गुरुहननाद्यपि करोत्येवेत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥

धिगस्तु मामित्यनेनोक्तं स्वधिक्कारमाह,—यदीति । इयं लङ्का सर्वापि नूनं दग्धैव । यदि जानक्यप्यनया दग्धा स्यात्तदा तेन अजानता मया भर्त्तुः कार्य्यं हतं भवेत् ॥ ८ ॥

एतदेव विवृणोति । यदर्थमिति ॥ ९ ॥

एतत्कार्य्यं लङ्कादाहरूपम् । ईषत्कार्य्यमिव अप्रयाससाध्यकार्य्य-

विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते।
लङ्कायाः कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ ११ ॥
यदि तद्विहतं कार्य्यं मया प्रज्ञाविपर्य्ययात्।
इहैव प्राणसन्न्यासो ममापि ह्यद्य रोचते ॥ १२ ॥
किमग्नौ निपतान्यद्य आहोस्विद्वड़वामुखे।
शरीरमिह सत्त्वानां दद्मि सागरवासिनाम् ॥ १३ ॥
कथन्नु जीवता शक्यो मया द्रष्टुं हरीश्वरः।
तौ वा पुरुषशार्दूलौ कार्य्यसर्वस्वघातिना ॥ १४ ॥
मया खलु तदेवेदं रोषदोषात् प्रदर्शितम्।
प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १५ ॥
धिगस्तु राजसम्भावमनीशमनवस्थितम्।
ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १६ ॥

मिव कृतमनुष्ठितमासीत्। अत्र न संशयः। भर्तुः कार्य्यन्तु मया सर्वथा नाशितमेवेत्याह,—तस्येति। क्रोधाभिभूतेन मया सीतामपरिरक्षता कृतस्य सीतादर्शनरूपस्य कार्य्यस्य मूलच्छेदः कृतः ॥ १० ॥

ननु सीताविनाशनिश्चयस्ते कथं तत्राह,—विनष्टेति ॥ ११ ॥ १२ ॥

वड़वामुखेऽग्नावित्यन्वयः। दद्मि ददामि ॥ १३ ॥ १४ ॥

तदेवेदं कपित्वमनवस्थितमव्यवस्थितकार्य्यकारीति त्रिषु लोकेषु प्रसिद्धं दर्शितम्। रोषदोषाद्रक्षोविषयक्रोधदोषात् ॥ १५ ॥

राजसं रजोगुणमूलम्। भावं चेष्टाविशेषम्। अनीशं कार्य्या-

विनष्टायान्तु सीतायां तावुभौ विनशिष्यतः ।
तयोर्विनाशे सुग्रीवः सबन्धुर्विनशिष्यति ॥ १७ ॥
एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः ।
धर्मात्मा सह शत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥ १८ ॥
इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयः ।
भविष्यन्ति प्रजाः सर्वाः शोकसन्तापपीड़िताः ॥ १९ ॥
तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः ।
रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥ २० ॥
इति चिन्तयतस्तस्य निमित्तान्युपपेदिरे ।
पूर्वमप्युपलब्धानि साचात्पुनरचिन्तयत् ॥ २१ ॥
अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ।
न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्त्तते ॥ २२ ॥
न हि धर्मात्मनस्तस्य भार्य्यामिततेजसः ।
स्वचरित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥ २३ ॥

समर्थम् । अतएवानवस्थितमव्यवस्थितफलजनकं धिक् । यद्यस्मादीश्वरेणापि समर्थेनापि मया रागाद्गजोगुणमूलक्रोधवशात् सीता न रक्षिता अतोऽधिक् ॥ १६ ॥

उभौ रामलक्ष्मणौ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

साक्षादुपलब्धानि अपरोक्षमनुभूतशुभफलानि उपपेदिरे । जातानि दृष्ट्वा पुनरचिन्तयदित्यर्थः ॥ २१ ॥

नूनं रामप्रभावेण वैदेह्याः सुकृतेन च।
यन्मां दहनकर्मायं नादहद्धव्यवाहनः ॥ २४ ॥
त्रयाणां भरतादीनां भ्रातॄणां देवता च या।
रामस्य च मनःकान्ता सा कथं विनशिष्यति ॥ २५ ॥
यद्वा दहनकर्मायं सर्वत्र प्रभुरव्ययः।
न मे दहति लाङ्गूलं कथमार्य्यां प्रधक्ष्यति ॥ २६ ॥
पुनश्चाचिन्तयत्तत्र हनूमान् विस्मितस्तदा।
हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥ २७ ॥
तपसा सत्यवाक्येन अनन्यत्वाच्च भर्त्तरि।
असौ विनिर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २८ ॥

...मेव दर्शयति। अथवेति। मामिरमा प्रवर्त्तते इति। अग्निरग्निं न दहतीत्यर्थः ॥ २२ ॥ २३ ॥

दहनकर्मा भस्मीकरणसहजस्वभावः। यद्यतस्तत्प्रभावान् मां तत्सेवकं नादहत्। तत एव तां स्पष्टमपि नाहतीत्यर्थः ॥ २४ ॥

त्रयाणां भरतलक्ष्मणशत्रुघ्नानां देवतात्वास्यामप्रवृत्तेः रामभयाच्चेति भावः ॥ २५ ॥

सर्वत्र प्रभुरपि यत्सेवकत्वान् मे लाङ्गूलं न दहति ततस्तां कथं धक्ष्यति ॥ २६ ॥

देवीप्रभावात् सिन्धौ मद्विश्रान्तिनिमित्तं गिरिदर्शनहेतुनाति प्रभाववती तां न दहति इत्याह,—पुनश्चेति ॥ २७ ॥

स तथा चिन्तयंस्तत्र देव्या धर्मपरिग्रहम् ।
शुश्राव हनुमांस्तत्र चारणानां महात्मनाम् ॥ २९ ॥
अहो खलु कृतं कर्म दुर्विगाहं हनूमता ।
अग्निं विसृजता तीक्ष्णं भीमं राक्षससद्मनि ॥ ३० ॥
प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला ।
जनकोलाहलाध्माता क्रन्दतीवाद्रिकन्दरैः ॥ ३१ ॥
दग्धेयं नगरी लङ्का साट्टप्राकारतोरणा ।
जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥ ३२ ॥
इति शुश्राव हनुमान् वाचं तामम‍ृतोपमाम् ।
बभूव चास्य मनसो हर्षस्तत्कालसम्भवः ॥ ३३ ॥
सुनिमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ।
ऋषिवाक्यैश्च हनुमानभवत्प्रीतमानसः ॥ ३४ ॥

विनिर्दहेत् । दार्ढ्यविषयवाक्यप्रयोगोऽयमिति ध्येयः । तथा चिन्तयं-श्चारणानां वाक्यं शुश्रावेति योजना ॥ २८ ॥ २९ ॥

दुर्विगाहं दुष्प्राप्यसह्यमित्यर्थः ॥ ३० ॥ ३१ ॥

विस्मय आश्चर्यम् । अद्भुतः अभूतपूर्वः ॥ ३२ ॥

तत्कालसम्भवस्तत्कालजातचारणवाक्यजः ॥ ३३ ॥

दृष्टार्थैर्दृष्टप्रत्ययैर्निमित्तैर्दक्षिणाक्षिस्पन्दनादिभिः कारणैः सीता-रामप्रभावपातिव्रत्यादिरूपैर्ऋषिवाक्यैश्चारणवाक्यैः ॥ ३४ ॥

ततः कपिः प्राप्तमनोरथार्थ-

स्तामक्षतां राजसुतां विदित्वा।

प्रत्यक्षतस्तां पुनरेव दृष्ट्वा

प्रतिप्रयाणाय मतिं चकार ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे

पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

विदित्वा चारणादिवाक्यैः। पुनरेव पुनरपि प्रत्यक्षतो दृष्ट्वा प्रतिप्रयाणाय किष्किन्धां प्रतिगन्तुं मतिं चकार ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके

सुन्दरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## षट्पञ्चाशः सर्गः ।

ततस्तु शिंशपामूले जानकीं पर्य्यवस्थिताम् ।
अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ १ ॥
ततस्तं प्रस्थितं सीता वीक्ष्यमाणा पुनः पुनः ।
भर्त्तुः स्नेहान्विता वाक्यं हनूमन्तमभाषत ॥ २ ॥
यदि त्वं मन्यसे तात ! वसैकाहमिहानघ ! ।
क्वचित्सुसंवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥
मम चैवाल्पभाग्यायाः सान्निध्यात्तव वानर ! ।
शोकस्यास्याप्रमेयस्य मुहूर्त्तं स्यादपि क्षयः ॥ ४ ॥
गते हि हरिशार्दूल ! पुनः सम्प्राप्तये त्वयि ।
प्राणेष्वपि न विश्वासो मम वानरपुङ्गव ! ॥ ५ ॥
अदर्शनञ्च ते वीर ! भूयो मां दारयिष्यति ।
दुःखाद्दुःखतरं प्राप्तां दुर्मनःशोककर्शिताम् ॥ ६ ॥
अयञ्च वीर ! सन्देहस्तिष्ठतीव ममाग्रतः ।
सुमहत्सु सहायेषु हर्य्यृक्षेषु महाबलः ॥ ७ ॥
कथन्नु खलु दुष्पारं सन्तरिष्यन्ति सागरम् ।
तानि हर्य्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥

त्रयाणामेव भूतानां सागरस्यातिलङ्घने ।
शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ ९ ॥
तदत्र कार्य्यनिर्बन्धे समुत्पन्ने दुरासदे ।
किं पश्यसि समाधानं त्वं हि कार्य्यविशारदः ॥ १० ॥
काममस्य त्वमेवैकः कार्य्यस्य परिसाधने ।
पर्य्याप्तः परवीरघ्न ! यशस्यस्ते बलोदयः ॥ ११ ॥
बलैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्द्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १२ ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १३ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ।
निशम्य हनुमान् वीरो वाक्यमुत्तरमब्रवीत् ॥ १४ ॥
देवि ! हर्य्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवः सत्वमम्पन्नस्तवार्थे कृतनिश्चयः ॥ १५ ॥
स वानरसहस्राणां कोटीभिरभिसंवृतः ।
क्षिप्रमेष्यति वैदेहि ! सुग्रीवः प्लवगाधिपः ॥ १६ ॥
तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ ।
आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥ १७ ॥
सगणं राक्षसं हत्वा न चिराद्रघुनन्दनः ।
त्वामादाय वरारोहे ! स्वां पुरीं प्रतियास्यति ॥ १८ ॥

समाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ।
क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ॥ १९ ॥
निहते राक्षसेन्द्रे च सपुत्त्रामात्यबान्धवे ।
त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥ २० ॥
क्षिप्रमेष्यति काकुत्स्थो हर्य्यृक्षप्रवरैर्युतः ।
यस्ते युधि विनिर्जित्य शोकं व्यपनयिष्यति ॥ २१ ॥
एवमाश्वास्य वैदेहीं हनूमान् मारुतात्मजः ।
गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ २२ ॥
राक्षसान् प्रवरान् हत्वा नाम विश्राव्य चात्मनः ।
समाश्वास्य च वैदेहीं दर्शयित्वा परं बलम् ॥ २३ ॥
नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् ।
दर्शयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥ २४ ॥
प्रतिगन्तुं मनश्चक्रे पुनर्मध्येन सागरम् ।
ततः स कपिशार्दूलः स्वामिसन्दर्शनोत्सुकः ॥ २५ ॥
आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्द्दनः ।

इत आरभ्यपुनर्मध्येन सागरमित्यन्तास्तुर्विंशतिश्लोकाः प्राग्व्याख्यातप्राया एव ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ॥ २६ ॥
सोत्तरीयमिवाम्भोदैः शृङ्गान्तरविलम्बिभिः।
बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः ॥ २७ ॥
उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः।
तोयौघनिःस्वनैर्मन्द्रैः प्राधीतमिव सर्वतः ॥ २८ ॥
प्रगीतमिव विस्पष्टं नानाप्रस्रवणस्वनैः।
देवदारुभिरुद्धूतैरूर्द्ध्वबाहुमिव स्थितम् ॥ २९ ॥
प्रपातजलनिर्घोषैः प्राक्रुष्टमिव सर्वतः।
वेपमानमिव श्यामैः कम्पमानैः शरद्घनैः ॥ ३० ॥
वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः।
निःश्वसन्तमिवामर्षाद्घोरैराशीविषोत्तमैः ॥ ३१ ॥

चरितं तदाख्यम्। नीलाभिर्वनराजिभिः। सपरिधानमिवेति शेषः ॥ २६ ॥

सोत्तरीयमिव कण्ठासक्तोत्तरीयधारिणमिव। बोध्यमानमिव रविकिरणस्पर्शेन सर्वेषां तत्रत्यवस्तूनां विकासादिति भावः ॥ २७ ॥

उद्धूतैर्लोचनसदृशैर्धातुभिरुन्मिषन्तमिवेत्युत्प्रेक्षा। प्राधीतमिव उच्चैः प्रारब्धाध्ययनमिव। तत्स्वनानां महत्त्वात् ॥ २८ ॥

प्रगीतमिव प्रारब्धगानमिव। तत्स्वनानां मन्द्रत्वात् ॥ २९ ॥

प्रपातजलनिर्घोषैः प्रपातेभ्यो भृगुदेशेभ्यः पतज्जलशब्दैः प्राक्रुष्टमिवारब्धाक्रोशमिव। सर्वभारिकर्मणि कर्त्तरि क्तप्रत्ययः। शरद्घनैः सम्पूर्णादिशारदवत्सलैः ॥ ३० ॥ ३१ ॥

नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः ।
मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः ॥ ३२ ॥
जृम्भमाणमिवाकाशे शिखरैरभ्रमालिभिः ।
कूटैश्च बहुधाकीर्णं शोभितं बहुकन्दरैः ॥ ३३ ॥
सालतालैश्च कर्णैश्च वंशैश्च बहुभिर्वृतम् ।
लतावितानैर्विततैः पुष्पवद्भिरलङ्कृतम् ॥ ३४ ॥
नानामृगगणैः कीर्णं धातुनिष्यन्दभूषितम् ।
बहुप्रस्रवणोपेतं शिलासञ्चयसङ्कटम् ॥ ३५ ॥
महर्षियक्षगन्धर्वकिन्नरोरगसेवितम् ।
लतापादपसम्बाधं सिंहाधिष्ठितकन्दरम् ॥ ३६ ॥
व्याघ्रादिभिः समाकीर्णं स्वादुमूलफलद्रुमम् ।

नीहारकृतगम्भीरैः नीहारवशेन, तत्तद्दर्शनात्तत्कृतगम्भीरत्वं गह्वराणाम् । ध्यायन्तमिव मुद्रितेन्द्रियद्वारं ध्यानारूढमिव स्थितमित्यर्थः । मेघपादाः मेघप्ररोहास्तन्निभैः पादैः प्रत्यन्तपर्वतैः प्रक्रान्तमिवारब्धगमनमिव ॥ ३२ ॥

अभ्रमालाभिः शिखरैः जृम्भमाणमिव गात्रमोटनं कुर्वाणमिव । कूटैः शृङ्गैः ॥ ३३ ॥

लताद्रूपैर्विस्तृतैर्वितानैः ॥ ३४ ॥

धातुनिष्यन्दैर्धातुनिर्गमैर्भूषितम् । शिलासञ्चयेन शिलासमूहेन सङ्कटं नीरन्ध्रम् ॥ ३५ ॥

आरुरोहानिलसुत: पर्वतं प्लवगोत्तम: ॥ ३७ ॥
रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदित: ।
तेन पादतलक्रान्ता रम्येषु गिरिसानुषु ॥ ३८ ॥
सघोषा: समशीर्य्यन्त शिलाश्चूर्णीकृतास्तत: ।
स तमारुह्य शैलेन्द्रं व्यवर्द्धत महाकपि: ॥ ३९ ॥
दक्षिणादुत्तरं पारं प्रार्थयन् लवणाम्भस: ।
अधिरुह्य ततो वीर: पर्वतं पवनात्मज: ॥ ४० ॥
ददर्श सागरं भीमं भीमोरगनिषेवितम् ।
समारुत इवाकाशं मारुतस्यात्मसम्भव: ॥ ४१ ॥
प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ।
स तदा पीड़ितस्तेन कपिना पर्वतोत्तम: ॥ ४२ ॥
ररास विविधैर्भूतै: प्राविशद्वसुधातलम् ।
कम्पमानैश्च शिखरै: पतद्भिरपि च द्रुमै: ॥ ४३ ॥

लताभिः पादपैश्च सम्बाधं व्याप्तम् ॥ ३६ ॥ ३७ ॥
रामदर्शने शीघ्रेणातिवेगवतोत्कण्ठेनेति यावत्। तेन हनूमता ॥ ३८ ॥ ३९ ॥
प्रार्थयन् गमनप्राप्यत्वेनेच्छन्। अधिरुह्य ततोऽप्यूर्द्धं गत्वा ॥ ४० ॥
स हनुमान्मारुत आकाशमिवोत्तरान्दिशं प्रपेदे मनसा प्राप ॥ ४१ ॥ ४२ ॥
कम्पविशिष्टशिखरपतद्रुमोपलक्षितो वसुधां प्राविशदित्यन्वयः॥४३॥

तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः।
निपेतुर्भूतले भग्नाः शक्रायुधहता इव ॥ ४४ ॥
कन्दरोदरसंस्थानां पीड़ितानां महौजसाम्।
सिंहानां निनदो भीमो नभो भिन्दन् हि शुश्रुवे ॥ ४५ ॥
त्रस्तव्याविद्धवसना व्याकुलीकृतभूषणाः।
विद्याधर्य्यः समुत्पेतुः सहसा धरणीधरात् ॥ ४६ ॥
अतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः।
निपीड़ितशिरोग्रीवा व्यवेष्टन्त महाहयः ॥ ४७ ॥
किन्नरोरगगन्धर्वयक्षविद्याधरास्तथा।
पीड़ितं तं नगवरं त्यक्त्वा गगनमास्थिताः ॥ ४८ ॥
स च भूमिधरः श्रीमान् बलिना तेन पीड़ितः।
सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ॥ ४९ ॥
दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः।
धरण्यां समतां यातः स बभूव धराधरः ॥ ५० ॥

शक्रायुधं वज्रम् ॥ ४४ ॥ ४५ ॥

त्रस्ता अतएव व्याविद्धानि व्यस्तानि वसनानि यासान्ताः ॥ ४६ ॥

व्यवेष्टन्तकुण्डलीकृतशरीरा अजायन्त। व्यचेष्टन्तेति पाठे पीड़या-ऽलुठन्नित्यर्थः ॥ ४७ ॥ ४८ ॥

सवृक्षशिखरैरुदग्र उन्नतो रसातलं प्रविवेश। अंशेन भूसम-शिखराग्रस्थो जात इत्यर्थः ॥ ४९ ॥

स लिलङ्घयिषुर्भीमं सलिलं लवणार्णवम्।
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः॥ ५१॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षट्पञ्चाशः सर्गः॥ ५६॥

तदेव दर्शयति। दर्शेति॥ ५०॥

कल्लोलैरास्फाल्यते स्पृश्यते तादृशो वेलान्तस्तीरप्रान्तो यस्य तं सागरं लिलङ्घयिषुः उत्पपातेति सम्बन्धः॥ ५१॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षट्पञ्चाशः सर्गः॥ ५६॥

## सप्तपञ्चाशः सर्गः ।



आप्लुत्य च महावेगः पक्षवानिव पर्वतः ।
भुजङ्गयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ॥ १ ॥
सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् ।
तिष्यश्रवणकादम्बमभ्रशैवलशाद्वलम् ॥ २ ॥
पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् ।
ऐरावतमहाद्वीपं स्वातीहंसविलासितम् ॥ ३ ॥
वातसङ्घातजालोर्मिचन्द्रांशुशिशिराम्बुमत् ।
हनूमानपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ४ ।

आवप्लुत्य उत्प्लुत्याधारं गगनमर्णवत्वेन वर्णयति । भुजङ्गेत्यादि । भुजङ्गादय एव विकसितानि कमलादिनी यस्मिन् ॥ १ ॥

चन्द्ररूपेण कुमुदेन श्वेतोत्पलेन सहितम् अर्करूपकारण्डवाख्यजलपक्षिसहितम् । अभ्राणि मेघा एव शैवलानि शाद्वलानि च यत्र तम् ॥ २ ॥

लोहिताङ्गो भौमः महाग्रहो महाग्राहः । स्वातीरूपो हंसो विलासितः कृतविलासो यत्र तत् ॥ ३ ॥

वातसङ्घातो वात्या तज्जालं तत्समूह एवोर्मयो यत्र तत् । चन्द्र-

ग्रसमान इवाकाशं ताराधिपमिवोल्लिखन्।
हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥ ५ ॥

अपारमपरिश्रान्तश्चाम्बुधिं समगाहत।
हनूमान् मेघजालानि विकर्षन्निव गच्छति ॥ ६ ॥

पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च।
हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७ ॥

प्रविशन्नभ्रजालानि निष्क्रमंश्च पुनः पुनः।
प्रकाशश्चाप्रकाशश्च चन्द्रमा इव दृश्यते ॥ ८ ॥

विविधाभ्रघनापन्नगोचरो धवलाम्बरः।
दृश्यादृश्यतनुर्वीरस्तथा चन्द्रायतेऽम्बरे ॥ ९ ॥

तार्क्ष्यायमाणो गगने स बभौ वायुनन्दनः।
दारयन् मेघवृन्दानि निष्पतंश्च पुनः पुनः ॥ १० ॥

किरणरूपशीतलजलयुक्ताम्। मधुवार्थः। अत्र सावयवरूपकं गगनस्याम्बरत्वेन चन्द्रादीनां कुमुदादित्वेन च रूपणात् ॥ ४ ॥

ताराधिपमुल्लिखन्निव नखैरिति शेषः। हरन्निव गृह्णन्निव ॥ ५ ॥ ६ ॥

महाभ्राणीत्यस्य कपिना कृष्यमाणानीति शेषः ॥ ७ ॥ ८ ॥

प्रविशन्नित्युक्तमेवार्थं भङ्ग्यन्तरेणाह,—विविधेति। विविधेष्वभ्रघनेषु आपन्नः गोचरो मार्गो येन सः। प्रवेशनिष्क्रमाभ्यां दृश्यादृश्यतनुः। अयं श्लोकः प्रक्षिप्त इति भाति ॥ ९ ॥ १० ॥

नदन्नादेन महता मेघस्वनमहास्वनः ।
प्रवरान् राक्षसान् हत्वा नाम विश्राव्य चात्मनः ॥ ११ ॥
आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् ।
अर्दयित्वा महावीरान् वैदेहीमभिवाद्य च ॥ १२ ॥
आजगाम महातेजाः पुनर्मध्येन सागरम् ।
पर्वतेन्द्रं सुनाभञ्च समुपस्पृश्य वीर्य्यवान् ॥ १३ ॥
ज्यामुक्त इव नाराचो महावेगोऽभ्युपागमत् ।
स किञ्चिदारात्सम्प्राप्तः समालोक्य महागिरिम् ॥ १४ ॥
महेन्द्रमेघसङ्काशो ननाद स महाकपिः ।
स पूरयामास कपिर्दिशो दश समन्ततः ॥ १५ ॥
नदन्नादेन महता मेघस्वनमहास्वनः ।
स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ॥ १६ ॥
ननाद सुमहानादं लाङ्गूलञ्चाप्यकम्पयत् ।
तस्य नानद्यमानस्य सुपर्णाचरिते पथि ॥ १७ ॥
फलतीवास्य घोषेण गगनं सार्कमण्डलम् ।
ये तु तत्रोत्तरे कूले समुद्रस्य महाबलाः ॥ १८ ॥

मेघस्वनवन्महास्वनो यस्य सः ॥ ११ ॥ १२ ॥
सुनाभं मैनाकम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥
लाङ्गूलञ्चाप्यकम्पयदिति स्वभावोक्तिः ॥ १७ ॥

पूर्वं संविष्ठिताः शूरा वायुपुत्रदिदृक्षवः।
महतो वायुनुन्नस्य तोयदस्येव निःस्वनम्।
शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः॥ १९॥
ते दीनमनसः सर्वे शुश्रुवुः काननौकसः।
वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम्॥ २०॥
निशम्य नदतो नादं वानरास्ते समन्ततः।
बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकाङ्क्षिणः॥ २१॥
जाम्बवान् स हरिश्रेष्ठः प्रीतिसंहृष्टमानसः।
उपामन्त्र्य हरीन् सर्वानिदं वचनमब्रवीत्॥ २२॥
सर्वथा कृतकार्य्योऽसौ हनूमान्नात्र संशयः।
न ह्यस्याकृतकार्य्यस्य नाद एवंविधो भवेत्॥ २३॥
तस्य बाहूरुवेगञ्च निनादञ्च महात्मनः।
निशम्य हरयो हृष्टाः समुत्पेतुर्यतस्ततः॥ २४॥

फलतीव विशीर्य्यतीव॥ १८॥

ये पूर्वं संविष्ठितास्ते तोयदनिस्वनमिव ऊरुवेगं तज्जन्यं घोषं शुश्रुवुरित्यन्वयः॥ १९॥

वानरेन्द्रस्य निर्घोषं तदीयसिंहनादम्॥ २०॥

सुहृद्दर्शनकाङ्क्षिणः तेन शब्देन हनूमानेवैतीति निश्चित्य तद्दर्शनलालसाः॥ २१॥ २२॥ २३॥

बाहूरुवेगं तज्जन्यशब्दं निनादञ्च कण्ठशब्दञ्च॥ २४॥

ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ।
प्रहृष्टाः समपद्यन्त हनूमन्तं दिदृक्षवः ॥ २५ ॥
ते प्रीताः पादपाग्रेषु गृह्य शाखामवस्थिताः ।
वासांसि च प्रकाशानि समाविध्यन्त वानराः ॥ २६ ॥
गिरिगह्वरसंलीनो यथा गर्जति मारुतः ।
एवं जगर्ज बलवान् हनूमान् मारुतात्मजः ॥ २७ ॥
तमभ्रघनसङ्काशमापतन्तं महाकपिम् ।
दृष्ट्वा ते वानराः सर्वे तस्थुः प्राञ्जलयस्तदा ॥ २८ ॥
ततस्तु वेगवान् वीरो गिरेर्गिरिनिभः कपिः ।
निपपात गिरेस्तस्य शिखरे पादपाकुले ॥ २९ ॥
हर्षेणापूर्य्यमाणोऽसौ रम्ये पर्वतनिर्झरे ।

नगाग्रात् स्वाश्रयादूर्द्ध्वदेशस्थानि नगाग्राणीत्यर्थः ॥ २५ ॥

ते शाखां गृह्य गृहीत्वा ऊर्द्ध्वदृशा हनूमन्निरीक्षणे पतनभिया शाखां गृहीत्वा धृत्वा पादपाग्रेषु तदग्रशाखासु स्थिताः । वासांसि समाविध्यन्त प्राकम्पयन्त वस्त्रान्तरइवेति भावः । प्रकाशानि निर्मलतया प्रकर्षेण शोभन्ते तादृशानि वासांसि ॥ २६ ॥ २७ ॥

अभ्रं मेघस्तदुपरि यो मेघस्तत्सङ्काशम् अत्युन्नतं मेघसमूहसदृशमित्यर्थमन्ये । सञ्जीवनदातृत्वेन सपूज्यत्वात्प्राञ्जलयः स्थिताः ॥ २८ ॥

ततो गिरेः अरिष्टाख्याद्गिरेः प्लुतः कपिः तस्य महेन्द्रस्य गिरेः शिखरे निपपात । अनेनाविश्रममागमनं ध्वनितम् ॥ २९ ॥

छिन्नपक्ष इवाकाशात्पपात धरणीधरः ॥ ३० ॥
ततस्ते प्रीतमनसः सर्वे वानरपुङ्गवाः ।
हनूमन्तं महात्मानं परिवार्य्योपतस्थिरे ॥ ३१ ॥
परिवार्य्य च ते सर्वे परां प्रीतिमुपागताः ।
प्रहृष्टवदनाः सर्वे तमागतमुपागमन् ॥ ३२ ॥
उपायनानि चादाय मूलानि च फलानि च ।
प्रत्यर्चयन् हरिश्रेष्ठं हरयो मारुतात्मजम् ॥ ३३ ॥
विनेदुर्मुदिताः केचित् केचित्किलकिलां तथा ।
हृष्टाः पादपशाखाश्च आनिन्युर्वानरर्षभाः ॥ ३४ ॥
हनूमांस्तु गुरून् वृद्धान् जाम्बवत्प्रमुखांस्तदा ।
कुमारमङ्गदञ्चैव सोऽवन्दत महाकपिः ॥ ३५ ॥
स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ।
दृष्टा देवीति विक्रान्तः संक्षेपेण न्यवेदयत् ॥ ३६ ॥
निषसाद च हस्तेन गृहीत्वा वालिनः सुतम् ।
रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा ॥ ३७ ॥

छिन्नपक्षो धरणीधर इवाकाशात्पपात । छर्चेयापूर्य्यमाणाः पूर्य्य-माणहृदयः पर्वतनिर्झरे निर्झरप्रवर्त्तके शिखरे इत्यर्थमेके । श्रमनिवृ-त्त्यै जलमेव पतित इत्यन्ये ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥
शाखानयनं हनूमत आसनार्थम् ॥ ३४ ॥ ३५ ॥

हनूमानब्रवीत् पृष्टस्तदा तान् वानरर्षभान्।
अशोकवनिकासंस्था दृष्टा सा जनकात्मजा॥ ३८॥
रक्ष्यमाणा सुघोराभी राक्षसीभिरनिन्दिता।
एकवेणीधरा बाला रामदर्शनलालसा॥ ३९॥
उपवासपरिश्रान्ता मलिना जटिला कृशा।
ततो दृष्टेति वचनं महार्थममृतोपमम्॥ ४०॥
निशम्य मारुतेः सर्वे मुदिता वानराभवन्।
क्ष्वेडन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः॥ ४१॥
चक्रुः किलकिलामन्ये प्रतिगर्जन्ति चापरे।
केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः॥ ४२॥
आयताञ्चितदीर्घाणि लाङ्गूलानि प्रविव्यधुः।
अपरे तु हनूमन्तं श्रीमन्तं वानरोत्तमम्॥ ४३॥
आप्लुत्य गिरिशृङ्गेषु संस्पृशन्ति स्म हर्षिताः।
उक्तवाक्यं हनूमन्तमङ्गदस्तु तदाब्रवीत्॥ ४४॥
सर्वेषां हरिवीराणां मध्ये वाचमनुत्तमाम्।
सत्त्वे वीर्य्ये न ते कश्चित्समो वानर! विद्यते॥ ४५॥

ताभ्यां जाम्बवदङ्गदाभ्यां प्रसादितः प्रसन्नदृष्ट्या कारितात्मनिरीक्षणः॥ ३६॥ ३७॥ ३८॥ ३९॥ ४०॥ ४१॥ ४२॥

आयताञ्चितदीर्घाणि आयामो विस्तारः स्थौल्यमित्यन्ये॥ ४३॥

यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः।
जीवितस्य प्रदाता नस्त्वमेको वानरोत्तम ! ॥ ४६ ॥
त्वत्प्रसादात्समेष्यामः सिद्धार्थो राघवेण ह।
अहो स्वामिनि ते भक्तिरहो वीर्य्यमहो धृतिः ॥ ४७ ॥
दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी।
दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजम् ॥ ४८ ॥
ततोऽङ्गदं हनूमन्तं जाम्बवन्तञ्च वानराः।
परिवार्य्य प्रमुदिता भेजिरे विपुलाः शिलाः ॥ ४९ ॥
उपविष्टा गिरेस्तस्य शिलासु विपुलासु ते।
श्रोतुकामाः समुद्रस्य लङ्घनं वानरोत्तमाः ॥ ५० ॥
दर्शनञ्चापि लङ्कायाः सीताया रावणस्य च।
तस्थुः प्राञ्जलयः सर्वे हनूमद्वदनोन्मुखाः ॥ ५१ ॥
तस्थौ तत्राङ्गदः श्रीमान् वानरैर्बहुभिर्वृतः।
उपास्यमानो विविधैर्दिवि देवपतिर्यथा ॥ ५२ ॥
हनूमता कीर्त्तिमता यशस्विना
तथाङ्गदेनाङ्गदनद्धबाहुना।

गिरिशृङ्गेषु आप्लुत्य तेभ्य आप्लुत्येत्यर्थः ॥ ४४ ॥ ४५ ॥ ४६ ॥

समेष्यामः सङ्गता भविष्यामः। अहो इति तत्र स्वामिभक्त्यादिक-माश्चर्य्यमित्यर्थः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

विविधैर्देवैरुपास्यमान इत्यर्थः ॥ ५२ ॥

मुदा तदाध्यासितमुन्नतं महत्
महीधराग्रं ज्वलितं श्रियाभवत् ॥ ५३ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
सप्तपञ्चाशः सर्गः ॥ ५७ ॥

कीर्त्तिमता हनूमता यशस्विनाङ्गदेनेत्यर्थः । ज्वलितं युक्तम् ॥ ५३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ।



ततस्तस्य गिरेः शृङ्गे महेन्द्रस्य महाबलाः ।
हनूमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥ १ ॥
प्रीतिमत्सूपविष्टेषु वानरेषु महात्मसु ।
तं ततः प्रतिसंहृष्टः प्रीतियुक्तं महाकपिम् ॥ २ ॥
जाम्बवान् कार्य्यवृत्तान्तमपृच्छदनिलात्मजम् ।
कथं दृष्टा त्वया देवी कथं वा तत्र वर्त्तते ॥ ३ ॥
तस्याश्चापि कथं वृत्तः क्रूरकर्मा दशाननः ।
तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ! ॥ ४ ॥
सम्मार्गिता कथं देवी किञ्च सा प्रत्यभाषत ।
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्य्यविनिश्चयम् ॥ ५ ॥
यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् ।
रक्षितव्यश्च यत्तत्र तद्भवान् व्याकरोतु नः ॥ ६ ॥

हनूमत्प्रमुखाः परस्परं मिलिताः इति शेषः ॥ १ ॥ २ ॥
कार्य्यविषयं वृत्तान्तम् ॥ ३ ॥
कथं वृत्तः कीदृग्व्यापारः ॥ ४ ॥ ५ ॥

स नियुक्तस्ततस्तेन सम्प्रहृष्टतनूरुहः ।
नमस्यन् शिरसा देव्यै सीतायै प्रत्यभाषत ॥ ७ ॥
प्रत्यक्षमेव भवतां महेन्द्राग्रात् खमाप्लुतः ।
उदधेर्दक्षिणं पारं काङ्क्षमाणः समाहितः ॥ ८ ॥
गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् ।
काञ्चनं शिखरं दिव्यं पश्यामि सुमनोहरम् ॥ ९ ॥
स्थितं पन्थानमावृत्य मेने विघ्नञ्च तं नगम् ।
उपसङ्गम्य तं दिव्यं काञ्चनं नगमुत्तमम् ॥ १० ॥
कृता मे मनसा बुद्धिर्भेत्तव्योऽयं मयेति च ।
प्रहतस्य मया तस्य लाङ्गूलेन महागिरेः ॥ ११ ॥
शिखरं सूर्य्यसङ्काशं व्यशीर्य्यत सहस्रधा ।
व्यवसायञ्च तं बुध्वा सहोवाच महागिरिः ॥ १२ ॥
पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव ।
पितृव्यञ्चापि मां विद्धि सखायं मातरिश्वनः ॥ १३ ॥

चिन्तनीयनिश्चयमेवाह,—यस्येति । रक्षितव्यं रामसन्निधौ गोपनीयम् । अवक्तव्यमिति यावत् । अवक्तव्यञ्च यत्तच्चिन्तयिष्यामिऽतस्तत् एतत् सर्वमात्मवान् भवान् व्याकरोतु ॥ ६ ॥ ७ ॥ ८ ।

विघ्नरूपमिवेत्युक्तं तदेवाह,—काञ्चनमिति । पश्यामि दृष्टमित्यर्थः । तदाश्चर्य्यत्वादद्यापि पश्यामीत्यर्थः ॥ ९ ॥

मेने लिडुत्तमपुरुषैकवचनम् । उपसङ्गम्य प्राप्य ॥ १० ॥ ११ ॥

मैनाकमिति विख्यातं निवसन्तं महोदधौ।
पक्षवन्तः पुरा तत्र बभूवुः पर्वतोत्तमाः॥ १४॥
छन्दतः पृथिवीञ्चेरुर्बाधमानाः समन्ततः।
श्रुत्वा नगानाञ्चरितं महेन्द्रः पाकशासनः॥ १५॥
वज्रेण भगवान् पक्षौ चिच्छेदैषां सहस्रशः।
अहन्तु मोचितस्तस्मात्तव पित्रा महात्मना॥ १६॥
मारुतेन तदा वत्स! प्रक्षिप्तो वरुणालये।
राघवस्य मया साह्ये वर्त्तितव्यमरिन्दम!॥ १७॥
रामो धर्मभृतां श्रेष्ठो महेन्द्रसमविक्रमः।
एतच्छ्रुत्वा मया तस्य मैनाकस्य महात्मनः॥ १८॥
कार्य्यमावेद्य च गिरेरुद्धतं वै मनो मम।
तेन चाहमनुज्ञातो मैनाकेन महात्मना॥ १९॥
स चाप्यन्तर्हितः शैलो मानुषेण वपुष्मता।
शरीरेण महाशैलः शैलेन च महोदधौ॥ २०॥
उत्तमं जवमास्थाय शेषमध्वानमास्थितः।

व्यवसायं स्वभेदनरूपम्॥ १२॥ १३॥ १४॥
छन्दतः स्वेच्छयेत्यर्थः। चरितं प्रजाबाधनरूपम्॥ १५॥ १६॥
मोचनप्रकारमाह,—मारुतेनेति। साह्ये साहाय्ये॥ १७॥
तत्र हेतुर्धर्मभृतां श्रेष्ठत्वादि॥ १८॥
उद्धतम् अग्रे चलितम्॥ १९॥

ततोऽहं सुचिरं कालं जवेनाभ्यगमं पथि ॥ २१ ॥
ततः पश्चाद्यहं देवीं सुरसां नागमातरम् ।
समुद्रमध्ये सा देवी वचनञ्चेदमब्रवीत् ॥ २२ ॥
मम भक्ष्यः प्रदिष्टस्त्वममरैर्हरिसत्तम ! ।
ततस्त्वां भक्षयिष्यामि विहितस्त्वं हि मे सुरैः ॥ २३ ॥
एवमुक्तः सुरसया प्राञ्जलिः प्रणतः स्थितः ।
विवर्णवदनो भूत्वा वाक्यञ्चेदमुदीरयन् ॥ २४ ॥
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ।
लक्ष्मणेन सह भ्रात्रा सीतया च परन्तपः ॥ २५ ॥
तस्य सीता हृता भार्य्या रावणेन दुरात्मना ।
तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ २६ ॥
कर्त्तुमर्हसि रामस्य साहाय्यं विषये सति ।
अथवा मैथिलीं दृष्ट्वा रामञ्चाक्लिष्टकारिणम् ॥ २७ ॥
आगमिष्यामि ते वक्त्रं सत्यं प्रति शृणोमि ते ।
एवमुक्ता मया सा तु सुरसा कामरूपिणी ॥ २८ ॥

स शैलो मानुषेण वपुष्मता प्रशस्तेन शरीरेण महाशैलोऽन्तर्हितः शैलेन शिलारूपेण च महोदधावन्तर्हित इत्यन्वयः ॥ २० ॥ २१ ॥ २२ ॥

प्रदिष्टो विहित इत्यर्थः । विहितः प्रापित इत्यर्थः ॥ २३ ॥ २४ ॥ ॥ २५ ॥

सकाशं समीपम् ॥ २६ ॥

अब्रवीन्नातिवर्त्तेत कश्चिदेष वरो मम ।
एवमुक्तः सुरसया दशयोजनमायतः ॥ २९ ॥
ततोऽर्द्धगुणविस्तारो बभूवाहं क्षणेन तु ।
मत्प्रमाणाधिकञ्चैव व्यादितन्तु मुखं तया ॥ ३० ॥
तत् दृष्ट्वा व्यादितन्त्वास्यं ह्रस्वं ह्यकरवं पुनः ।
तस्मिन् मुहूर्त्ते च पुनर्बभूवाङ्गुष्ठसम्मितः ॥ ३१ ॥
अभिपत्याशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् ।
अब्रवीत्सुरसा देवी स्वेन रूपेण मां पुनः ॥ ३२ ॥
अर्थसिद्ध्यै हरिश्रेष्ठ ! गच्छ सौम्य ! यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ॥ ३३ ॥
सुखी भव महाबाहो ! प्रीतास्मि तव वानर ! ।

विषये सति तदीयदेशे सति विद्यमाने मैथिलीदर्शननिवेदनार्थं रामस्य दृष्ट्वा ॥ २७ ॥ २८ ॥

नातिवर्त्तेत नातिक्रमेत मां प्राप्तो मदाहारतां प्राप्तो न गच्छेदित्यर्थः ॥ २९ ॥

अर्द्धगुणविस्तारः अर्द्धस्य दशयोजनार्द्धस्य पञ्चयोजनस्य गुणा आवृत्तिस्तद्विस्तारः । दशयोजनविस्तार इति यावत् । पूर्वं दशयोजनविस्तारोक्त्यानुगुण्येनैवं व्याख्यातम् ॥ ३० ॥

ह्रस्वं स्वशरीरमिति शेषः । तदेवाहाङ्गुष्ठसम्मित इति । देह इति शेषः ॥ ३१ ॥ ३२ ॥

समानय मेलय ॥ ३३ ॥

ततोऽहं साधु साध्वीति सर्वभूतैः प्रशंसितः ॥ ३४ ॥
ततोऽन्तरीचं विपुलं प्लुतोऽहं गरुड़ो यथा।
छाया मे निगृहीता च न च पश्यामि किञ्चन ॥ ३५ ॥
सोऽहं विगतवेगस्तु दिशो दश विलोकयन्।
न किञ्चित्तत्र पश्यामि येन मे विहता गतिः ॥ ३६ ॥
अथ मे बुद्धिरुत्पन्ना किन्नाम गमने मम।
ईदृशो विघ्न उत्पन्नो रूपमत्र न दृश्यते ॥ ३७ ॥
अधोभागे तु मे दृष्टिः शोचतः पतिता तदा।
तत्राद्राचमहं भीमां राचसीं सलिलेशयाम् ॥ ३८ ॥
प्रहस्य च महानादमुक्तोऽहं भीमया तया।
अवस्थितमसम्भ्रान्तमिदं वाक्यमशोभनम् ॥ ३९ ॥
क्वासि गन्ता महाकाय ! चुधिताया ममेप्सितः।
भचः प्रीणय मे देहं चिरमाहारवर्जितम् ॥ ४० ॥
बाढ़मित्येव तां वाणीं प्रत्यगृह्णामहं ततः।
आस्यप्रमाणादधिकं तस्याः कायमपूरयम् ॥ ४१ ॥

साधु साध्वीति। अत्र दीर्घ आर्षः ॥ ३४ ॥ ३५ ॥
येन गतिर्निहता तत्किञ्चिन्न पश्यामि नापश्यमित्यन्वयः ॥३६॥३७॥३८॥
अवस्थितं निश्चयम्। तथाप्यसम्भ्रान्तं भयहीनं मां लच्चीकृत्येदं वाक्यमहमुक्त इत्यन्वयः ॥ ३९ ॥
ममेप्सितो भच्यस्त्वमतो मे देहं प्रीणयेत्यन्वयः ॥ ४० ॥

तस्याश्चास्यं महद्भीमं वर्द्धते मम भक्षणे।
न तु मां सानुबुबुधे मम वा विकृतं कृतम्॥ ४२॥
ततोऽहं विपुलं रूपं संक्षिप्य निमिषान्तरात्।
तस्या हृदयमादाय प्रपतामि नभःस्थलम्॥ ४३॥
सा विसृष्टभुजा भीमा पपात लवणाम्भसि।
मया पर्वतसङ्काशा निकृत्तहृदया सती॥ ४४॥
शृणोमि खगतानाञ्च वाचः सौम्या महात्मनाम्।
राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता॥ ४५॥
तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन्।
गत्वा च महदध्वानं पश्यामि नगमण्डितम्॥ ४६॥
दक्षिणं तीरमुदधेर्लङ्का यत्र गता पुरी।
अस्तं दिनकरे याते रक्षसां निलयां पुरीम्॥ ४७॥

प्रत्यगृह्लाम् अङ्गीकृतवान्। तस्या आस्यं प्रमाणादधिकं भवति यथा तथा आत्मनः कायमपूरयम् अवर्द्धयम्॥ ४१॥

मां सा न बुबुधे। अयं कामरूपी सर्वविघ्ननिर्दलन इति मां न ज्ञातवतीत्यर्थः। मम कृतं विकृतं मया कृतं विकृतं विकाररूपं वक्ष्यमाणसूक्ष्मरूपत्वञ्च न बुबुधे॥ ४२॥

तदेवाह,—तत इति। आदाय कर्त्तित्वा। प्रपतामि प्रापतम्॥ ४३॥

विसृष्टभुजा विप्रकीर्णभुजा॥ ४४॥

सिंहिका हनुमताहतेति खगतानां वाचः शृणोमि स्मा॥ ४५॥

प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः।
तत्र प्रविशतश्चापि कल्पान्तघनसप्रभा ॥ ४८ ॥
अट्टहासं विमुञ्चन्ती नारी काप्युत्थिता पुरः।
जिघांसन्तीं ततस्तान्तु ज्वलदग्निशिरोरुहाम् ॥ ४९ ॥
सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम्।
प्रदोषकाले प्रविशं भीतयाहं तयोदितः ॥ ५० ॥
अहं लङ्का पुरी वीर! निर्जिता विक्रमेण ते।
यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः ॥ ५१ ॥
तत्राहं सर्वरात्रन्तु विचरन् जनकात्मजाम्।
रावणान्तःपुरगतो न चापश्यं सुमध्यमाम् ॥ ५२ ॥
ततः सीतामपश्यंस्तु रावणस्य निवेशने।
शोकसागरमासाद्य न पारमुपलक्षये ॥ ५३ ॥
शोचता च मया दृष्टं प्राकारेणाभिसंवृतम्।

आत्ययिकं जातकालविलम्बम्। कृत्यं सीतादर्शनम्। स्मरन्नेव महदध्वानं गत्वा उदधेर्दक्षिणं तीरं पश्यामि दृष्टवान् ॥४६।४७॥४८॥

मां जिघांसन्तीम्। ज्वलदग्नितुल्यकेशपाशाम् ॥ ४९ ॥

सुभैरवाम् अतिशयेन भयङ्कररूपाम्। प्रविशं प्राविशम् ॥५०॥५१॥

सर्वरात्रं सर्वां रात्रीम्। अल्पशेषायां रात्रावशोकवनिकायां दर्शनादेवमुक्तिः ॥ ५२ ॥

उपलक्षये उपालक्षयम् ॥ ५३ ॥

काञ्चनेन विकृष्टेन गृहोपवनमुत्तमम् ॥ ५४ ॥
सप्राकारमवप्लुत्य पश्यामि बहुपादपम्।
अशोकवनिकामध्ये शिंशपापादपो महान् ॥ ५५ ॥
तमारुह्य च पश्यामि काञ्चनं कदलीवनम्।
अदूराच्छिंशपावृक्षात् पश्यामि वरवर्णिनीम् ॥ ५६ ॥
श्यामां कमलपत्राक्षीमुपवासकृशाननाम्।
तदेकवासःसंवीतां रजोध्वस्तशिरोरुहाम् ॥ ५७ ॥
शोकसन्तापदीनाङ्गीं सीतां भर्तृहिते स्थिताम्।
राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम् ॥ ५८ ॥
मांसशोणितभक्ष्याभिर्व्याघ्रीभिर्हरिणीं यथा।
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ ५९ ॥

विकृष्टेन विप्रकृष्टोर्द्धभागेन। अत्युच्चेनेति यावत्। तादृशेन प्रासादेनावृतं किञ्चित् स्थानं मया दृष्टम् ॥ ५४ ॥

ततः प्राकारमवप्लुत्य बहुपादपं गृहोपवनमुद्यानं पश्यामि अपश्यम्। महान् पादपो दृष्ट इति शेषः ॥ ५५ ॥

पश्यामीति प्राग्वत्। काञ्चनं तद्वर्णम्। अदूराच्छिंशपावृक्षात् शिंशपावृक्षस्य समीपे ॥ ५६ ॥

तदेकवासःसंवीतां तेन हरणकाले किष्किन्धायां पूर्वं दृष्टेनैवैकवाससा संवीताम् ॥ ५७ ॥ ५८ ॥

व्याघ्रीपरिवृतां हरिणीमिव तामपश्यमिति सम्बन्धः। राक्षसी

एकवेणीधरा दीना भर्तृचिन्तापरायणा ।
भूमिशय्याविवर्णाङ्गी पद्मिनीव हिमागमे ॥ ६० ॥
रावणाद्विनिवृत्तार्था मर्त्तव्ये कृतनिश्चया ।
कथञ्चिन्मृगशावाक्षी तूर्णमासादिता मया ॥ ६१ ॥
तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् ।
तत्रैव शिंशपावृक्षे पश्यन्नहमवस्थितः ॥ ६२ ॥
ततो हलाहलाशब्दं काञ्चीनूपुरमिश्रितम् ।
शृणोम्यधिकगम्भीरं रावणस्य निवेशने ॥ ६३ ॥
ततोऽहं परमोद्विग्नः स्वरूपं प्रत्यसंहरम् ।
अहञ्च शिंशपावृक्षे पक्षीव गहने स्थितः ॥ ६४ ॥
ततो रावणदाराश्च रावणश्च महाबलः ।
तं देशमनुसम्प्राप्तो यत्र सीताऽभवत् स्थिता ॥ ६५ ॥

मध्ये ताभिरेव तर्ज्यमाना सा । संदुःखा मया कथञ्चिदासादितेत्यन्वयः ॥ ५९ ॥ ६० ॥

रावणाद्विनिवृत्तो विनिवर्त्तितोऽर्थः सुखभोगरूपो यया । मर्त्तव्ये मरणे ॥ ६१ ॥ ६२ ॥

शृणोमि श्रुतवान् । रावणस्य निवेशने तत्समीपे । यद्वा निवेशने सीतासमीपं प्रवेशनकाले ॥ ६३ ॥

प्रत्यसंहरं सूक्ष्ममकरवम् । गहने स्थितः पर्णसमूहगूढप्रदेशे ॥ ६४ ॥ ६५ ॥

तं दृष्ट्वाथ वरारोहा सीता रक्षोगणेश्वरम्।
सङ्कुच्योरूस्तनौ पीनौ बाहुभ्यां परिरभ्य च ॥ ६६ ॥
वित्रस्तां परमोद्विग्नां वीक्ष्यमाणामितस्ततः।
त्राणं कञ्चिदपश्यन्तीं वेपमानां तपस्विनीम् ॥ ६७ ॥
तामुवाच दशग्रीवः सीतां परमदुःखिताम्।
अवाक्शिराः प्रपतितो बहुमन्यस्व मामिति ॥ ६८ ॥
यदि चेत्त्वन्तु मां दर्पान्नाभिनन्दसि गर्विते !।
द्विमासानन्तरं सीते ! पास्यामि रुधिरं तव ॥ ६९ ॥
एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः।
उवाच परमक्रुद्धा सीता वचनमुत्तमम् ॥ ७० ॥
राक्षसाधम ! रामस्य भार्य्यामिमिततेजसः।
इक्ष्वाकुवंशनाथस्य स्नुषां दशरथस्य च ॥ ७१ ॥
अवाच्यं वदतो जिह्वा कथं न पतिता तव।
किंस्विद्वीर्य्यं तवानार्य्य ! यो मां भर्त्तुरसन्निधौ ॥ ७२ ॥
अपहृत्यागतः पाप ! तेनादृष्टो महात्मना।
न त्वं रामस्य सदृशो दास्येप्यस्य न युज्यसे ॥ ७३ ॥

परिरभ्य चेति। वित्रस्तेव बभूवेति शेषः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ ७१ ॥

किं स्वित् कुत्सितमित्यर्थः ॥ ७२ ॥

अजेयः सत्यवाक् शूरो रणश्लाघी च राघवः ।
जानक्या परुषं वाक्यमेवमुक्तो दशाननः ॥ ७४ ॥
जज्वाल सहसा कोपाच्चितास्थ इव पावकः ।
विवृत्तनयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् ॥ ७५ ॥
मैथिलीं हन्तुमारब्धः स्त्रीभिर्हाहाकृतं तदा ।
स्त्रीणां मध्यात्समुत्पत्य तस्य भार्य्या दुरात्मनः ॥ ७६ ॥
वरा मन्दोदरी नाम तया स प्रतिषेधितः ।
उक्तश्च मधुरां वाणीं तया स मदनार्दितः ॥ ७७ ॥
सीतया तव किं कार्य्यं महेन्द्रसमविक्रम ! ।
मया सह रमस्वाद्य मद्विशिष्टा न जानकी ॥ ७८ ॥
देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च ।
सार्द्धं प्रभो ! रमस्वेति सीतया किं करिष्यति ॥ ७९ ॥
ततस्ताभिः समेताभिर्नारीभिः स महाबलः ।
उत्थाप्य सहसा नीतो भवनं स्वं निशाचरः ॥ ८० ॥

तदसन्निधा अपहृत्य तेनाहृत्य इति लङ्कामागतः । अन्यथा तदैव ते हननं स्यादित्यर्थः । सादृश्यसम्भावनाऽपि दूरापास्तेत्याह,—दास्येपीति ॥ ७३ ॥ ७४ ॥

चितास्थपावकत्वेनास्पृश्यता सूचिता ॥ ७५ ॥

हाहाकृतं हाहेति कृतम् ॥ ७६ ॥

याते तस्मिन् दशग्रीवे राक्षस्यो विकृताननाः ।
सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ॥ ८१ ॥
तृणवद्भाषितं तासां गणयामास जानकी ।
गर्जितञ्च तथा तासां सीतां प्राप्य निरर्थकम् ॥ ८२ ॥
वृथागर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः ।
रावणाय शशंसुस्ताः सीताध्यवसितं महत् ॥ ७३ ॥
ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः ।
परिक्लिश्य समस्तास्ता निद्रावशमुपागताः ॥ ८४ ॥
तासु चैव प्रसुप्तासु सीता भर्तृहिते रता ।
विलप्य करुणं दीना प्रशुशोच सुदुःखिता ॥ ८५ ॥
तासां मध्यात्समुत्थाप्य त्रिजटा वाक्यमब्रवीत् ।

मन्दोदरी नामेति । पूर्वं धान्यमालिन्या प्रतिषिद्धम् इत्युक्तम् । इदानीं मन्दोदर्येति अभिधानादुभाभ्यामपीति कल्पनीयम् । यद्वा मन्दोदर्य्या एव नामान्तरं धान्यमालिनीत्युक्तम् ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥

निरर्थकमासीदिति शेषः ॥ ८२ ॥

सीताध्यवसितं महत् मर्त्तव्यं न तु त्वमङ्गीकर्त्तव्य इत्येतद्रूपम् ॥ ८३ ॥

विहताशाः रावणानुकूल्यमस्माभिरवश्यं सम्पाद्यमिति तासामाशा । अतएव तद्विषये निरुद्यमाः परिक्लिश्य पूर्वव्यापारजनितः क्लेशः ॥ ८४ ॥

आत्मानं खादत क्षिप्रं न सीतामसितेक्षणाम् ॥ ८६ ॥
जनकस्यात्मजां साध्वीं स्नुषां दशरथस्य च ।
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ॥ ८७ ॥
रक्षसाञ्च विनाशाय भर्त्तुरस्या जयाय च ।
अलमस्मान् परित्रातुं राघवाद्राक्षसीगणम् ॥ ८८ ॥
अभियाचाम वैदेहीमेतद्धि मम रोचते ।
यदि ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते ॥ ८९ ॥
सा दुःखैर्विविधैर्मुक्ता सुखमाप्नोत्यनुत्तमम् ।
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ ९० ॥
अलमेषा परित्रातुं राक्षस्यो महतो भयात् ।
ततः सा ह्रीमती बाला भर्त्तुर्विजयहर्षिता ॥ ९१ ॥
अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ।

विलप्य प्रशुशोच । विलापपूर्वकं शोकञ्चकार ॥ ८५ ॥ ८६ ॥

रक्षोविनाशकत्वाद्रोमहर्षणः ॥ ८७ ॥

राक्षसीगणमस्मान् राक्षसीरूपानस्मान् परित्रातुमलमेषा सीतेति शेषः ॥ ८८ ॥ १

अभियाचाम शरण्यामिति शेषः ॥ ८९ ॥ ९० ॥

ततस्त्रिजटावाक्यानन्तरम् । ह्रीतावद्भाग्यमिति लज्जिता । तत्कथितस्वप्नसूचितरामविजयहर्षिता ॥ ९१ ॥

ताञ्चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ॥ ९२ ॥
चिन्तयामास विश्रान्तो न च मे निर्वृतं मनः।
सम्भाषणार्थे च मया जानक्याश्चिन्तितो विधिः ॥ ९३ ॥
इक्ष्वाकुकुलवंशस्तु स्तुतो मम पुरस्कृतः।
श्रुत्वा तु गदितां वाचं राजर्षिगणभूषिताम् ॥ ९४ ॥
प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना।
कस्त्वं केन कथञ्चेह प्राप्तो वानरपुङ्गव ! ॥ ९५ ॥
का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि।
तस्यास्तद्वचनं श्रुत्वा अहमप्यब्रुवं वचः ॥ ९६ ॥
देवि ! रामस्य भर्त्तुस्ते सहायो भीमविक्रमः।
सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ॥ ९७ ॥
तस्य मां विद्धि भृत्यन्त्वं हनूमन्तमिहागतम्।
भर्त्रा सम्प्रहितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥ ९८ ॥

तत्त्रिजटावाक्यं यदि तथ्यं तदा अवश्यं प्रत्ययं भवेयमित्यवोचदिति सम्बन्धः ॥ ९२ ॥

चिन्तयामासेति। लिडुत्तमः। ईदृश्या अपीदृशं दुःखमिति चिन्तां कृतवानित्यर्थः। मे मनो न च निर्वृतं न चिन्तारहितं जातं विधिः प्रकारः ॥ ९३ ॥

मम स्तुतो मया स्तुतः ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥

इदन्तु पुरुषव्याघ्रः श्रीमान् दाशरथिः स्वयम् ।
अङ्गुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ! ॥ ९९ ॥
तदिच्छामि त्वयाज्ञप्तं देवि ! किं करवाण्यहम् ।
रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम् ॥ १०० ॥
एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ।
आह रावणमुत्पाट्य राघवो मां नयत्विति ॥ १०१ ॥
प्रणम्य शिरसा देवीम् अहमार्य्यामनिन्दिताम् ।
राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥ १०२ ॥
अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः ।
मणिर्येन महाबाहू रामस्त्वां बहुमन्यते ॥ १०३ ॥
इत्युक्त्वा तु वरारोहा मणिप्रवरमुत्तमम् ।
प्रायच्छत्परमोद्विग्ना वाचा मां सन्दिदेश ह ॥ १०४ ॥
ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ।

तुभ्य भर्त्रा तव भर्त्रा ॥ ९८ ॥ ९९ ॥

त्वयाज्ञप्तं त्वत्कर्तृकमाज्ञापनम् । उत्तरं समुद्रोत्तरकूलस्थम् । यद्वा किमुत्तरं प्रत्युत्तरं किं ब्रूहीति शेषः ॥ १०० ॥

उत्पाट्य समूलं नाशयित्वा ॥ १०१ ॥ १०२ ॥ १०३ ॥

सन्दिदेश काकवृत्तान्तं तिलककरणञ्च राममात्रैकवेद्यं कथयामासेत्यर्थः ॥ १०४ ॥

प्रदक्षिणं परिक्रामम्मिष्टाभ्युद्गतमानसः ॥ १०५ ॥
उत्तरं पुनरेवाह निश्चित्य मनसा तदा।
हनूमन्! मम वृत्तान्तं वक्तुमर्हसि राघवे ॥ १०६ ॥
यथा श्रुत्वैव न चिरात्तावुभौ रामलक्ष्मणौ।
सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥ १०७ ॥
यदन्यथा भवेदेतत् द्वौ मासौ जीवितं मम।
न मां द्रक्ष्यति काकुत्स्थो म्रिये साहमनाथवत् ॥ १०८ ॥
तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्त्तत।
उत्तरञ्च मया दृष्टं कार्य्यशेषमनन्तरम् ॥ १०९ ॥
ततोऽवर्द्धत मे कायस्तदा पर्वतसन्निभः।
युद्धाकाङ्क्षी वनं तस्य विनाशयितुमारभे ॥ ११० ॥
तद्भग्नं वनखण्डन्तु भ्रान्तत्रस्तमृगद्विजम्।
प्रतिबुद्धा निरीक्ष्यन्ते राक्षस्यो विकृताननाः ॥ १११ ॥
माञ्च दृष्ट्वा वने तस्मिन् समागम्य ततस्ततः।

इष्टाभ्युद्गतमानसः इष्टागन्तुं निश्चितमानसः। मम वृत्तान्तं मद्विषयं रावणराक्षसीवृत्तान्तम् ॥ १०५ ॥ १०६ ॥ १०७ ॥

यद्यस्मादन्यथा अनागमने द्वौ मासौ मम जीवितं भवेत्। अनाथवत् म्रिये राक्षसीकृतवधेनेति भावः ॥ १०८ ॥

उत्तरं कार्य्यशेषं लङ्कानाशनरूपम् ॥ १०९ ॥ ११० ॥ १११ ॥

ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे ॥ ११२ ॥

राजन् ! वनमिदं दुर्गं तव भग्नं दुरात्मना ।

वानरेण ह्यविज्ञाय तव वीर्य्यं महाबल ! ॥ ११३ ॥

तस्य दुर्बुद्धिता राजन् ! तव विप्रियकारिणः ।

बधमाज्ञापय क्षिप्रं यथासौ न पुनर्व्रजेत् ॥ ११४ ॥

तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा बहुदुर्जयाः ।

राक्षसाः किङ्करा नाम रावणस्य मनोनुगाः ॥ ११५ ॥

तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ।

मया तस्मिन् वनोद्देशे परिघेण निषूदितम् ॥ ११६ ॥

तेषान्तु हतशिष्टा ये ते गता लघुविक्रमाः ।

निहतञ्च मया सैन्यं रावणायाचचक्षिरे ॥ ११७ ॥

ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमुत्तमम् ।

तत्रस्थान् राक्षसान् हत्वा शतं स्तम्भेन वै पुनः ॥ ११८ ॥

ललामभूतो लङ्काया मया विध्वंसितो रुषा ।

ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् ॥ ११९ ॥

समागम्य चिक्षिता ॥ ११२ ॥ ११३ ॥

तस्य दुर्बुद्धितेति बहुव्रीहिरेतत् । न पुनर्व्रजेत् स्वदेशमिति शेषः ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥

चैत्यप्रासादं विनाशयितुमिति शेषः ॥ ११८ ॥

राक्षसैर्बहुभिः सार्द्धं घोररूपैर्भयानकैः।
तमहं बलसम्पन्नं राक्षसं रणकोविदम् ॥ १२० ॥
परिघेणातिघोरेण सूदयामि महानुगम्।
तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान् महाबलान् ॥ १२१ ॥
पदातिबलसम्पन्नान् प्रेषयामास रावणः।
परिघेणैव तान् सर्वान्नयामि यमसादनम् ॥ १२२ ॥
मन्त्रिपुत्रान हतांश्रुत्वा समरे लघुविक्रमान्।
पञ्चसेनाग्रगान् शूरान प्रेषयामास रावणः ॥ १२३ ॥
तानहं सहसैन्यान् वै सर्वानिवाभ्यसूदयम्।
ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥ १२४ ॥
बहुभीराक्षसैः सार्द्धं प्रेषयामास संयुगे।
तन्तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ॥ १२५ ॥
सहसा खं समुद्यन्तं पादयोश्च गृहीतवान्।
तमासीनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥ १२६ ॥
तमक्षमागतं भग्नं निशम्य स दशाननः।
ततश्चेन्द्रजितं नाम द्वितीयं रावणः सुतम् ॥ १२७ ॥
व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम्।

ललामभूतश्चैत्यप्रासाद इति शेषः ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥
॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥

तस्याप्यहं बलं सर्वं तञ्च राक्षसपुङ्गवम् ॥ १२८ ॥
नष्टौजसं रणे ज्ञात्वा परं हर्षमुपागतः ।
महतापि महाबाहुः प्रत्ययेन महाबलः ॥ १२९ ॥
प्रहितो रावणेनैषः सह वीरैर्मदोद्धतैः ।
सोऽविषह्यं हि मां बुध्वा स्वसैन्यञ्चावमर्दितम् ॥ १३० ॥
ब्रह्मणोऽस्त्रेण स तु मां प्रबध्वा चातिवेगिनः ।
रज्जुभिश्चापि बध्नन्ति ततो मां तत्र राक्षसाः ॥ १३१ ॥
रावणस्य समीपञ्च गृहीत्वा मामुपागमन् ।
दृष्ट्वा सम्भाषितश्चाहं रावणेन दुरात्मना ॥ १३२ ॥
पृष्टश्च लङ्कागमनं राक्षसानाञ्च तं बधम् ।
तत्सर्वञ्च रणे तत्र सीतार्थमुपजल्पितम् ॥ १३३ ॥
तस्यास्तु दर्शनाकाङ्क्षी प्राप्तस्त्वद्भवनं विभो ! ।
मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥ १३४ ॥
रामदूतञ्च मां विद्धि सुग्रीवसचिवं कपिम् ।

द्वितीयम् । प्रेषितपुत्रापेक्षया द्वितीयम् ॥ १२७ ॥ १२८ ॥
महता प्रत्ययेन विश्वासेन ॥ १२९ ॥ १३० ॥
प्रबध्वा प्रबध्य राक्षसेभ्योऽर्पयदिति शेषः । बध्नन्ति अबध्नन् ॥ १३१ ॥ १३२ ॥
सीतार्थमिति कथितमित्यर्थः ॥ १३३ ॥

सोऽहं दौत्येन रामस्य त्वत्सकाशमिहागतः ॥ १२५ ॥
शृणु चापि समादेशं यदहं प्रब्रवीमि ते ।
राक्षसेश ! हरीशस्त्वां वाक्यमाह समाहितम् ॥ १२६ ॥
सुग्रीवश्च महाभाग ! स त्वां कौशलमब्रवीत् ।
धर्मार्थकामसहितं हितं पथ्यमुवाच ह ॥ १२७ ॥
वसतो ऋष्यमूके मे पर्वते विपुलद्रुमे ।
राघवो रणविक्रान्तो मित्रत्वं समुपागतः ॥ १२८ ॥
तेन मे कथितं राजन् ! भार्य्या मे रक्षसा हृता ।
तत्र साहाय्यहेतोर्मे समयं कर्त्तुमर्हसि ॥ १२९ ॥
वालिना हृतराज्येन सुग्रीवेण सह प्रभुः ।
चक्रेऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥ १४० ॥
तेन वालिनमाहत्य शरेणैकेन संयुगे ।
वानराणां महाराजः कृतः संप्लवतां प्रभुः ॥ १४१ ॥
तस्य साहाय्यमस्माभिः कार्य्यं सर्वात्मना त्विह ।
तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः ॥ १४२ ॥

तस्याः सीतायाः ॥ १३४ ॥ १३५ ॥ १३६ ॥ १३७ ॥ १३८ ॥
समयं प्रतिज्ञाम् ॥ १३९ ॥ १४० ॥
संप्लवतां सम्यक्प्लवतां प्रभुरहमिति शेषः ॥ १४१ ॥
तस्य रामस्य । तेन रामसाहाय्यस्य कर्त्तव्यत्वेन तुभ्यं समीपं तव

क्षिप्रमानीयतां सीता दीयतां राघवस्य च ।
यावन्न हरयो वीरा विधमन्ति बलं तव ॥ १४३ ॥
वानराणां प्रभावोऽयं न केन विदितः पुरा ।
देवतानां सकाशञ्च ये गच्छन्ति निमन्त्रिताः ॥ १४४ ॥
इति वानरराजस्त्वामाहेत्यभिहितो मया ।
मामैक्षत ततो रुष्टश्चक्षुषा प्रदहन्निव ॥ १४५ ॥
तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा ।
मत्प्रभावमविज्ञाय रावणेन दुरात्मना ॥ १४६ ॥
ततो विभीषणो नाम तस्य भ्राता महामतिः ।
तेन राक्षसराजश्च याचितो मम कारणात् ॥ १४७ ॥
नैवं राक्षसशार्दूल ! त्यज्यतामेष निश्चयः ।
राजशास्त्रव्यपेतो हि मार्गः संसेव्यते त्वया ॥ १४८ ॥

समीपं प्रस्थापितो दूत इति शेषः । दूतप्रेषणं विना प्रथममेव युद्धस्याधर्मत्वादिति भावः ॥ १४२ ॥

सीतादानाभावे बाधकमाह,—यावदिति ॥ १४३ ॥

वानराणामिति । एवञ्च लङ्कागमने वानरा असमर्था न इति मन्तव्यमिति भावः । राघवाणामिति, पाठे मनुष्योऽसमर्थ इति न मन्तव्यमिति भावः ॥ १४४ ॥ १४५ ॥

मत्प्रभावं वरदानं लब्धावध्यत्वरूपम् ॥ १४६ ॥ १४७ ॥

दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ! ।
दूतेन वेदितव्यञ्च यथाभिहितवादिना ॥ १४९ ॥
सुमहत्यपराधेऽपि दूतस्यातुलविक्रम ! ।
विरूपकरणं दृष्टं न वधोऽस्ति हि शास्त्रतः ॥ १५० ॥
विभीषणेनैवमुक्तो रावणः सन्दिदेश तान् ।
राक्षसानेतदेवाद्य लाङ्गूलं दह्यतामिति ॥ १५१ ॥
ततस्तस्य वचः श्रुत्वा मम पुच्छं समन्ततः ।
वेष्टितं शणवल्कैश्च पट्टैः कार्पासकैस्तथा ॥ १५२ ॥
राक्षसाः सिद्धसन्नाहास्ततस्ते चण्डविक्रमाः ।
तदादीप्यन्त मे पुच्छं हनन्तः काष्ठमुष्टिभिः ॥ १५३ ॥
बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ।
न मे पीड़ा भवेत्काचिद्दिदृक्षोर्नगरीं दिवा ॥ १५४ ॥
ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् ।
अघोषयन् राजमार्गे नगरद्वारमागताः ॥ १५५ ॥
ततोऽहं सुमहद्रूपं सङ्क्षिप्य पुनरात्मनः ।

नैवम् अयमवध्य इत्यर्थः । एष निश्चयः एतद्वधनिश्चयः संलक्ष्यते विचार्य्यते ॥ १४८ ॥

वेदितव्यं निवेदनीयम् । एवञ्चैवमुक्तिर्दूतस्य नापराध इत्यर्थः ॥ ॥ १४९ ॥ १५० ॥ १५१ ॥ १५२ ॥

विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः ॥ १५६ ॥
आयसं परिघं गृह्य तानि रक्षांस्यसूदयम्।
ततस्तन्नगरद्वारं वेगेन प्लुतवानहम् ॥ १५७ ॥
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम्।
दहाम्यहमसम्भ्रान्तो युगान्ताग्निरिव प्रजाः ॥ १५८ ॥
विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते।
लङ्कायाः कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ १५९ ॥
दहता च मया लङ्कां दग्धा सीता न संशयः।
रामस्य च महत्कार्य्यं मयेदं विफलीकृतम् ॥ १६० ॥
इति शोकसमाविष्टश्चिन्तामहमुपागतः।
ततोऽहं वाचमश्रौषञ्चारणानां शुभाक्षराम् ॥ १६१ ॥
जानकी न च दग्धेति विस्मयोदन्तभाषिणाम्।
ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् ॥ १६२ ॥
अदग्धा जानकीत्येव निमित्तैश्चोपलक्षितम्।
दीप्यमाने तु लाङ्गूले न मां दहति पावकः ॥ १६३ ॥

हमन्तो मामिति शेषः। आर्षमेतत् ॥ १५३ ॥ १५४ ॥ १५५ ॥ ॥ १५६ ॥ १५७ ॥ १५८ ॥ १५९ ॥ १६० ॥ १६१ ॥

विस्मयकारी य उदन्तो वृत्तान्तस्तद्भाषिणां तं वदताम् ॥ १६२ ॥

उपलक्षितं तददहनमिति शेषः। निमित्तैः शुभसूचकैः। निमित्तान्याह,—दीप्यमानेत्यादि ॥ १६३ ॥

हृदयञ्च प्रहृष्टं मे वाता: सुरभिगन्धिन: ।
तैर्निमित्तैश्च दृष्टार्थै: कारणैश्च महागुणै: ॥ १६४ ॥
ऋषिवाक्यैश्च दृष्टार्थैरभवं हृष्टमानस: ।
पुनर्दृष्टा च वैदेही विसृष्टश्च तया पुन: ॥ १६५ ॥
तत: पर्वतमासाद्य तत्रारिष्टमहं पुन: ।
प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया ॥ १६६ ॥
तत: श्वसनचन्द्रार्कसिद्धगन्धर्वसेवितम् ।
पन्थानमहमाक्रम्य भवतो दृष्टवानिह ॥ १६७ ॥
राघवस्य प्रसादेन भवताञ्चैव तेजसा ।
सुग्रीवस्य च कार्य्यार्थं मया सर्वमनुष्ठितम् ॥ १६८ ॥
एतत्सर्वं मया तत्र यथावदुपपादितम् ।
तत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ॥ १६९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
अष्टपञ्चाशः सर्गः ॥ ५८ ॥

दृष्टार्थैर्दृष्टसंवादैः महागुणैः कारणैः मत्प्रवृत्तिकारणैः सीता-रामरूपैः ॥ १६४ ॥ १६५ ॥

आरेभे । सिद्धुत्तमः ॥ १६६ ॥ १६७ ॥ १६८ ॥ १६९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

# एकोनषष्टितमः सर्गः ।

एतदाख्याय तत्सर्वं हनूमान् मारुतात्मजः ।
भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥ १ ॥
सफलो राघवोद्योगः सुग्रीवस्य च सम्भ्रमः ।
शीलमासाद्य सीताया मम च प्रीणितं मनः ॥ २ ॥
आर्य्यायाः सदृशं शीलं सीतायाः प्लवगर्षभाः ! ।
तपसा धारयेल्लोकान् क्रुद्धा वा निर्दहेदपि ॥ ३ ॥
सर्वथातिप्रकृष्टोसौ रावणो राक्षसेश्वरः ।
यस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ ४ ॥

एतदिति । उत्तरं पराक्रमयुक्तत्वात्सर्वतोऽधिकम् ॥ १ ॥

सम्भ्रम आदर उत्साह इत्यर्थः । सीतायाः शीलं सद्वृत्तं पातिव्रत्यम् आसाद्य दृष्ट्वा । राघवोद्योगादेः साफल्यज्ञानेन मम मनः प्रीणितं तुष्टम् । मम च प्रवणं मन इति पाठेऽपि प्रवणं सन्तोषप्रवणमित्यर्थः ॥ २ ॥

सदृशं पतिव्रतानामरुन्धत्यादीनां सदृशमित्यर्थः ॥ ३ ॥

तर्हि रावणं किमिति नादहदित्यत आह,—सर्वथेति । अतिप्रकृष्टः महातपःसम्पन्न इत्यर्थः । तां सीतां स्पृशतोऽपि यस्य गात्रं तपसा न नाशितमिति सम्बन्धः ॥ ४ ॥

न तदग्निशिखा कुर्य्यात् संस्पृष्टा पाणिना सती।
जनकस्य सुता कुर्य्यात् यत् क्रोधकलुषीकृता ॥ ५ ॥
जाम्बवत्प्रमुखान् सर्वाननुज्ञाप्य महाकपीन्।
अस्मिन्नेवङ्गते कार्य्ये भवताञ्च निवेदिते।
न्याय्यं स्म सहवैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ ६ ॥
अहमेकोपि पर्य्याप्तः सराक्षसगणां पुरीम्।
तां लङ्कान्तरसा हन्तुं रावणञ्च सराक्षसम् ॥ ७ ॥
किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः।

नैतावता सीताशीलं दुर्बलमित्याशङ्क्यमित्याह,—नेति। यत् क्रुद्धा सीता कुर्य्यात्तत्स्पृष्टाग्निशिखापि न कुर्य्यात्। इयन्तु भर्त्तुः पराक्रमकीर्त्तये नाद्यापि क्रुध्यतीति भावः। अक्रुद्धाया अपि स्पर्शमात्रेण प्राप्तो नाशस्तु रावणतपसा निवारित इति ध्येयम् ॥ ५ ॥

इदानीं भवज्जयस्यापि स्वामिसम्बन्धित्वसत्वेन वयमेव सीताप्राप्तिरूपं सहायमासाद्य रावणं जित्वा देव्या सह राघवौ द्रक्ष्यामह इत्याह,—जाम्बवदिति। जाम्बवदादीननुज्ञाप्याज्ञां कुर्वन्त्विति सम्प्रार्थ्य। अस्मिन् कार्य्ये सीतान्वेषणरूपे। एवं सति उक्तप्रकारं प्राप्ते तत्प्रकारविशिष्टे च भवतां निवेदिते सति। तौ पार्थिवात्मजौ वैदेह्या संद्रष्टुं न्याय्यमित्यब्रवीदिति शेषः ॥ ६ ॥

तया सह दर्शने उपपत्तिमाह,—अहमिति एवञ्च राक्षसान् हत्वा देव्यानयनं कृत्वा देव्या सहैव तौ द्रक्ष्याम इत्यर्थः ॥ ७ ॥

कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः ॥ ८ ॥

अहन्तु रावणं युद्धे ससैन्यं सपुरःसरम् ।

सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ ९ ॥

ब्राह्ममस्त्रञ्च रौद्रञ्च वायव्यं वारुणं तथा ॥ १० ॥

यदि शक्रजितोऽस्त्राणि दुर्निरीक्ष्याणि संयुगे ।

तान्यहं निहनिष्यामि विधमिष्यामि राक्षसान् ॥ ११ ॥

भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् ।

मयाऽतुला विसृष्टा हि शैलवृष्टिर्निरन्तरा ॥ १२ ॥

देवानपि रणे हन्यात् किं पुनस्तान्निशाचरान् ।

भवतामननुज्ञातो विक्रमो मे रुणद्धि माम् ॥ १३ ॥

सागरोऽप्यतियाद्वेलां मन्दरः प्रचलेदपि ।

कृतास्त्रैर्देवांशत्वादस्त्रप्रयोगसमर्थैः ॥ ८ ॥

उक्तमेवार्थं सम्भ्रमेण पुनराह,—अहन्त्विति । अहमेवेत्यर्थः ॥ ॥ ९ ॥ १० ॥

यद्यपि दुर्निरीक्ष्याणि तथापि तान्यहं निहनिष्यामि । ब्रह्मणो वरदानान्निवारयामि । परावृत्तैरेव राक्षसान् विधमिष्यामि निहनिष्यामि ॥ ११ ॥

यथाद्रि रोत्स्यति ॥ १२ ॥

भवतामननुज्ञातः अनुज्ञां विना मे विक्रमो राक्षसवधप्रवृत्तिर्मां रुणद्धीत्यर्थः । अतः पूर्वमेव मया न पराक्रान्तमित्यर्थः ॥ १३ ॥

न जाम्बवन्तं समरे कम्पयेद्धरिवाहिनी ॥ १४ ॥
सर्वराक्षससङ्घानां राक्षसा ये च पूर्वजाः।
अलमेकोऽपि नाशाय वीरो वालिसुतः कपिः ॥ १५ ॥
प्लवगस्योरुवेगेन नीलस्य च महात्मनः।
मन्दरोऽप्यवशीर्य्येत किं पुनर्युधि राक्षसाः ॥ १६ ॥
स देवासुरयक्षेषु गन्धर्वोरगपक्षिषु।
मैन्दस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥ १७ ॥
अश्विपुत्रौ महावेगावेतौ प्लवगसत्तमौ।
एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥ १८ ॥
मयैव निहता लङ्का दग्धा भस्मीकृता पुरी।
राजमार्गेषु सर्वेषु नाम विश्रावितं मया ॥ १९ ॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २० ॥
अहं कोसलराजस्य दासः पवनसम्भवः।

इदानीं सर्वेऽपि भवन्तस्तद्वधे समर्था इत्याह,—सागरोऽपीति ॥ १४ ॥

ये च पूर्वजा राक्षसास्तेषां नाशायैकोऽपीत्यन्वयः ॥१५॥१६॥१७॥१८॥

मयैव निहता निहतप्राया। एवञ्च सर्वैर्मिलित्वा नाशनीयेति किं वाच्यमिति भावः। नामेति सुग्रीवादेरिति शेषः ॥ १९ ॥

हनूमानिति सर्वत्र नाम विश्रावितं मया ॥ २१ ॥
अशोकवनिकामध्ये रावणस्य दुरात्मनः ।
अधस्ताच्छिंशपामूले साध्वी करुणमास्थिता ॥ २२ ॥
राक्षसीभिः परिवृता शोकसन्तापकर्शिता ।
मेघरेखापरिवृता चन्द्ररेखेव निष्प्रभा ॥ २३ ॥
अचिन्तयन्ती वैदेही रावणं बलदर्पितम् ।
पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ २४ ॥
अनुरक्ता हि वैदेही रामे सर्वात्मना शुभा ।
अनन्यचित्ता रामेण पौलोमीव पुरन्दरे ॥ २५ ॥
तदेकवासःसंवीता रजोध्वस्ता तथैव च ।
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ २६ ॥
राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने ।
एकवेणीधरा दीना भर्तृचिन्तापरायणा ॥ २७ ॥

तदेवाह,—जयतीति ॥ २० ॥ २१ ॥

सीतादुःखविमर्शेऽपि 'सम्यगेव समानेतुमुचितेत्याशयेन तद्दशां वर्णयति । अशोकेत्यादि ॥ २२ ॥ २३ ॥

अचिन्तयन्ती योग्यत्वेनागणयन्ती । अगणने हेतुः पतिव्रतेति । अगणनाथावष्टब्धा निबद्धा अस्तीति शेषः ॥ २४ ॥

रामेण रामप्रीत्या अनन्यचित्ता पौलोमीव । नहुषबद्धा पौलोमीव ॥ २५ ॥

अधःशय्याविवर्णाङ्गी पद्मिनीव हिमोदये।
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ २८ ॥
कथञ्चिन्मृगशावाक्षी विश्वासमुपपादिता।
ततः सम्भाषिता चैव सर्वमर्थं प्रकाशिता ॥ २९ ॥
रामसुग्रीवसख्यञ्च श्रुत्वा प्रीतिमुपागता।
नियतः समुदाचारो भक्तिर्भर्त्तरि चोत्तमा।
यन्नहन्ति दशग्रीवं स महात्मा दशाननः ॥ ३० ॥
निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ॥ ३१ ॥
सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता।
प्रतिपत्पाठशीलस्य विद्येव तनुताङ्गता ॥ ३२ ॥

तदेकवास इति व्याख्यातम्। राक्षसीभिस्तर्ज्यमाना दृष्टेत्युत्तरेणान्वयः ॥ २६ ॥ २७ ॥ २८ ॥

कथञ्चिदादौ तूष्णीं रामकथाप्रस्तावेन। सर्वमर्थं रामसुग्रीववृत्तान्तम् ॥ २९ ॥

तदेवाह,—रामसुग्रीवसख्यञ्चेति। नियतः समुदाचारो दृढ़पातिव्रत्यं भर्त्तरि उत्तमा भक्तिश्चास्ति। इयत्यापि सामग्र्या यद्दशाननं शापादिना न हन्ति तत्र दशाननो महात्मा तपोबलेन शापाऽयोग्य इति भावः ॥ ३० ॥

अथापि सीतावरोधजन्यपापेन मृतप्राय एव स इत्याह,—निमित्तमात्रमिति। अतोऽस्माभिरपि सुशक्यवध एव स इति भावः ॥ ३१ ॥

एवमास्ते महाभागा सीता शोकपरायणा ।
यदत्र प्रतिकर्त्तव्यं तत्सर्वमुपकल्प्यताम् ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकोनषष्टितमः सर्गः ॥ ५९ ॥

तत्पापकारयामाह,—सेति ॥ ३२ ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकोनषष्टितमः सर्गः ॥ ५८ ॥

## षष्टितमः सर्गः ।



तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत ।
अश्विपुत्रौ महावेगौ बलवन्तौ प्लवङ्गमौ ॥ १ ॥
पितामहवरोत्सेकात्परमं दर्पमास्थितौ ।
अश्विनोर्माननार्थं हि सर्वलोकपितामहः ॥ २ ॥
सर्वावध्यत्वमतुलमनयोर्दत्तवान् पुरा ।
वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् ॥ ३ ॥
सुराणाममृतं वीरौ पीतवन्तौ महाबलौ ।
एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् ॥ ४ ॥
लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ।
अहमेकोऽपि पर्य्याप्तः सराक्षसगणां पुरीम् ॥ ५ ॥
तां लङ्कां तरसा हन्तुं रावणञ्च महाबलम् ।
किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः ॥ ६ ॥
कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः ।
वायुसूनोर्बलेनैव दग्धा लङ्केति नः श्रुतम् ॥ ७ ॥

तस्येति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

दृष्टा देवी न चानीता इति तत्र निवेदितुम् ।
न युक्तमिव पश्यामि भवद्भिः ख्यातपौरुषैः ॥ ८ ॥
न हि वः प्लवने कश्चिन्नापि कश्चित्पराक्रमे ।
तुल्यः सामरदैत्येषु लोकेषु हरिसत्तमाः ! ॥ ९ ॥
जित्वा लङ्कां सरक्षौघां हत्वा तं रावणं रणे ।
सीतामादाय गच्छामः सिद्धार्था हृष्टमानसाः ॥ १० ॥
तेष्वेवं हतशेषेषु राक्षसेषु हनूमता ।
किमन्यदत्र कर्त्तव्यं गृहीत्वा याम जानकीम् ॥ ११ ॥
रामलक्ष्मणयोर्मध्ये न्यस्याम जनकात्मजाम् ।
किं व्यलीकैस्तु तान् सर्वान् वानरान् वानरर्षभान् ॥ १२ ॥
वयमेव हि गत्वा तान् हत्वा राक्षसपुङ्गवान् ।
राघवं द्रष्टुमर्हामः सुग्रीवं सहलक्ष्मणम् ॥ १३ ॥
तमेव कृतसङ्कल्पं जाम्बवान् हरिसत्तमः ।
उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ॥ १४ ॥

दृष्टा देवी नानीता इति तत्र रामसमीपे निवेदितुं न युक्तमिव पश्यामि ॥ ८ ॥

तुल्योऽस्तीति शेषः ॥ ९ ॥ १० ॥

अन्यत्कर्त्तव्यं किमस्ति अपि तु जानकीग्रहणपूर्वकगमनादन्यन्न किमपीत्यर्थः ॥ ११ ॥

न्यस्याम स्थापयाम । तान् सर्वान् । किञ्चिन्न्यायामागतान्

नैषा बुद्धिर्महाबुद्धे ! यद्ब्रवीषि महाकपे ! ।
विचेतुं वयमाज्ञप्ता दक्षिणां दिशमुत्तमाम् ॥ १५ ॥
नानेतुं कपिराजेन नैव रामेण धीमता ।
कथञ्चिन्निर्जितां सीतामस्माभिर्नाभिरोचयेत् ॥ १६ ॥
राघवो नृपशार्दूलः कुलं व्यपदिशन् स्वकम् ।
प्रतिज्ञाय स्वयं राजा सीताविजयमग्रतः ॥ १७ ॥
सर्वेषां कपिमुख्यानां कथं मिथ्या करिष्यति ।
विफलं कर्म च कृतं भवेत्तुष्टिर्न तस्य च ॥ १८ ॥
वृथा च दर्शितं वीर्य्यं भवेद्वानरपुङ्गवाः ! ।
तस्माद्गच्छाम वै सर्वे यत्र रामः सलक्ष्मणः ।
सुग्रीवश्च महातेजाः कार्य्यस्यास्य निवेदने ॥ १९ ॥

व्यलीकैरप्रियैर्दुःखैर्याजयित्वेति शेषः । तथा कृत्वा किं फलमिति शेषः । किं परिक्लेश्यतामिति पाठान्तरम् ॥ १२ ॥ १३ ॥ १४ ॥

नैषा बुद्धिर्युक्तेति शेषः । तत्र हेतुमाह,—विचेतुमिति ॥ १५ ॥

प्रथमं जय एव दुर्लभः । कथञ्चिज्जयेऽपि यदि न रोचयेत्तदा कार्य्यनाश इति भावः ॥ १६ ॥

अरुचौ हेतुः कुलं व्यपदिशन्निति । प्रतिज्ञायेति च अग्रतः कपिमुख्यानामित्यन्वयः ॥ १७ ॥

अरुचौ फलवैपरीत्यं दर्शयति । विफलमिति ॥ १८ ॥

अस्य कार्य्यस्य निवेदने मतिं कृत्वेति शेषः ॥ १९ ॥

न तावदेषामतिरक्षमा नो
यथा भवान् पश्यति राजपुत्र ! ।
यथा तु रामस्य मतिर्निविष्टा
तथा भवान् पश्यतु कार्य्यसिद्धिम् ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षष्टितमः सर्गः ॥ ६० ॥

अथ जाम्बवानङ्गदक्रोधपरिहाराय तन्मतं वक्रमान्यसद्भावेन निवर्त्तयति । न तावदिति । हे राजपुत्र यथा भवान् पश्यति विचारयति । एषा मतिर्नास्माकमक्षमा न किन्तु युक्तैव । यथा रामस्य मतिर्निविष्टा अवस्थिता तथा कार्य्यसिद्धिं भवान् पश्यत्वित्यर्थः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

# एकषष्टितमः सर्गः ।



ततो जाम्बवतो वाक्यमगृह्णन्त वनौकसः ।
अङ्गदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ १ ॥
प्रीतिमन्तस्ततः सर्वे वायुपुत्रपुरःसराः ।
महेन्द्राग्रात्समुत्पत्य पुप्लुवुः प्लवगर्षभाः ॥ २ ॥
मेरुमन्दरसङ्काशा मत्ता इव महागजाः ।
छादयन्त इवाकाशं महाकाया महाबलाः ॥ ३ ॥
सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् ।
हनूमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ ४ ॥
राघवे चार्थनिर्वृत्तिं कर्तुञ्च परमं यशः ।

अगृह्णन्त युक्तियुक्तत्वेनामन्यन्त ॥ १ ॥
पुप्लुवुः प्लवन्तो जग्मुः ॥ २ ॥
आकाशं छादयन्त इवेत्युत्प्रेक्षा ॥ ३ ॥
सभाज्यमानं पूज्यमानं भूतैः सिद्धादिभिः दृष्टिभिर्वहन्त इव ।
प्रीतिपूर्वकानिमिषदर्शनाद्दृष्टीनां वाहकत्वोत्प्रेक्षा ॥ ४ ॥
राघवे कार्य्यनिर्वृत्तिं कार्य्यसिद्धिं समाधाय निश्चित्य । तस्यात्मनश्च

समादाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ ५ ॥
प्रियाख्यानोन्मुखाः सर्वे सर्वे युद्धाभिनन्दिनः ।
सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ ६ ॥
प्लवमानाः खमाप्लुत्य ततस्ते काननौकसः ।
नन्दनोपममासेदुर्वनं द्रुमशतायुतम् ॥ ७ ॥
यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् ।
अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८ ॥
यद्रक्षति महावीरः सदा दधिमुखः कपिः ।
मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ ९ ॥
ते तद्वनमुपागम्य बभूवुः परमोत्कटाः ।
वानरा वानरेन्द्रस्य मनःकान्तं महावनम् ॥ १० ॥
ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् ।'

परमं यशः कर्तुं च निश्चित्य पुप्लुवुरिति सम्बन्धः । कर्मसिद्धिभिः सीतादर्शनलङ्कादहनकर्मभिरुन्नताः उन्नतचित्ताः ॥ ५ ॥

रामप्रतीकारे रामकर्तव्ये रावणप्रतीकारे निश्चितार्था अभूवन् इति शेषः ॥ ६ ॥

वनं सुग्रीवस्य मधुवनम् ॥ ७ ॥ ८ ॥

दधिमुखस्तन्नामा ॥ ९ ॥

परमोत्कटास्तत्रत्यमधुपानादावत्युत्कटोत्कण्ठावन्तः । महावनमाख्यं वनमित्यर्थः ॥ १० ॥

कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥ ११ ॥
ततः कुमारस्तान् वृद्धान् जाम्बवत्प्रमुखान् कपीन्।
अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ १२ ॥
ते निसृष्टाः कुमारेण धीमता वालिसूनुना।
हरयः समपद्यन्त द्रुमान्मधुकराकुलान् ॥ १३ ॥
भक्षयन्तः सुगन्धीनि मूलानि च फलानि च।
जग्मुः प्रहर्षं ते सर्वे बभूवुश्च मदोत्कटाः ॥ १४ ॥
ततश्चानुमताः सर्वे सुसंहृष्टा वनौकसः।
मुदिताश्च ततस्ते च प्रनृत्यन्ति ततस्ततः ॥ १५ ॥

गायन्ति केचित् प्रहसन्ति केचित्
नृत्यन्ति केचित् प्रणमन्ति केचित्।
पठन्ति केचित् प्रचरन्ति केचित्
प्लवन्ति केचित् प्रलपन्ति केचित् ॥ १६ ॥

मधुपिङ्गलाः मधुपिङ्गलवर्णाः ॥ ११ ॥

अनुमान्य कृतानुमतिकान् कृत्वा। निसर्गमाज्ञाम् ॥ १२ ॥

निसृष्टाः कृताज्ञाः ॥ १३ ॥

भक्षयन्त अभक्षयन्नित्यर्थः ॥ १४ ॥

अनुमताः मधुपानादौ कृतानुमतिकाः। हर्षमुदोर्माध्याभ्यन्तरत्व-कृतो भेदः ॥ १५ ॥

परस्परं केचिदुपाश्रयन्ति
परस्परं केचिदतिब्रुवन्ति ।
द्रुमात् द्रुमं केचिदधिद्रवन्ति
क्षितौ नगाग्रान्निपतन्ति केचित् ॥ १७ ॥
महीतलात् केचिदुदीर्णवेगा
महाद्रुमाग्र्याण्यभिसम्पतन्ति ।
गायन्तमन्यः प्रहसन्नुपैति
रुदन्तमन्यः प्ररुदन्नुपैति ॥ १८ ॥
तुदन्तमन्यः प्रतुदन्नुपैति
समाकुलं तत्कपिसैन्यमासीत् ।
न चात्र कश्चिन्न बभूव मत्तो
न चात्र कश्चिन्न बभूव दृप्तः ॥ १९ ॥
ततो वनं तत्परिभक्ष्यमाणं
द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
समीक्ष्य कोपाद्दधिवक्त्रनामा
निवारयामास कपिः कपींस्तान् ॥ २० ॥

तत्र बाह्यमानन्दसूचकमाह,—गायन्तीति ॥ १६ ॥
अतिब्रुवन्ति विवादं कुर्वन्ति । नगाग्रात् वृक्षाग्रात् ॥ १७ ॥
गामरोदनहासामधुपानमत्तधर्माः ॥ १८ ॥

स तैः प्रवृद्धैः परिभर्त्स्यमानो
वनस्य गोप्ता हरिवृद्धवीरः।
चकार भूयो मतिमुग्रतेजा
वनस्य रक्षां प्रति वानरेभ्यः॥ २१॥
उवाच कांश्चित्परुषाण्यभीत-
मसक्तमन्यांश्च तलैर्जघान।
समेत्य कैश्चित्कलहं चकार
तथैव साम्नोपजगाम कांश्चित्॥ २२॥
स तैर्मदादप्रतिवार्य्यवेगै-
र्बलाच्च तेन प्रतिवार्य्यमाणैः।
प्रधर्षणे त्यक्तभयैः समेत्य
प्रकृष्यते चाप्यनवेक्ष्य दोषम्॥ २३॥
नखैस्तुदन्तो दशनैर्दशन्त-
स्तलैश्च पादैश्च समापयन्तः।

नुदन्तं व्यथयन्तं समाकुलम् उत्कटमत्तचेष्टं दृप्तोतिमत्तः॥ १९॥
॥ २०॥

प्रवृद्धैः प्रवृद्धमदैः॥ २१॥ २२॥

मदादप्रतिवार्य्यो निवारयितुमशक्यो वेगो येषां तैः। तेन दधि-
मुखेन बलात्प्रतिवार्य्यमाणैः। प्रधर्षणे दोषं राजदण्डमनवेक्ष्य। अतएव
त्यक्तभयैः। समेत्य प्रकृष्यते स॥ २३॥

मदात्कपिं ते कपयः समन्तान्-
महावनं निर्विषयञ्च चक्रुः ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
एकषष्टितमः सर्गः ॥ ६१ ॥

समापयन्तः मृतकल्पं कुर्वन्तः। महावनं निर्विषयं निर्गतमधु-
फलादिभोग्यम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ।

तानुवाच हरिश्रेष्ठो हनूमान् वानरर्षभः ।
अव्यग्रमनसो यूयं मधु सेवत वानराः ! ॥ १ ॥
अहमावर्जयिष्यामि युष्माकं परिपन्थिनः ।
श्रुत्वा हनूमतो वाक्यं हरीणां प्रवरोऽङ्गदः ॥ २ ॥
प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु ।
अवश्यं कृतकार्य्यस्य वाक्यं हनुमतो मया ॥ ३ ॥
अकार्य्यमपि कर्त्तव्यं किमङ्ग पुनरीदृशम् ।
अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥ ४ ॥
साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ।
पूजयित्वाङ्गदं सर्वे वानरा वानरर्षभम् ॥ ५ ॥
जग्मुर्मधुवनं यत्र नदीवेग इव द्रुमम् ।
ते प्रविष्टा मधुवनं पालानाक्रम्य शक्तितः ॥ ६ ॥

पुनरुक्तमेव विस्तरेणाह,—तानिति ॥ १ ॥
आवर्जयिष्यामि निवारयिष्यामि ॥ २ ॥ ३ ॥
ईदृशम् एतन्माधार्यकम् ॥ ४ ॥ ५ ॥

अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् ।
पपुः सर्वे मधु तदा रसवत् फलमाददुः ॥ ७ ॥
उत्पत्य च ततः सर्वे वनपालान् समागतान् ।
ते ताड़यन्तः शतशः सक्ता मधुवने तदा ॥ ८ ॥
मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते ।
पिबन्ति कपयः केचित् सङ्घशस्तत्र हृष्टवत् ॥ ९ ॥
घ्नन्ति स्म सहिताः सर्वे भक्षयन्ति तथापरे ।
केचित् पीत्वापविध्यन्ति मधूनि मधुपिङ्गलाः ॥ १० ॥
मधूच्छिष्टेन केचिच्च जघ्नुरन्योऽन्यमुत्कटाः ।
अपरे वृक्षमूलेषु शाखा गृह्य व्यवस्थिताः ॥ ११ ॥
अत्यर्थञ्च मदग्लानाः पर्णान्यास्तीर्य शेरते ।
उन्मत्तवेगाः प्लवगा मधुमत्ताश्च हृष्टवत् ॥ १२ ॥

यत्र मधुवनं यत्र मार्गे गमनेन मधुवनं प्राप्यते तेन मार्गेण जग्मुः ॥ ६ ॥

ते पटवो हनूमान् च मैथिलीं दृष्ट्वा अन्ये तन्मुखाभ्यां लङ्कास्थां श्रुत्वा महत्कार्य्यकरणेन भयराहित्यादतिसर्गादङ्गदानुज्ञानान्मधुवनं प्रविष्टाः पालान् बलादाक्रम्य बद्धा मधु पपूरसवत्फलञ्चा दुर्भक्षणार्थमिति शेषः ॥ ७ ॥

मधुवने सक्ता भक्षणार्थं लग्नाः ॥ ८ ॥ ९ ॥

अपविध्यन्ति प्रक्षिपन्ति मधूनि मधुपटलानि ॥ १० ॥ ११ ॥

क्षिपन्त्यपि तथान्योऽन्यं स्खलन्ति च तथापरे।
केचित् क्ष्वेडान् प्रकुर्वन्ति केचित् कूजन्ति हृष्टवत् ॥ १३ ॥
हरयो मधुना मत्ताः केचित् सुप्ता महीतले।
धृष्टाः केचिद्धसन्त्यन्ये केचित् कुर्वन्ति चेतरत् ॥ १४ ॥
कृत्वा केचिद्वदन्त्यन्ये केचित् बुध्यन्ति चेतरत्।
येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु ॥ १५ ॥
तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः।
जानुभिश्च प्रघृष्टाश्च देवमार्गञ्च दर्शिताः ॥ १६ ॥
अब्रुवन् परमोद्विग्ना गत्वा दधिमुखं वचः।
हनूमता दत्तवरैर्हतं मधुवनं बलात् ॥ १७ ॥
वयञ्च जानुभिर्घृष्टा देवमार्गञ्च दर्शिताः ॥ १८ ॥

उन्मत्तवेगाः। उन्मत्तानां वेगो येषां ते। यद्वातिशयितवेगा इत्यर्थः ॥ १२ ॥ १३ ॥

इतरत् रोदनम् ॥ १४ ॥

केचिदन्यत्कृत्वा अन्यद्वदन्ति। केचिदुक्तवचनार्थं विद्यमानं परित्यज्यान्यमेव बुध्यन्ते ॥ १५ ॥

प्रतिषिद्धाः ताडनादिना निरस्ताः जानुभिः प्रघृष्टाः जानुषु गृहीत्वा आकृष्टाः। देवमार्गम् अधोन्नद्वारमिति तीर्थः। देवमार्गं दर्शिताः। पादौ गृहीत्वोर्द्ध्वं प्रक्षिप्ता इत्यर्थः। कर्णौ अङ्गुलिभिर्घृष्ट्वोर्द्ध्वीकृता इति वार्थ इत्यन्ये ॥ १६ ॥ १७ ॥ १८ ॥

तदा दधिमुखः क्रुद्धो वनपस्तत्र वानरः ।
हतं मधुवनं दृष्ट्वा सान्त्वयामास तान् हरीन् ॥ १९ ॥
एत गच्छत गच्छामो वानरानतिदर्पितान्
बलेनावारयिष्यामि प्रभुञ्जानान् मधूत्तमम् ॥ २० ॥
श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः ।
पुनर्वीरा मधुवनं तेनैव सहिता ययुः ॥ २१ ॥
मध्ये चैषां दधिमुखः सुप्रगृह्य महातरुम् ।
समभ्यधावन् वेगेन सर्वे ते च प्लवङ्गमाः ॥ २२ ॥
ते शिलाः पादपांश्चैव पाषाणानपि वानराः ।
गृहीत्वाभ्यागमन् क्रुद्धा यत्र ते कपिकुञ्जराः ॥ २३ ॥
बलान्निवारयन्तश्च आसेदुर्हरयो हरीन् ।
सन्दष्टोष्ठपुटाः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ २४ ॥
अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुङ्गवाः ।
अभ्यधावन्त वेगेन हनुमत्प्रमुखास्तदा ॥ २५ ॥
सवृक्षं तं महाबाहुमापतन्तं महाबलम् ।
वेगवन्तं विजग्राह बाहुभ्यां कुपितोऽङ्गदः ॥ २६ ॥

तान् स्वसम्बन्धिनः पालान् ॥ १९ ॥

एत आगच्छत अग्रे इति शेषः । गच्छामः वयमप्यागच्छाम इत्यर्थः ॥ २० ॥ २१ ॥

सर्वे ते च समभ्यधावन्निति शेषः ॥ २२ ॥ २३ ॥

मदान्धो न कृपाञ्चक्रे आर्य्यकोऽयं ममेति सः।
अथैनं निष्पिपेषाशु वेगेन वसुधातले ॥ २७ ॥
स भग्नबाहूरुमुखो विह्वलः शोणितोक्षितः।
प्रमुमोह महावीरो मुहूर्त्तं कपिकुञ्जरः ॥ २८ ॥
स कथञ्चिद्विमुक्तस्तैर्वानरैर्वानरर्षभः।
उवाचैकान्तमागत्य स्वान् भृत्यान् समुपागतान् ॥ २९ ॥
एत गच्छत गच्छामो भर्त्ता नो यत्र वानरः।
सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥ ३० ॥
सर्वञ्चैवाङ्गदे दोषं श्रावयिष्याम पार्थिवे।
अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥ ३१ ॥
इष्टं मधुवनं ह्येतत् सुग्रीवस्य महात्मनः।
पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३२ ॥
स वानरानिमान् सर्वान् मधुलुब्धान् गतायुषः।
घातयिष्यति दण्डेन सुग्रीवः ससुहृज्जनान् ॥ ३३ ॥
बध्या ह्येते दुरात्मानो नृपाज्ञापरिपन्थिनः।
अमर्षप्रभवो रोषः सफलो मे भविष्यति ॥ ३४ ॥
एवमुक्त्वा दधिमुखो वनपालान् महाबलः।

हरयः पालाः हरीन् हनुमदादीन् ॥ २४ ॥ २५ ॥ २६ ॥
आर्य्यकः सुग्रीवमातुलत्वात् पूज्यः ॥ २७ ॥ २८ ॥ २९ ॥
भर्त्ता राजा ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

जगाम सहसोत्पत्य वनपालैः समन्वितः ॥ ३५ ॥
निमेषान्तरमात्रेण स हि प्राप्तो वनालयः ।
सहस्रांशुसुतो धीमान् सुग्रीवो यत्र वानरः ॥ ३६ ॥
रामञ्च लक्ष्मणञ्चैव दृष्ट्वा सुग्रीवमेव च ।
समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३७ ॥
स निपत्य महावीरः सर्वैस्तैः परिवारितः ।
हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ ३८ ॥
स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम् ।
सुग्रीवस्याशु तौ मूर्ध्ना चरणौ प्रत्यपीड़यत् ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
द्विषष्टितमः सर्गः ॥ ६२ ॥

नृपाज्ञापरिपन्थिनः । तदाज्ञाविघ्नकर्त्तारः । अमर्षप्रभवोऽक्षमा-
जन्यः ॥ ३४ ॥ ३५ ॥ ३६ ॥
समप्रतिष्ठां समतलाम् । जगतीं भूमिं दृष्ट्वेत्यनुकर्षः ॥ ३७ ॥ ३८ ॥
तौ सर्ववानरपूज्यौ चरणावित्यन्वयः ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## त्रिषष्टितमः सर्गः ।

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः ।
दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ १ ॥
उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम ।
अभयं ते प्रदास्यामि सत्यमेवाभिधीयताम् ॥ २ ॥
किं सम्भ्रमाद्धितं कृत्स्नं ब्रूहि यद्वक्तुमर्हसि ।
कच्चिन्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ! ॥ ३ ॥
स समाश्वासितस्तेन सुग्रीवेण महात्मना ।
उत्थाय स महाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ४ ॥
नैवर्क्षरजसा राजन् ! न त्वया न च वालिना ।
वनं निसृष्टपूर्वं ते नाशितं तत्तु वानरैः ॥ ५ ॥
न्यवारयमहं सर्वान् सहैभिर्वनचारिभिः ।
अचिन्तयित्वा मां हृष्टा भक्षयन्ति पिबन्ति च ॥ ६ ॥

तत इति ॥ १ ॥ २ ॥

किं सम्भ्रमात् कस्य भयादिहागतोऽसीति शेषः । यत् कृत्स्नं हितं तत् ब्रूहि । यतस्त्वं सर्वमुचितमनुचितञ्च वक्तुमर्हसि ॥ ३ ॥ ४ ॥

नैव निसृष्टपूर्वं वानरेभ्यो यथेच्छभोगाय कदापि नानुज्ञातम् ॥ ५ ६ ॥

एभिः प्रधर्षणायाञ्च वारितं वनपालकैः ।
मामप्यचिन्तयन् देव ! भक्षयन्ति वनौकसः ॥ ७ ॥
शिष्टमत्रापविध्यन्ति भक्षयन्ति तथापरे ।
निवार्य्यमाणास्ते सर्वे भ्रुकुटिं दर्शयन्ति हि ॥ ८ ॥
इमे हि संरब्धतरास्तदा तैः सम्प्रधर्षिताः ।
निवार्य्यन्ते वनात्तस्मात् क्रुद्धैर्वानरपुङ्गवैः ॥ ९ ॥
ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभाः ।
संरक्तनयनैः क्रोधाद्धरयः सम्प्रधर्षिताः ॥ १० ॥
पाणिभिर्निहताः केचित् केचिज्जानुभिराहताः ।
प्रकृष्टाश्च तदा कामं देवमार्गञ्च दर्शिताः ॥ ११ ॥
एवमेते हताः शूरास्त्वयि तिष्ठति भर्त्तरि ।
कृत्स्नं मधुवनञ्चैव प्रकामं तैश्च भक्ष्यते ॥ १२ ॥
एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभम् ।
अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ १३ ॥

एभिर्हनुमदाद्यैः प्रधर्षणायामारब्धायां वनपालकैर्वारितं मामपि अपि नितरां पालकान् अचिन्तयन् अचिन्तयन्तः ॥ ७ ॥

भ्रुकुटिं वक्रे भ्रुवौ ॥ ८ ॥

इमे मदीयाः । संरब्धतराः निवारणायातियत्नवन्तः ॥ ९ ॥ १० ॥ ॥ ११ ॥ १२ ॥

किमयं वानरो राजन्! वनपः प्रत्युपस्थितः।
किञ्चार्थेऽभिनिर्दिश्य दुःखितो वाक्यमब्रवीत्॥ १४॥
एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना।
लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः॥ १५॥
आर्य्य! लक्ष्मण! सम्प्राह वीरो दधिमुखः कपिः।
अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः॥ १६॥
नैषामकृतकार्य्याणामीदृशः स्याद्व्यतिक्रमः।
वनं यदभिपन्नास्ते साधितं कर्म तत् ध्रुवम्॥ १७॥
वारयन्तो भृशं प्राप्ताः पाला जानुभिराहताः।
तथा न गणितश्चायं कपिर्दधिमुखो बली॥ १८॥
पतिर्मम वनस्यायमस्माभिः स्थापितः स्वयम्।
दृष्टा देवी न सन्देहो न चान्येन हनूमता॥ १९॥
न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः।
कार्य्यसिद्धिर्हनुमति मतिश्च हरिपुङ्गवे॥ २०॥

विज्ञाप्यमानम्। दधिमुखेनेति शेषः॥ १३॥ १४॥ १५॥ १६॥
यत् यथा वनमभिपन्नाः माप्नयितुं प्रवृत्ताः॥ १७॥
वारयन्तः। हेतौ शता। वारणाद्धेतोर्जानुभिराहताः पालाः प्राप्ताः॥ १८॥
देवी दृष्टेत्यत्र न सन्देहस्तत्राप्यन्येन न किन्तु हनूमतेत्यर्थः॥ १९॥

व्यवसायश्च वीर्य्यञ्च श्रुतञ्चापि प्रतिष्ठितम्।
जाम्बवान् यत्र नेता स्यादङ्गदश्च महाबलः ॥ २१ ॥
हनूमांश्चाप्यधिष्ठाता न तत्र गतिरन्यथा।
अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल ॥ २२ ॥
विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः।
आगतैश्च प्रहृष्टं तद्यथा मधुवनं हि तैः ॥ २३ ॥
धर्षितञ्च वनं कृत्स्नमुपयुक्तन्तु वानरैः।
पातिता वनपालास्ते तदा जानुभिराहताः ॥ २४ ॥
एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह।
नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः ॥ २५ ॥
दृष्टा सीता महाबाहो! सौमित्रे! पश्य तत्त्वतः।
अभिगम्य यथा सर्वं पिबन्ति मधु वानराः ॥ २६ ॥
न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ!।
वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः ॥ २७ ॥
ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः।

अन्यः हनूमतोऽन्य इत्यर्थः। हरिपुङ्गवे हनूमति कार्य्यसिद्धिर्मतिश्च ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥
उपयुक्तं भुक्तम् ॥ २४ ॥ २५ ॥
यथा मधु पिबन्ति तथा सीता दृष्टेत्यन्वयः ॥ २६ ॥

श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् ॥ २८ ॥
प्राहृष्यत भृशं रामो लक्ष्मणश्च महायशाः।
श्रुत्वा दधिमुखस्यैवं सुग्रीवस्तु प्रहृष्य च ॥ २९ ॥
वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत।
प्रीतोऽस्मि सोऽहं यद्भुक्तं वनं तैः कृतकर्मभिः ॥ ३० ॥
धर्षितं मर्षणीयञ्च चेष्टितं कृतकर्मणाम्।
गच्छ शीघ्रं मधुवनं संरक्षस्व त्वमेव हि।
शीघ्रं प्रेषय सर्वांस्तान् हनूमत्प्रमुखान् कपीन् ॥ ३१ ॥
इच्छामि शीघ्रं हनुमत्प्रधानान्
शाखामृगांस्तान् मृगराजदर्पान्।
प्रष्टुं कृतार्थान् सह राघवाभ्यां
श्रोतुञ्च सीताधिगमे प्रयत्नम् ॥ ३२ ॥
प्रीतिस्फीताक्षौ सम्प्रहृष्टौ कुमारौ
दृष्ट्वा सीतार्थां वानराणाञ्च राजा।

दत्तवरं वरत्वेन देवैरस्माकं दत्तम् ॥ २७ ॥ २८ ॥
एकः सुग्रीवशब्दः शोभनग्रीवपरः ॥ २९ ॥
कृतकर्मभिः साधितकार्यैः ॥ ३० ॥ ३१ ॥
तान् द्रष्टुमिच्छामि। सीताधिगमे तत्प्राप्तौ कृतं प्रयत्नञ्च श्रोतु-
मिच्छामि ॥ ३२ ॥

अङ्गैः प्रहृष्टैः कार्य्यसिद्धिं विदित्वा
बाह्वोरासन्नामतिमात्रं ननन्द ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
त्रिषष्टितमः सर्गः ॥ ६३ ॥

अथ सुग्रीवः स्वोद्योगसाफल्यदर्शनात् भृशं ननन्देत्याह,—प्रीतीति। प्रीत्या सन्तोषेण स्फीताक्षौ विकसितनेत्रौ। सम्प्रहृष्टौ पुलकितगात्रौ सिद्धार्थाविव दृष्ट्वा सम्प्रहृष्टैः पुलकितैरङ्गैरुपलक्षितः कार्य्यसिद्धिं बाह्वोरासन्नां हस्तप्राप्तामिव विदित्वा ननन्द ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुःषष्टितमः सर्गः ।

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः ।
राघवं लक्ष्मणञ्चैव सुग्रीवञ्चाभ्यवादयत् ॥ १ ॥
स प्रणम्य च सुग्रीवं राघवौ च महाबलौ ।
वानरैः सहितः शूरैर्दिवमेवोत्पपात ह ॥ २ ॥
स यथैवागतः पूर्वं तथैव त्वरितं गतः ।
निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३ ॥
स प्रविष्टो मधुवनं ददर्श हरियूथपान् ।
विमदानुद्धतान् सर्वान् मेहमानान् मधूदकम् ॥ ४ ॥
स तानुपागमद्वीरो बध्वा करपुटाञ्जलिम् ।
उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ ५ ॥
सौम्य ! रोषो न कर्त्तव्यो यदेभिः परिवारणम् ।
अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥ ६ ॥

सुग्रीवेणेति ॥ १ ॥ २ ॥ ३ ॥

विमदत्वसूचकं मेहमानान् मधूदकमिति । मेहमानान् मूत्रयतः । मधुपरिणामभूतमुदकं मधूदकम् । एवं मूत्रणात् मधूनां जीर्णता बोधिता । अतएव विमदान् ॥ ४ ॥ ५ ॥

श्रान्तो दूरादनुप्राप्तो भक्षयंश्च स्वकं मधु ।
युवराजस्त्वमीशश्च वनस्यास्य महाबल ! ॥ ७ ॥
मौर्ख्यात्पूर्वं कृतो रोषस्तद्भवान् क्षन्तुमर्हसि ।
यथैव हि पिता ते भूत्पूर्वं हरिगणेश्वरः ॥ ८ ॥
तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तम ! ।
आख्यातं हि मया गत्वा पितृव्यस्य तवानघ ! ॥ ९ ॥
इहोपयानं सर्वेषामेतेषां वनचारिणाम् ।
भवदागमनं श्रुत्वा सहैभिर्वनचारिभिः ॥ १० ॥
प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् ।
प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ॥ ११ ॥
शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः ।
श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमङ्गदः ॥ १२ ॥
अब्रवीत्तान् हरिश्रेष्ठो वाक्यं वाक्यविशारदः ।
शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः ! ॥ १३ ॥
अयञ्च हर्षादाख्याति तेन जानामि हेतुना ।

एभिः रक्षिभिरज्ञानात् क्रोधाच्च भवन्तः प्रतिषेधिता इति यदेतत्परिवारं प्रति रोषो न कर्त्तव्य इत्यर्थः ॥ ६ ॥ ७ ॥

रोषः कृतो मदीयैरिति शेषः ॥ ८ ॥

तथा सुग्रीवस्त्वमपि त्वञ्च हरीश्वरः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

शङ्के दधिमुखस्य परावृत्यागमनात् ॥ १३ ॥

तत्क्षमं नेह नः स्थातुं कृते कार्य्ये परन्तपाः ! ॥ १४ ॥
पीत्वा मधु यथाकामं विक्रान्ता वनचारिणः।
किं शेषं गमनं तत्र सुग्रीवो यत्र वानरः ॥ १५ ॥
सर्वे यथा मां वक्ष्यन्ति समेत्य हरिपुङ्गवाः ! ।
तथास्मि कर्त्ता कर्त्तव्ये भवद्भिः परवानहम् ॥ १६ ॥
नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि।
अयुक्तं कृतकर्माणो यूयं धर्षयितुं बलात् ॥ १७ ॥
ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमुत्तमम्।
प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥ १८ ॥
एवं वक्ष्यति को राजन् ! प्रभुः सन् वानरर्षभ ! ।
ऐश्वर्य्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥ १९ ॥

किञ्चायं हर्षादाख्याति। सुग्रीवसन्देशमिति शेषः। तेन च हेतुना जानामि रामेण श्रुतोऽयं वृत्तान्त इति। तत्तस्मादकार्य्ये वनविध्वंसनरूपे कृते सतीह स्थातुं नोऽस्माकं न क्षमं न युक्तम् ॥ १४ ॥

किं शेषं न किमपि शिष्टमित्यर्थः। गमनमुचितमिति शेषः ॥ १५ ॥

कर्त्तव्ये कर्त्तव्येऽर्थे। भवद्भिः परवानहम्। भवदधीन इत्यर्थः ॥ १६ ॥

यद्यपि अहं युवराजोऽस्मि युष्मानाज्ञापयितुं नेशस्तत्र हेतुः। कृतकर्माणो यूयम्। कृतकर्माणो युष्मान् इत्यर्थे आर्षमिदम्। तथापि परम् अतः बलाद्धर्षयितुं न युक्तम् ॥ १७ ॥ १८ ॥

अहं प्रभुरिति शेषः ॥ १९ ॥

तत्र चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित्
सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् ॥ २० ॥
सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः ।
स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ २१ ॥
त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् ।
क्वचिद्गन्तुं हरिश्रेष्ठ ! ब्रूमः सत्यमिदन्तु ते ॥ २२ ॥
एवन्तु वदतां तेषामङ्गदः प्रत्यभाषत ।
बाढं गच्छाम इत्युक्त्वा खमुत्पेतुर्महाबलाः ॥ २३ ॥
उत्पतन्तमनूत्पेतुः सर्वे ते हरियूथपाः ।
कृत्वाकाशं निराकाशं यन्त्रोत्क्षिप्ता इवोपलाः ॥ २४ ॥
अङ्गदं पुरतः कृत्वा हनूमन्तञ्च वानरम् ।
तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः ॥ २५ ॥

सन्नतिर्विनयः । भविष्यच्छुभयोग्यतां भाविनीं भाग्योन्नतिम् । आख्याति सूचयति ॥ २० ॥

अत्र देशे प्राप्ता वयं यत्र सुग्रीवस्तत्र गन्तुं कृतक्षणाः कृतोत्साहाः ॥ २१ ॥ २२ ॥

महाबलास्ते गच्छाम इत्युक्त्वा खमुत्पेतुरित्यन्वयः ॥ २३ ॥

तत्र क्रममाह,—उत्पतन्तमिति । निराकाशं निरवकाशम् । यन्त्रेत्यादिना दूरोत्पातेन शीघ्रगमनं सूचितम् ॥ २४ ॥

विनदन्तो महानादं घना वातेरिता यथा।
अङ्गदे समनुप्राप्ते सुग्रीवो वानरेश्वरः॥ २६॥
उवाच शोकसन्तप्तं रामं कमललोचनम्।
समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः॥ २७॥
नागन्तुमिह शक्यं तैरतीतसमयैरिह।
अङ्गदस्य प्रहर्षाच्च जानामि शुभदर्शन!॥ २८॥
न मत्सकाशमागच्छेत् कृत्ये हि विनिपातिते।
युवराजो महाबाहुः प्लवतामङ्गदो वरः॥ २९॥
यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः।
भवेत्तु दीनवदनो भ्रान्तविप्लुतमानसः॥ ३०॥
पितृपैतामहश्चैतत्पूर्वकैरभिरक्षितम्।

सहसोत्पत्य वातेरिता घना इव विनदन्तो जग्मुरिति शेषः।
शीघ्रगत्या सादृश्यम्॥ २५॥

समनुप्राप्ते निकटमागते। सुग्रीवो राममुवाचेत्यन्वयः॥ २६॥ २७॥

दृष्टत्वे हेतुर्नेति। अङ्गदप्रहर्षस्य हेत्वन्तरम्॥ २८॥

विनिपातिते असाधिते॥ २९॥

यद्यपीति। अकृतकृत्यानामन्येषां वानराणां कपिस्वभावचापल्या-
दीदृशमधुवनभङ्गादिरूप उपक्रमो व्यापारो यद्यपि स्यात्तथाप्यङ्गदो
दीनवदनत्वादिगुणको भवेत्॥ ३०॥

न मे मधुवनं हन्याददृष्ट्वा जनकात्मजाम् ॥ ३१ ॥
कौशल्यासुप्रजा राम ! समाश्वसिहि सुव्रत ! ।
दृष्टा देवी न सन्देहो न चान्येन हनूमता ॥ ३२ ॥
न ह्यस्य कर्म्मणो हेतुः साधने तद्विधो भवेत् ।
हनूमतीह सिद्धिश्च मतिश्च मतिसत्तम ! ॥ ३३ ॥
व्यवसायश्च शौर्य्यञ्च श्रुतञ्चापि प्रतिष्ठितम् ।
जाम्बवान्यत्र नेतास्यादङ्गदश्च हरीश्वरः ॥ ३४ ॥
हनूमांश्चाप्यधिष्ठाता न तत्र गतिरन्यथा ।
मा भूश्चिन्तासमायुक्तः सम्प्रत्यमितविक्रम ! ॥ ३५ ॥
यदा हि दर्पितोदग्राः सङ्गताः काननौकसः ।
नैषामकृतकार्य्याणामीदृशः स्यादुपक्रमः ॥ ३६ ॥

कुतस्त्वाह,—पितृपैतामहं, पितृपितामहक्रमागतम् ॥ ३१ ॥

कौशल्यासुप्रजाः । सीतास्थितिपरिज्ञानेन भवतो जीवनलाभादिदानीं कौशल्या सुपुत्रवत्यभूदिति भावः । तत्रापि हनूमतैव न तु ततोऽन्येनेत्यर्थः ॥ ३२ ॥

अस्य कर्म्मणः साधने तद्विधो हेतुरपरो न भवेन्नास्ति । इह हनूमति एतत्कार्य्यसाधिका सिद्धिर्दैवजन्या मतिश्चास्ति । हि यतः व्यवसाय उद्यमः । नेता प्रधानः ॥ ३३ ॥ ३४ ॥

अधिष्ठाता कार्य्यकरणोद्योगवान् ॥ ३५ ॥

वनभङ्गेन जानामि मधूनां भक्षणेन च।
ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे ॥ ३७ ॥
हनूमत्प्रमुखानां नदतां काननौकसाम्।
किष्किन्धामुपयातानां सिद्धिं कथयतामिव ॥ ३८ ॥
ततः श्रुत्वा निनादन्तं कपीनां कपिसत्तमः।
आयताञ्चितलाङ्गूलः सोऽभवत् हृष्टमानसः ॥ ३९ ॥
आजग्मुस्तेऽपि हरयो रामदर्शनकाङ्क्षिणः।
अङ्गदं पुरतः कृत्वा हनूमतञ्च वानरम् ॥ ४० ॥
तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मदान्विताः।
निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ ४१ ॥
हनूमांश्च महाबाहुः प्रणम्य शिरसा ततः।
नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ ४२ ॥
दृष्टा देवीति हनुमद्वदनादमृतोपमम्।
आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ॥ ४३ ॥
निश्चितार्थं ततस्तस्मिन् सुग्रीवं पवनात्मजे।
लक्ष्मणः प्रीतिमान् प्रीतो बहुमानादवैक्षत ॥ ४४ ॥

यदा हि। यत इत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥
आयताञ्चितलाङ्गूल इति स्वभावोक्तिरलङ्कारः ॥ ३९ ॥ ४० ॥ ४१

प्रीत्या च परमोपेतो राघवः परवीरहा ।
बहुमानेन महता हनूमन्तमवैक्षत ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
चतुःषष्टितमः सर्गः ॥ ६४ ॥

नियतां पातिव्रत्यसम्पन्नाम् । अक्षतां शरीरेण कुशलिनीम् ॥ ४२ ॥ ॥ ४३ ॥ ४४ ॥ ४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ।

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् ।
प्रणम्य शिरसा रामं लक्ष्मणञ्च महाबलम् ॥ १ ॥
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च ।
प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमे * ॥ २ ॥
रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनम् ।
रामे समनुरागञ्च यथा च नियमः कृतः ॥ ३ ॥
एतदाख्याय ते सर्वं हरयो रामसन्निधौ ।
वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥ ४ ॥
क्व सीता वर्त्तते देवी कथञ्च मयि वर्त्तते ।
एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ! ॥ ५ ॥

तत इति ॥ १ ॥ २ ॥

नियमो रावणकृतावधिरूपः । दशमो वर्त्तते मासो द्वौ तु शेषौ प्लवङ्गमेति सीतोक्तेः । तस्येति शेषः ॥ ३ ॥

रामसन्निधौ स्थिता इति शेषः ॥ ४ ॥ ५ ॥

---

* वचनव्यत्यय आर्षः इति भाति ।

रामस्य गदितं श्रुत्वा हरयो रामसन्निधौ।
चोदयन्ति हनमन्तं सीतावृत्तान्तकोविदम् ॥ ६ ॥
श्रुत्वा तु वचनं तेषां हनूमान् मारुतात्मजः।
प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ॥ ७ ॥
उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा।
तं मणिं काञ्चनं दिव्यं दीप्यमानं स्वतेजसा ॥ ८ ॥
दत्वा रामाय हनुमांस्ततः प्राञ्जलिरब्रवीत्।
समुद्रं लङ्घयित्वाहं शतयोजनमायतम् ॥ ९ ॥
अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया।
तत्र लङ्केति नगरी रावणस्य दुरात्मनः ॥ १० ॥
दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे।
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ॥ ११ ॥
त्वयि सन्यस्य जीवन्ती रामा राम! मनोरथम्।

चोदयन्ति प्रेरयन्ति स्म ॥ ६ ॥

सीतायै प्रणम्य। तां दिशं प्रति च प्रणम्येत्याकर्षः ॥ ७ ॥

यथा येन प्रकारेण सीताया दर्शनं जातं तत्परं वाक्यमुवाचे-त्यर्थः ॥ ८ ॥ ९ ॥

देव्या दिदृक्षया तां मार्गमाणोऽगच्छम् ॥ १० ॥

तीरे दक्षिणसमुद्रसम्बन्धिद्वीपसमुद्रतीरे ॥ ११ ॥

दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ १२ ॥
राक्षसीभिर्विरूपाभीरक्षिता प्रमदावने ।
दुःखमापद्यते देवी त्वया वीर ! सुखोचिता ॥ १३ ॥
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ।
एकवेणीधरा दीना त्वयि चिन्तापरायणा ॥ १४ ॥
अधःशय्याविवर्णाङ्गी पद्मिनीव हिमागमे ।
रावणाद्विनिवृत्तार्था मर्त्तव्यकृतनिश्चया ॥ १५ ॥
देवी कथञ्चित्काकुत्स्थ ! त्वन्मना मार्गिता मया ।
इक्ष्वाकुवंशविख्यातिं शनैः कीर्त्तयतानघ ! ॥ १६ ॥
सा मया नरशार्दूल ! शनैर्विश्वासिता तदा ।
ततः सम्भाषिता देवी सर्वमर्थञ्च दर्शिता ॥ १७ ॥
रामसुग्रीवसख्यञ्च श्रुत्वा हर्षमुपागता ।
नियतः समुदाचारो भक्तिश्चास्याः सदा त्वयि ॥ १८ ॥

हे राम रामा सा सीता त्वयि मनोरथं सम्यक् न्यस्य त्वदतिरिक्त-विषयमनोरथाभाववती भूत्वा जीवन्ती धृतप्राणा मया दृष्टा ॥ १२ ॥

सुखोचिता देवी त्वया विना दुःखमापद्यते इत्यन्वयः ॥ १३ ॥ १४ ॥

अधःशय्या भूशयना ॥ १५ ॥ १६ ॥

सर्वमर्थं रामसुग्रीवसख्यादि । दर्शिता ज्ञापिता ॥ १७ ॥

नियत इति । समुदाचारो गोचरस्खलनादिव्यवहारो भक्तिश्च त्वयि त्वय्येव सदा नियतो नान्यत्रेत्यर्थः ॥ १८ ॥

एवं मया महाभाग ! दृष्टा जनकनन्दिनी ।
उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ! ॥ १९ ॥
अभिज्ञानञ्च मे दत्तं यथावृत्तं तवान्तिके ।
चित्रकूटे महाप्राज्ञ ! वायसं प्रति राघव ! ॥ २० ॥
विज्ञाप्यः पुनरप्येष रामो वायुसुत ! त्वया ।
अखिलेन यथादृष्टमिति मामाह जानकी ॥ २१ ॥
अयञ्चास्मै प्रदातव्यो यत्नात् सुपरिरक्षितः ।
ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २२ ॥
एष चूडामणिः श्रीमान् मया ते यत्नरक्षितः ।
मनःशिलायास्तिलकं तत् स्मरस्वेति चाब्रवीत् ॥ २३ ॥
एष निर्यातितः श्रीमान् मया ते वारिसम्भवः ।
एनं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ ! ॥ २४ ॥
जीवितं धारयिष्यामि मासं दशरथात्मज ! ।

उग्रेण तपसा त्वद्भक्त्या च युक्ता ॥ १९ ॥ २० ॥

यथादृष्टं राक्षसीतर्जनादि तद्विज्ञाप्य इत्यन्वयः ॥ २१ ॥

उपशृण्वतः सुग्रीवस्य समक्षं दातव्य इत्यब्रवीदिति शेषः ॥ २२ ॥

एष, इति । दत्तत्वं पश्य । यन्मनःशिलायास्तिलकं त्वया कृतं तत् स्मरस्वेति चाब्रवीत् ॥ २३ ॥

एष वारिसम्भवो मणिर्निर्यातितः प्रेषितः एनम् एतत्त्वत्प्रेषित-मङ्गलीयकम् ॥ २४ ॥

ऊर्द्धं मासान्न जीवेयं रक्षसां वशमागता ॥ २५ ॥
इति मामब्रवीत् सीता कृशाङ्गी धर्मचारिणी ।
रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ॥ २६ ॥
एतदेव मया ख्यातं सर्वं राघव ! यद्यथः ।
सर्वथा सागरजले सन्तारः प्रविधीयताम् ॥ २७ ॥

तौ जातश्वासौ राजपुत्रौ विदित्वा
तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्या-
द्वाचा सम्पूर्णं वायुपुत्रः शशंस ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
पञ्चषष्टितमः सर्गः ॥ ६५ ॥

मासादित्यमासादूर्ध्वमादूर्द्धमित्यर्थ ॥ २५ ॥ २६ ॥
सन्तारः सन्तारोपायः प्रविधीयतां प्रविचार्य्यताम् ॥ २७ ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

# षट्षष्टितमः सर्गः ।

एवमुक्तो हनुमता रामो दशरथात्मजः ।
तं मणिं हृदये कृत्वा रुरोद सहलक्ष्मणः ॥ १ ॥
तन्तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः ।
नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २ ॥
यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला ।
तथा ममापि हृदयं मणिश्रेष्ठस्य दर्शनात् ॥ ३ ॥
मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे ।
वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते ॥ ४ ॥
अयं हि जलसम्भूतो मणिः प्रवरपूजितः ।
यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५ ॥

एवमिति ॥ १ ॥ २ ॥

वत्सस्येत्यत्रापि दर्शनादिति सम्बध्यते । तथा स्नेहात् स्रवतीत्यनुकर्षः ॥ ३ ॥

मे श्वशुरेण जनकेन वधूकाले वधूत्वसम्पादके काले विवाहकाले वैदेह्याः शिरोभूषणाय सीतामातृहस्तात् गृहीत्वा दशरथहस्ते दत्तम् । तच्च तस्मिन् काले यथाधिकं शोभते तथा मूर्ध्नि बद्धमित्यर्थः ॥ ४ ॥

जनकस्याप्येतदागमः कुतस्तत्राह,—अयं हीति । प्रवरैः श्रेष्ठैर्देवैः पूजितः ॥ ५ ॥

इमं दृष्ट्वा मणिश्रेष्ठं तथा तातस्य दर्शनम्।
अद्यास्म्यवगतः सौम्य! वैदेहस्य तथा विभोः॥ ६॥
अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः।
अद्यास्य दर्शने नाहं प्राप्तां तामिव चिन्तये॥ ७॥
किमाह सीता वैदेही ब्रूहि सौम्य! पुनः पुनः।
परासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा॥ ८॥
इतस्तु किं दुःखतरं यमिमं वारिसम्भवम्।
मणिं पश्यामि सौमित्रे! वैदेहीमागतं विना॥ ९॥
चिरं जीवति वैदेही यदि मासं धरिष्यति।
क्षणं वीर! न जीवेयं विना तामसितेक्षणाम्॥ १०॥
नय मामपि तं देशं यत्र दृष्टा मम प्रिया।
न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च॥ ११॥

तथा यथा सीतादर्शनम् अवगतः प्राप्तस्तथा तातस्य दशरथस्य प्राप्तः तद्धस्ते जनकेन दानात्तस्य स्मरणं तथा वैदेहस्य राज्ञो जनकस्य सपत्नीकस्य दर्शनं प्राप्त इत्यर्थः॥ ६। ७॥

परासुं मूर्च्छितं मां जीवनाय वाक्यवारिणा सिञ्चन्ती किमाह,— तद्ब्रूहि। ८।

वैदेहीं विना आगतं मणिं पश्यामि इतः किं दुःखतरम्॥ ९।

यदि मासं धरिष्यति जीविष्यति तदा चिरं जीवति जीविष्यतीत्यर्थः। तां विना यथाहं न जीवेयम्। तथा मां विना सापि न जीविष्यतीत्यर्थः। १०।

कथं सा मम सुश्रोणी भीरुभीरुः सती तदा ।
भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥ १२ ॥
शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः ।
आवृतो वदनं तस्या न विराजति साम्प्रतम् ॥ १३ ॥
किमाह सीता हनुमंस्तत्त्वतः कथयस्व मे ।
एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ १४ ॥
मधुरा मधुरालापा किमाह मम भामिनी ।
मद्विहीना वरारोहा हनूमन् ! कथयस्व मे ।
दुःखाद्दुःखतरं प्राप्य कथं जीवति जानकी ॥ १५ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
षट्षष्टितमः सर्गः ॥ ६६ ॥

प्रवृत्तिमुपलभ्य क्षणमपि न तिष्ठेयं स्थातुं न शक्यमित्यर्थः ॥ ११ ॥

भीरुभीरुः अत्यन्तभीरुः ॥ १२ ॥

अम्बुदैरावृतस्तिमिरोन्मुक्तः शारदश्चन्द्र इव तस्या वदनं न राजति ॥ १३ ॥

एतेन तद्वाक्यश्रवणरूपेण ॥ १४ ॥

मधुरा मधुराकारा ॥ १५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः।

एवमुक्तस्तु हनुमान् राघवेण महात्मना।
सीताया भाषितं सर्वं न्यवेदयत राघवे॥ १॥
इदमुक्तवती देवी जानकी पुरुषर्षभ!।
पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम्॥ २॥
सुखसुप्ता त्वया सार्द्धं जानकी पूर्वमुत्थिता।
वायसः सहसोत्पत्य विददार स्तनान्तरम्॥ ३॥
पर्य्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रज!।
पुनश्च किल पक्षी स देव्या जनयति व्यथाम्॥ ४॥
ततः पुनरुपागम्य विददार भृशं किल।
ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः॥ ५॥
वायसेन च तेनैवं सततं बाध्यमानया।
बोधितः किल देव्या त्वं सुखसुप्तः परन्तप!॥ ६॥
तांश्च दृष्ट्वा महाबाहो! दारितांश्च स्तनान्तरे।
आशीविष इव क्रुद्धस्ततो वाक्यं त्वमूचिवान्॥ ७॥

यथातथं यथापूर्वं वृत्तं तथोक्तवती॥१॥२॥३॥४॥५॥६॥७॥

नखाग्रैः केन ते भीरु ! दारितं वै स्तनान्तरम्।
कः क्रीड़ति सरोषेण पञ्चवक्त्रेण भोगिना ॥ ८ ॥
निरीक्षमाणः सहसा वायसं समुदैक्षथाः।
नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ ९ ॥
सुतः किल स शक्रस्य वायसः पततां वरः।
धरान्तरगतः शीघ्रं पवनस्य गतौ समः ॥ १० ॥
ततस्तस्मिन् महाबाहो ! कोपसंवर्त्तितेक्षणः।
वायसे त्वं व्यधाः क्रूरां मतिं मतिमतां वर ! ॥ ११ ॥
स दर्भसंस्तरात् गृह्य ब्रह्मास्त्रेण न्ययोजयः।
स दीप्त इव कालाग्निर्जज्वालाभिमुखं खगम् ॥ १२ ॥
स त्वं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति।
ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम च ॥ १३ ॥
भीतैश्च संपरित्यक्तः सुरैः सर्वैश्च वायसः।
त्रीन् लोकान् संपरिक्रम्य त्रातारं नाधिगच्छति ॥ १४ ॥
पुनरप्यागतस्तत्र त्वत्सकाशमरिन्दम !।

दारितं दारितमित्यर्थः ॥ ८ ॥ ९ ॥
धरान्तरगतः पातालस्थः ॥ १० ॥
व्यधाः अकथाः ॥ ११ ॥
दर्भसंस्तरादेकं कुशं गृह्य गृहीत्वेत्यर्थः ॥ १२ ॥

त्वं तं निपतितं भूमौ धरण्यां शरणागतम् ॥ १५ ॥
बधार्हमपि काकुत्स्थ ! कृपया परिपालयः।
मोघमस्त्रं न शक्यन्तु कर्त्तुमित्येव राघवः॥ १६ ॥
ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम्।
वायसस्त्वां नमस्कृत्य राज्ञो दशरथस्य च ॥ १७ ॥
विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम्।
एवमस्त्रविदां श्रेष्ठः सत्ववान् शीलवानपि ॥ १८ ॥
किमर्थमस्त्रं रक्षःसु न योजयसि राघव !।
न दानवा न गन्धर्वा नासुरा न मरुद्गणाः ॥ १९ ॥
तव राम ! रणे शक्तास्तथा प्रतिसमासितुम्।
तव वीर्य्यवतः कच्चित् मयि यद्यस्ति सम्भ्रमः ॥ २० ॥
क्षिप्रं सुनियतैर्बाणैर्हन्यतां युधि रावणः।
भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परन्तपः ॥ २१ ॥
स किमर्थं नरवरो न मां रक्षति राघवः।
शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥ २२ ॥

क्षिप्तेप क्षिप्तेपिय। आर्षप्रयोगः ॥ १३ ॥ १४ ॥ १५ ॥

परिपालयः पर्य्यपालयः शरीरावधेनेति भावः। इत्येवेति हेतोः ॥ १६ ॥

ततस्तदा गमनोत्तरं हिनस्ति स्म अहिनः ॥ १७ ॥ १८ ॥ १९ ॥

सुराणामपि दुर्द्धर्षौ किमर्थं मामुपेक्षितः ।
ममैव दुष्कृतं किञ्चिन्महदस्ति न संशयः ॥ २३ ॥
समर्थौ सहितौ यन्मां न रक्षेते परन्तपौ ।
वैदेह्या वचनं श्रुत्वा करुणं साधुभाषितम् ॥ २४ ॥
पुनरप्यहमार्य्यां तामिदं वचनमब्रुवम् ।
त्वच्छोकविमुखो रामो देवि ! सत्येन ते शपे ॥ २५ ॥
रामे दुःखाभिभूते च लक्ष्मणः परितप्यते ।
कथञ्चिद्भवती दृष्टा न कालः परिशोचितुम् ॥ २६ ॥
इदं मुहूर्त्तं दुःखानामन्तं द्रक्ष्यसि भामिनि ! ।
तावुभौ नरशार्दूलौ राजपुत्रौ परन्तपौ ॥ २७ ॥
त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ।
हत्वा च समरे रौद्रं रावणं सहबान्धवम् ॥ २८ ॥
राघवस्त्वां वरारोहे स्वपुरीं नयिता ध्रुवम् ।
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥ २९ ॥

हे राम रक्षो तव त्वां प्रति समासितुं न शक्तोः तथा तद्दत्काका-दित्यर्थः । सम्भ्रमः आदरः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

त्वच्छोकविमुखः त्वच्छोकेन कार्य्यान्तरविमुखः । २५ ।

भवती मया दृष्टा अतःपरं परिशोचितुं न कालस्तवयोग्य इति शेषः ; चिरं लङ्कायाम् आसितुं न कालोऽयोग्य इति पाठान्तरेऽर्थः ॥२६॥

इदं मुहूर्त्तम् अस्मिन्नेव मुहूर्त्ते इत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥

प्रीतिसञ्जननं तस्य प्रदातुं तं त्वमर्हसि।
साभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथनमुत्तमम् ॥ ३० ॥
मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल!।
प्रतिगृह्य मणिं दोर्भ्यां तव हेतो रघुप्रिय! ॥ ३१ ॥
शिरसा संप्रणम्यैनामहमागमने त्वरे।
गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥ ३२ ॥
विवर्धमानञ्च हि मामुवाच जनकात्मजा।
अश्रुपूर्णमुखी दीना बाष्पगद्गदभाषिणी ॥ ३३ ॥
ममोत्पतनसम्भ्रान्ता शोकवेगसमाहता।
मामुवाच ततः सीता सभाग्योऽसि महाकपे! ॥ ३४ ॥
यद्द्रक्ष्यसि महाबाहुं रामं कमललोचनम्।
लक्ष्मणञ्च महाबाहुं देवरं मे यशस्विनम् ॥ ३५ ॥
सीतयाप्येवमुक्तोऽहमब्रुवं मैथिलीं तथा।
पृष्ठमारोह मे देवि! क्षिप्रं जनकनन्दिनि! ॥ ३६ ॥
यावत्ते दर्शयाम्यद्य ससुग्रीवं सलक्ष्मणम्।
राघवञ्च महाभागे! भर्त्तारमसितेक्षणे! ॥ ३७ ॥
साब्रवीन्मां ततो देवी नैष धर्मो महाकपे!।

वेण्युद्ग्रथनं वेण्याद्ग्रन्थनयोग्यम् ॥ ३० ॥ ३१ ॥
त्वरे त्वरावान् जात इत्यर्थः ॥ ३२ ॥

यत्ते पृष्ठं सिषेवेऽहं स्ववशा हरिपुङ्गव ! ॥ ३८ ॥
पुरा च यदहं वीर ! स्पृष्टा गात्रेषु रक्षसा ।
तत्राहं किं करिष्यामि कालेनोपनिपीड़िता ॥ ३९ ॥
गच्छ त्वं कपिशार्दूल ! यत्र तौ नृपतेः सुतौ ।
इत्येवं सा समाभाष्य भूयः सन्देष्टुमास्थिता ॥ ४० ॥
हनूमन् ! सिंहसङ्काशौ तावुभौ रामलक्ष्मणौ ।
सुग्रीवञ्च सहामात्यं सर्वान् ब्रूया अनामयम् ॥ ४१ ॥
यथा च स महाबाहुर्मां तारयति राघवः ।
अस्माद्दुःखाम्बुसंरोधात् तत्त्वमाख्यातुमर्हसि ॥ ४२ ॥
इदञ्च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनञ्च ।
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ! ॥ ४३ ॥
एतत्तवार्य्या नृपसंयता सा सीता वचः प्राह विषादपूर्वम् ।
एतच्च बुध्वा गदितो यथा त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥४४॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
सप्तषष्टितमः सर्गः ॥ ६७ ॥

विवर्धमानं समुद्रतरणायेति शेषः ॥३३॥३४॥३५॥३६॥३७॥३८॥
कालेनोपनिपीड़िता परायत्तेति शेषः ॥३९॥४०॥४१॥४२॥४३॥४४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

## अष्टषष्टितमः सर्गः ।

अथाहमुत्तरं देव्या पुनरुक्तःससम्भ्रमम् ।

तव स्नेहान्नरव्याघ्र ! सौहार्द्दादनुमान्य च ॥ १ ॥

एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया ।

यथा मां प्राप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २ ॥

यदि वा मन्यसे वीर ! वसैकाहमरिन्दम ! ।

कस्मिंश्चित् संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥

मम चाप्यल्पभाग्यायाः सान्निध्यात्तव वानर ! ।

अस्य शोकविपाकस्य मुहूर्त्तं स्याद्विमोचनम् ॥ ४ ॥

गते हि त्वयि विक्रान्त ! पुनरागमनाय वै ।

प्राणानामपि सन्देहो मम स्यान्नात्र संशयः ॥ ५ ॥

तव स्नेहान्मयि सौहृदात् सुहृद्भावात् मामनुमान्य सम्मान्य संसम्भ्रमो गन्तुं सत्वरोऽहम् उत्तरं कार्य्यं प्रति पुनः पुनरुक्तः ॥ १ ॥

यथा मां प्राप्नुयात्तथा वक्तव्येति शेषः ॥ २ ॥ ३ ॥

एकदिनवासफलमाह,---मम चेति । तव सान्निध्यादल्पभाग्यायाः ममास्य महतः शोकविपाकस्य शोकरूपस्य पापफलस्य मुहूर्त्तं मोक्षणं स्यादित्यन्वयः ॥ ४ ॥

तवादर्शनजश्चापि भयं मां परितापयेत् ।
दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६ ॥
अयञ्च वीर! सन्देहस्तिष्ठतीव ममाग्रतः ।
सुमहांस्त्वत्सहायेन हर्य्यृक्षेषु असंशयः ॥ ७ ॥
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् ।
तानि हर्य्यृक्षसैन्यानि तौ वानरवरात्मजौ ॥ ८ ॥
त्रयाणामेव भूतानां सागरस्येह लङ्घने ।
शक्तिः स्याद्वैनतेयस्य वायोर्वा तव चानघ! ॥ ९ ॥
तदस्मिन् कार्य्यनिर्य्योगे वीरैवं दुरतिक्रमे ।
किं पश्यसि समाधानं ब्रूहि वाक्यविदां वर! ॥ १० ॥
काममस्य त्वमेवैकः कार्य्यस्य परिसाधने ।
पर्य्याप्तः परवीरघ्न! यशस्यस्ते बलोदयः ॥ ११ ॥
बलैः समग्रैर्यदि मां हत्वा रावणमाहवे ।

पुनरागमनाय प्रतीक्षमाणाया मम प्राणानामपि सन्देहः स्यादिति योजना ॥ ५ ॥ ६ ॥

उत्तरकार्य्यविषयामुक्तिमाह,—अयञ्चेति । असंशयः बाधकसंशयरहितः ॥ ७ ॥

सन्देहमेवाह,—कथं न्विति ॥ ८ ॥ ९ ॥ १० ॥

यद्यपि त्वमेव पर्य्याप्तः सकलराक्षसवधपूर्वं मन्नयने इति शेषः । तथापि ईदृशो बलोदयस्तवैव यशस्यो यशोवर्धकः स्यात् ॥ ११ ॥

विजयी स्वपुरीं रामो नयेत्तत् स्याद्यशस्करम् ॥ १२ ॥
यथाहं तस्य वीरस्य वनादुपधिना हृता।
रक्षसा तद्भयादेव तथा नार्हति राघवः ॥ १३ ॥
बलैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४ ॥
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः।
भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५ ॥
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम्।
निशम्याहं ततः शेषं वाक्यमुत्तरमब्रुवम् ॥ १६ ॥
देवि! हर्य्यृक्षसैन्यानामीश्वरः प्लवतां वरः।
सुग्रीवः सत्त्वसम्पन्नस्त्वदर्थे कृतनिश्चयः ॥ १७ ॥
तस्य विक्रमसम्पन्नाः सत्त्ववन्तो महाबलाः।
मनःसङ्कल्पसदृशा निदेशे हरयः स्थिताः ॥ १८ ॥
येषां नोपरि नाधस्तान्न तिर्य्यक् सज्जते गतिः।
न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ १९ ॥
असकृत्तैर्महाभागैर्वानरैर्बलसंयुतैः।

यदि तु रामो रावणं हत्वा मां नयेत् तदा तन्नयनं तस्य यशस्करं स्यात्। अतस्तेनैवागत्य मोचनं युक्तमिति भावः ॥ १२ ॥

उपधिना छलेन ॥ १३ ॥ १४ ॥

यथा तस्यानुरूपं विक्रान्तं भवति तथा त्वमेवोपपादय ॥ १५ ॥

प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ २० ॥
मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥ २१ ॥
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ २२ ॥
तदलं परितापेन देवि ! मन्युरपैतु ते ।
एकोत्पातेन ते लङ्कामेष्यन्ति हरियूथपाः ॥ २३ ॥
मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४ ॥
अरिघ्नं सिंहसङ्काशं क्षिप्रं द्रक्ष्यसि राघवम् ।
लक्ष्मणञ्च धनुष्मन्तं लङ्काद्वारमुपागतम् ॥ २५ ॥
नखदंष्ट्रायुधान् वीरान् सिंहशार्दूलविक्रमान् ।
वानरान् वानरेन्द्राभान् क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥ २६ ॥
शैलाम्बुदनिकाशानां लङ्कामलयसानुषु ।
नर्द्दतां कपिमुख्यानां न चिराच्छ्रोष्यसे स्वनम् ॥ २७ ॥
निवृत्तवनवासञ्च त्वया सार्द्धमरिन्दमम् ।
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८ ॥

शेष श्लिष्टम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥
मन्युर्दैन्यम् ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥ २८

ततो मया वाग्भिरदीनभाषिणी
शिवाभिरिष्टाभिरभिप्रसादिता।
उवाह शान्तिं मम मैथिलात्मजा
तवातिशोकेन तथातिपीड़िता ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये सुन्दरकाण्डे
अष्टषष्टितमः सर्गः ॥ ६८ ॥

एवमुक्ता मदुक्त्या श्रुतेन त्वच्छोकेनातिपीड़िताप्यदीनभाषिणी सा मया शिवाभिर्वाग्भिरभिप्रसादिता शान्तिं दुःखनिवृत्तिम् उवाह प्रापेत्यर्थः ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
सुन्दरकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

इति सुन्दरकाण्डं सम्पूर्णमस्तु।